अन्यत्र वृक्षाद्वाल्मीकाद्वा[1] । ६ ।

दे० । वृक्षादिकमाश्रयेदित्यर्थः । वाल्मीकं वल्मीकभूम्यादि[2] ॥

आ० । अनिलय एव स्याद्वृक्षवल्मीकं वर्जयित्वा ॥

नैस्तान्तव प्रविशेत्[3] । ७ ।

दे० । तन्तुर्वेणुरिति केचित् । शीघ्र्याद्युपहतो वंशनिर्मितव्यतिरेकेणाश्रयान्तरं विशेत् । रज्जुस्तन्तुरित्यन्ये । रज्ज्वादिबन्धैर्यन्निवृत्तं[4] शालादि तत्तान्तवम् ॥

आ० । निस्तान्तवं प्रविशेदित्येके मन्यन्ते । प्रतिप्रविशेदिति सिंहावलोकितन्यायेन प्रतिप्रसूयते ॥

यथोक्तमेकं तु वासः शाणी[5] कुतपं वा । ८ ।

दे० । यत्पूर्वमुक्तम्[6] एकं वासस्तदत्रापि । इयांस्तु विशेषः । इह शाणी कुतपं वा । शाणी बरासी[7] । सा पुनः क्षौमीति प्रसिद्धा । क्लिन्नकुट्टितदर्भनिर्मितेति[8] त्वन्ये । अजलोमनिर्मितं कुतपम् ॥

आ० । यथोक्तमेकं तु वासः अजिनमेव । तु शब्दो ऽवधारणार्थे । वासो ऽवधार्यते । शाणी बरासी । कुतपं पर्वतीयच्छागरोमकृतं वासः ॥

परिमितमुरः प्रमाणमुपरिजानु । ९ ।

दे० । उरस आरभ्य जानुनोरुपरिभागं यावद्व्याप्नोति तावत्परिमितमेतत्कर्तव्यम् ॥

---

1. Thus DT; A (text and everywhere comm.): वलीकाद् instead of वाल्मीकाद and thus also the Bombay copy of Br.; वाल्मीकान् the Paris. and Stein ṛcakas; वल्मीकाद्वा (better reading ? ) the Lahore copy of Br. and the Bombay ṛcaka. 2. वा० T. 3. Was the original reading निस्तान्तवः nom. sing. masc. ) इति ? See Sāmavidh. br. II. 4. 9. 4. R. निवृत्तं 5. शणीचीरं the Lahore copy of Br. and the Bombay and Stein ṛicakas. 6. See I. 2. 7. बरासी the Mss. 8. Instead of I Ad : क्लिन्न; is कुट्टित to be emended into कुट्टित ?

आ० । [illegible] ।

चतुर्थकालपानभक्षः ।१० ।

दे० । सायंप्रातर्मनुष्याणामशनं देवनिर्मितमिति भोजनकालः । तत्र प्रथ[illegible] सायंप्रातर्लक्षणं कालद्वयं । द्वितीयदिनस्य च प्रातःकालं वर्जयित्वा सायं चतुर्थे काले भोजनपेयपाने कुर्यादित्येके। एकव्यवधानेनैककालं[1] भुञ्जीतेत्यर्थः । अन्ये त्वाहुः । पीयत इति पानं क्षीरतक्रादि । तदेवं चतुर्थकाले पश्चिमप्रहरे भक्षो ऽस्येति। क्षीरादिपाने च भक्षशब्दो दृष्टः। अब्भक्षो वायुभक्ष[2] इति॥

आ० । चतुर्थे चतुर्थे पानकाले भोजनकाले भक्षो यस्य स तथोक्तः । भोजनपानशब्दे प्रतीच्या व्यवहरन्ति । सायंप्रातःपरिकल्पनया त्रीन्पानकालान्परित्यज्य चतुर्थे भक्षयतीत्यर्थः ॥

असञ्चयवान् । ११ ।

दे० । हिरण्यादिसंचयं न कुर्वीतेत्यर्थः ॥

आ० । भिक्षित्वा संचयं न कुर्यात् ॥

अहरहर्वा भैक्षमश्नीयात् । १२ ।

दे० । भिक्षाणां समूहो भैक्षं । पूर्वेण[3] भिक्षाणामपि संचयस्य प्रतिषेधे प्राप्ते प्रतिप्रसवो ऽनेन[3] क्रियते । प्रतिदिनं भैक्षमश्नीयात् । शरीरापाटवे तु कदाचिदेकामपि भिक्षामश्नीयात्। अटितुमशक्तः सक्तुकणिकादिकं वा तावन्मात्रं संचिनुयादित्यनेनाभिप्रायेण वा शब्दः ॥

अहस्तिष्ठेद्रात्रावासीत । १३ ।

दे० । कालाध्वनोरत्यन्तसंयोगे[4] ऽहः शब्दाद्द्वितीया । अहनि तिष्ठेदेव । ऊर्ध्व एवासीतेत्यर्थः । रात्रावासीत । उपविष्टो ऽतिश्रान्तः सुप्यादपि । अत्यन्तसंयोगाभावात् ॥

आ० । अहः सर्वं तिष्ठेद्द्वितीयात्यन्तसंयोगः । रात्रावासीत । अनत्यन्तसंयोगात् श्रान्तः स्वपेदपि ॥

---

1. एकदिनव्यवधा° AT. 2. Cp. Mahābhāsya p. 6. l. 19 (Kielhorn's ed.) 3. Viz. सूत्रेण. 4. Pān. II. 3. 5.

**उभयं मुनिव्रतः स्यात् ।१४।**

दे०। उभयमहोरात्रं भूतसाम्यं मौनं वाक्संयमं कुर्यात्। मुनीनां व्रतमेतत्। किमेतत्सर्वविषयं च मतं। अन्यप्रकारेण। अहश्च रात्रिं च वाक्संयमी स्यात्॥

आ०। उभयमहोरात्रं मुनिव्रतः स्यात्। वाग्यत इत्यर्थः॥

**स्त्रीशूद्रपतितरभसरजस्वलैर्वा न संभाषेतेति[1] च्यवनो भृगुः।१५।**

दे०। भार्गवस्तु च्यवनो मन्यते। स्त्र्यादिभिरेव न संभाषेत। न तु सर्वैः। संभाषयेदिति स्वार्थे णिच्[2]। रामो राज्यमकारयदितिवत्[3]। पतितास्त्रैवर्णिका अपि। रभसा अपृष्टवक्तारः। भण्डवन्दिप्रभृतयः। रजस्वलास्तु ये रक्तेन शरीरमवलिप्य[4] भोजनादिकमुद्ग्राहयन्ति। भूतवरप्रभृतयः॥

आ०। स्त्र्यादिभिरेव न संभाषेतेति च्यवनो भार्गवो मन्यते। पतिताभिर्द्विजातिभिरपि। रभसा भासकाः। रजस्वला ये रजसा रुधिरेणात्मानमङ्कयित्वा भिक्षादि दापयन्ति॥

**द्वादशरात्रं वोभयत्र।१६।**

दे०। देशकालशक्त्यपेक्षयोभयतो ऽस्य संवत्सरव्रतस्याद्यन्तयोर्द्वादशरात्रं वा मुनिव्रतः स्यात्॥

आ०। द्वादशरात्रं वोभयतः संवत्सरस्याद्यन्तयोः[5] स्थानासनं मुनिव्रतं च॥

**अमावस्यां पौर्णमासीं च।१७।**

दे०। पौर्णमासीममावस्यां च। तेन संवत्सरमध्ये ऽष्टाचत्वारिंशद्दिनानि भवन्ति। उपक्रमोपसंहारयोः द्वादश पौर्णमास्या द्वादशामावस्याः॥

आ०। एवमेतदष्टाचत्वारिंशत्संवत्सरिकेण ब्रह्मचर्येण संमितं। अत्रा

---

1. संभाषयेदिति T D and first hand of A; संभाषयेतेति the Lahore copy of Br. 2. Comm. on Taitt. Prātiś. II. 17. It seems, then, that Devapāla's reading was संभाषयेत् 3. Rām. VI. 128. 104. (ed. Bombay). 4. शरीरमनु° D. 5. °रस्यात्यन्तयोः the Ms.

ष्टाचत्वारिंशद्वार्षिकमित्येतद्व्रतम् ॥

पालाश्यः[1] समिधो नित्याः परिधिवृक्षाणां वा । १८ ।

दे० । या ब्रह्मचारिणा नित्याः समिधस्ता इह पालाश्यः । पालाशालाभे प्रतिनिधः । प्रतिनिधाने च परिधिवृक्षाणां संबन्धिन्यो ग्राह्याः । परिधिवृक्षाश्च यूप्याः बिल्वखदिरपलाशरौहीतकौदुम्बरबदरप्रभृतयः[2] । ब्राह्मणं च[3] । बैल्वो वा खादिरो वा पालाशो वा रौहीतको वा सौम्यस्याध्वरस्य यूपः स्यात् । औदुम्बरो यूपो भवति खादिरे बध्नाति पालाशे बध्नाति रौहीतके बध्नातीति श्रुतेः । याज्ञिया वा सर्वे परिधिवृक्षाः । श्रूयते हि तस्येन्द्रो यज्ञियेभ्यो वृक्षेभ्यः परिधीनाजहारेति[4] ॥

आ० । नित्या याः समिधो ब्रह्मचारिणस्ताः पलाश्यः[5] । अलाभे परिधिवृक्षाणां वा । परिधिवृक्षा यूप्या यज्ञिया[6] वा । तस्येन्द्रो[6] यज्ञियेभ्यो वृक्षेभ्यः परिधीनाजहारेति दर्शनात् ॥

मेधां मह्यमिति[7] पाणिमार्गं[8] दत्त्वा त्रिषवणमहोरात्रमुदकोपस्पर्शनं । १९ ।

दे० । कुर्यादिति शेषः । मेधां मह्यमङ्गिरस इत्यादिभिर्मन्त्रैः । द्वाभ्यां

---

1. पालाश्या: here and infra T; Ād. and the Bombay copy of Br.; पलाश्य: ; the Lahore copy of Br. and the Bombay ṛcaka : पालाश ? 2. T and first hand of A : खदिरोदुम्बररोहितक ( रौहीतकौ ) बधर (बदिर A) प्रभृतय: • 3 The passage beginning ब्राह्मणं च up to यूप: स्यात् is missing in T and added in A on the margin The Brāhmana is not found in the printed text of the Kāṭhaka. 4. Thus AT; the śruti runs according to D : तस्येन्द्र: परिधीर्यज्ञियेभ्यो वृक्षेभ्य आदायेति ; after these words D has a passage, not given by A T, from which I cite only : प्रकृतौ चोक्तं । उपसत्सु यूपकर्मेति. Is prakṛti here equivalent with Vaitānikasūtra ? 5. R. पालाश्य: 6. यज्ञिया: । वातस्येन्द्र the Ms. 7. At XLI. 18 these mantras, indicated here by the pratīka, are given in full. 8. Thus Br. (both copies), the Bombay and Stein ṛcakas, the Parisian ṛcaka, and of the Mss. of Devapāla D and first hand of A; पाणिना मार्गे T and third hand of A.

नाभेरारभ्योर्ध्वं ... द्वारपर्यन्तं मार्जनं[1] निघर्षणात्मकं कृत्वा नाभेरूर्ध्वं पा... ... मात्रेति स्मृतेः प्रातःसवने माध्यन्दिन-सवने तृतीयसवन इति सवनत्रये अपि रात्रिभागत्रये ऽप्येवमु-दकोपस्पर्शनं कुर्यात्। स्नानमिहोपस्पर्शनं। उपस्पर्शनशब्दो ह्याचमनस्पर्शनस्नानेषु दृष्टः। उपस्पृश्य स्वस्त्ययनं भवतीत्याद्याचमने। ......उपस्पृश्य सोममालभेरन्नित्यत्र स्पर्शे। आलभ्य चोपस्पृशेदित्यत्राप्युदकाचमनमात्रे। रथ्यादावुप-स्पृशेदित्यादौ स्नाने॥

आ०। मेधां मह्यमित्यनुवचनीयैः[2] संवत्सरमनुत्सृज्य[3] उदकमुप-स्पृशेत्। स्नायादित्यर्थः। अहोरात्रमध्ये त्रिषवणम्॥

नमो हमाय मोहमायाय ... सवनम्। नमो[4] हमाय मोहमायाग्रये[4] वै ... वानराय तपाय ताप ... य तपन्ताय[5] विन्दवे विन्दवे ... विन्दाय[6] सर्वविन्दाय नमः पारा-य[7] ... पाराय[8] पारयन्ताय[9] नम ... य ... न्याय[10] नम ... च्यवनाय भार्गवायेत्येता एव दे... नु-दकेन। २०।

1. This mārjana seems to explain the word mārga of the Sūtra Perhaps the original Sūtra text had mārja. 2. Could this expression refer to XLI. 18 ? Then the citation by pratīka would be accountable. 3. उत्सृज्य (śāradā !) the ms. 4. The words नमो up to मोहमाय not found in the copies of Dev Both the copies of Br. have them as also the Stein ṛcaka 5 Only the Bombay ms. of Br. and of the Mss. of Dev. T have तपान्ताय. 6. वसुविन्दवे D and second hand of A; वसुविन्दम् the Bombay copy of Br. (The Lahore ms. is here incomplete). 7. पराय Br. and first hand of D. 8. सुपराय A. 9. पारयन्त्याय Br., Stein and Bombay ṛcakas and of the mss. of Devapāla A After this word D and A (sec. hand) insert शान्ताय, not found in Br. and not commented upon by Dev. 10. सो° first hand of A. For the mantras cp. Gautama dhs. XXVI. 12, Sāma-vidh. br. I 2 5.

दे० । एता एव देवता उदकेन तर्पयन्नमः [illegible]-भिरुपस्पर्शनं [illegible]र्यादिति संबन्धः ॥

आ० । नमो [illegible]मायेत्यनुसवनं नमस्कारान्तैश्चतुर्भिरादित्योपस्थानं । एता एव देवतास्त[illegible]न स्नायादित्यर्थः ॥

एष[1] संवत्सरं चरित्वा विमलो विपापो भवति । २१ ।

दे० । एष ब्रह्मचारी स्नातको वा प्रकृतः संवत्सरमुक्तं व्रतं चरित्वा विमलो रागादिमलशून्यो विगतपापश्च भवति ॥

आ० । एष संवत्सरः[2] एवंरूपः एवं चरित्वा । विमलः । विगतचित्र-मलः । विगतपापश्च ॥

सर्वेषां वेदानां चरितब्रह्मचर्यो यदि नान्य[illegible]रुते । २२ ।

दे० । यद्यन्यद्व्रतं वेदाध्ययनकाले न कुरुते तदास्यस्मिंस्तत्प्रतिनि-धिभूते संवत्सरव्रते कृते सति चतुर्णामपि वेदानामधीतानां चरितब्रह्मचर्यः संपद्यते । व्रतपरिपूर्णं वेदचतुष्टयाध्ययनमस्य संपद्यत इत्यर्थः । ये तु स्वतन्त्रमेवेदं संवत्सरव्रतं त्रैविद्यकस्य तपोऽतिशयार्थं वर्णयन्ति त एवं व्याचक्षते । पूर्वेण सहा-[illegible] । एष संवत्सरं चरित्वा सर्वेषां वेदानां चरित-व्रतः सन्विमलो विपापश्च भवति । यदि तन्मध्ये निषिद्धा-चरणं न कुरुते ॥

स तु खलु चरितब्रह्मचर्यो दश दश पुरुषान्पुनाति पू-र्वाप[illegible]नात्मानं चैकविंशं पंक्तिं च यावद्[illegible]पश्याते य[illegible]ामुपविशाते ।२३ ।

दे० । तु शब्दः फलान्तरसमुच्चये । खलु निश्चये । ……यान्पश्यति तानपंक्तिपावनानपि पंक्तिपावनान्करोति तपोबलात् । यांश्चै-कपंक्त्युपविष्टांश्च पश्यति तानपि पावयति ॥

आ० । दश दश पुरुषान्पुनाति । [illegible]र्वान्पित्रादीन् । अपरा[illegible] । आत्मानं चैकविंशं । पंक्तिं च पुनाति । [illegible]याते या-वद्दृष्टिगोचरं । कांचित्पंक्तिं यस्यामुपविशति [illegible]जनाथम् ॥

---

1. एवं of the Mss. of Devapāla D only, and the Parisian reaka, but cp. the bhāsya    2 Thus the Ms.

संमाप्त एतासामेव[1] देवतानामन्नस्य जुहोति । २४ ।

दे० । एतस्मिन्व्रते समाप्ते पूर्वोक्तदेवताभ्यो ऽन्नं जुहोति तण्डुललक्षणं स्थालीपाकं वा । ......अन्नशब्दो हि कृते चाकृते च विपक्वे च दृष्टः । ह्रीषिति निधनं कुर्यादन्नकामायेत्यकृतवचनः[2] । अन्नं प्रयौति घृतं मधु तण्डुलानित्यादौ कृतवचनः । यो ऽन्नमश्नीयादित्यादौ विपक्ववचनः ॥

आ० । समाप्ते संवत्सरे एतासामेव देवतानां प्राकृतानामन्नस्य कृताकृतस्य वा स्थालीपाकश्रवणातुत्प्राभावः[3] । न च सर्वदेवताश्चेति तन्त्रं । अपि तु हस्तेनैव तण्डुलादेश्चतस्र आहुतीर्जुहोति ॥

धेनुर्दक्षिणा । २५ ॥ ४ ॥ (१४)

आ० । आचार्याय । प्रक्रान्तत्रैविद्यस्यैतद्भवति । तेनात्रारम्भे न व्रतोपयनं न होमः ॥

दे० । येनाधीयानेन यथाविहितव्रतानि[4] नानुष्ठितानि नापि संवत्सरव्रतं पश्चात्तं प्रति प्रायश्चित्तान्तरं स्वतन्त्रं[5] तपो ऽन्तरं पूर्ववत्कृच्छ्रादिकमाह ॥

---

कृच्छ्रविधिं[6] व्याख्यास्यामः । १ ।

दे० । कृतमकुशलं विहिताकरणप्रतिषिद्धसेवनलक्षणं कर्म छिन्दन्तीति[7] कृच्छ्राः[7] । तथानन्तरं वक्ष्यति[8] सर्वाकुशलमोक्षायेति । गौतमो ऽप्याह । अथैतांस्त्रीन्कृच्छ्रांश्चरित्वा सर्वेषु वेदेषु स्नातो[9] भवति सर्वेषु तीर्थेषु स्नातो भवति[10] । त्रीनिति कृच्छ्र-

---

1. समाप्त एवैतासामेव D and second hand of A: एव एतासामेव the Bombay ṛcaka. 2. Cp. Pañc. br. VIII. 8. 19. 3. Thus the Ms. 4. °हितं व्रतानि AT. 5. T ins. वा. 6. Before कृ° the copies of Devapāla have all: अथ, it is missing in Br. and Ād.; cp. note. 7. छिन्दतीति कृच्छ्रः T. 8. See V. 10. 9. ज्ञातो D; सर्ववेदेषु स्नातो A. 10. The last words not in T; they differ from Stenzler's Text Gaut. XXVI. 24.

महाकृच्छ्रतप्तकृच्छ्रान्[1] ।...१...कृच्छ्रस्य विधिः प्रभाव इति-कर्तव्यता कृच्छ्रविधिः । तां वक्ष्याम इति शिष्यबुद्धिसमाधानार्थमिदं वाक्यम् ॥

आ० । कृच्छ्रविधिं व्याख्यास्यामः । अध्ययनविधेरनन्तरं वास्तुकरणं वक्तव्यं । कः प्रसङ्गः । कृच्छ्रविधेरित्याशङ्कया मुच्यते । येन यथा कथंचिद्वेदा अधीता नाष्टाचत्वारिंशत्संमितं व्रतं कृतं तस्यैतान्यध्ययनाधिकाराय[2] कृच्छ्राण्यतिदिश्यन्ते । अध्ययनविधेर्गुणाधानायेत्यर्थः । ......कृतमकुशलं छिन्दन्तीति कृच्छ्राः । तेषां विधिरितिकर्तव्यता । तां व्याख्यास्यामः ॥

**देवासो यथाचरन्वसवो रुद्रा[3] आदित्य[3] मरुदङ्गिरसः पुरा[4] । २ ।**

दे० । देवा एव देवासः । आज्जसेरसुक्[5] । येन प्रकारेण देवादय आचरंस्तं प्रकारं वक्ष्याम इत्यन्वयः ॥

आ० । येन विधिना वस्वादयो देवास्तानाचरन् । मरुतश्चाङ्गिरसश्च ते मरुदङ्गिरसः । पूर्वं वस्वादिग्रहणमार्षार्थम् । एत[6] एवात्र ऋषयो ज्ञातव्याः ॥

**स्त्रीशूद्रं नाभिभाषेत । ३ ।**

दे० । स्त्रीमात्रं शूद्रमात्रं च न संवादयेत्[7] कृच्छ्रं चरन् ॥

आ० । सर्वं कंचन स्त्रीशूद्रं व्रतं चरन्नाभिभाषेत ॥

**नक्तमासीत संश्रितः । ४ ।**

दे० । कुड्यकाष्ठादिकमालम्बनमात्रमाश्रितः सन् रात्रावासीतैव । उपविशेत् । श्रमातिशयनिवृत्तये । न तु सुप्यात् । एवं हि

1. Now follows a discourse about the etymology of the word krcchra, in which a citation is given from a grammatical text (a Prātiśākhya ?) designated as carāyaṇi or cārāyaṇi sūtra (the citation runs: पुरुकृते पुच्छकृच्छ्रयोः). 2. तस्यैतानध्य° the Ms. 3. रुद्रादित्या the copies of Devapāla. 4. If we read यथ आचरन्, we get (from sūtra 1 on) two Anuṣṭubh verses. 5. Pāṇ. VII. 1. 50. 6. एता the Ms. 7. संवाचयेत् D.

स्रातिशयं तपो भवति। अतिश्रान्तस्तूपविष्ट [illegible]न्तरान्तरा मनाक् स्वापं कुर्वीत। शरीरापायस्यावश्यवर्जनीयत्वात्। न तु शय्यामारोहेत्[1]॥

आ०। नक्तं रात्रावासीत संश्रितः। अपाश्रितः। कुड्यादौ॥

**सर्वाण्यहानि तिष्ठेत्।५।**

दे०। दिनेषु सर्वेषु तिष्ठेदेव न तूपविशेत्॥

आ०। सर्वाण्यहानि तिष्ठेच्च नोपविशेद्दिनमध्ये॥

**ब्रह्मचारी।६।**

दे०। ब्रह्मचर्याचरणशीलः। एतेन गृहस्थस्याप्यधिकारं दर्शयति॥

आ०। ब्रह्मचारी भवेत्। अनेन ज्ञायते गृ[illegible]ध्ययनसंस्कारायैते[2] भवन्ति॥

**क्षपा[illegible]यः[3]।७।**

दे०। यदि श्रमातिशयपरो विश्रमयितुं मनाङ् निद्रां कुर्यात्तदा क्षपायामेव कुड्याद्यवष्टम्भेनोपविष्टः सन्। न तु कथंचिदपि दिवा शय्यायां वा॥

आ०। श्रान्तः सन् क्षपायां शेते न दिवा॥

**मधुमांसलवणश्राद्धानि वर्जयेदविचारयन्।८।**

दे०। अकामोपनतं[4] मधु न दुष्यतीति वाजसनेयकादौ यद्दृश्यते तथा सैन्धवं तु न दुष्यति। दत्त्वा तु देवविप्रेभ्यः खादन्मांसं न दुष्यतीत्यादि[5]। व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेदित्यादि[6] कण्वागमं[7]। अविचारयन्नेव प्रयत्नविशेषेण मध्वादीन्यत्रव्रते[8] वर्जयेत्॥

आ०। अकामोपनते मधु वाजसनेये न दुष्यतीत्ययं विचारो मधुनो न

1. °रुहेत् D and first hand of A; °विशेत् T. 2. Corrected perhaps: गृहस्थस्याप्य° 3. The Sūtras 3-7, when combined, form an anuṣṭubh verse, one syllable failing only in Sūtra 5, where perhaps तिष्ठेत could be read ( तिष्ठेत and तिष्ठेत् in śāradā writing not being discernable 4. °मापतं A T. 5. Manu V.32 (var.). 6. ib III. 234. 7. इत्यशङ्कगमं T. 8. व्रती T.

कर्तव्यः । मांसस्यापि अ...णकाम्यादे[1] । लवणस्यापि सैन्धवं न दुष्यतीति । श्राद्धस्य व्रतस्थमपि[1] । दौहित्रं श्राद्धे यत्नेन भोजयेदित्ययं विचारो न कर्तव्यः । सर्वथैतानि वर्जयेदिति तात्पर्यार्थः ॥

गवाजिनं शाणीचीरं कुतपं मार्ग[2] वा[2] वास[2] उच्यते ।९।

दे० । गवाजिनं गोचर्म । शाणीचीरं बरासीखण्डः । मृगस्येदं मार्गं चर्म । कुतपमुक्तम्[3] ॥

आ० । गवाजिनं वस्त्रमत्र विकल्पेन ॥

सर्वाकुशलमोक्षाय मरुतो ऽप्याचरं तथा[4] । १० ।

दे० । अध्ययनकाले वैगुण्यकृतस्यैवान्यकालकृतस्यापि समस्तस्येहजन्मकृतस्य पूर्वजन्मविहितस्य चाकुशलस्य पापकर्मणो मोक्षाय विनाशायैतद्व्रतं भवति सम्यक् कृत सत् तथा च मरुदादयो ऽपि तादर्थ्येनैवाचरितवन्तो[5] ऽसंभाव्य[5] मानव्या मोहा इति दृढप्रमाणकमेतत्[6] ॥

आ० । सर्वपापापनोदाय मरुतो ऽप्येतेनाचरन्[7] । वक्ष्यत्येतत्[8] । वसुभी रुद्रैरादित्यैश्चरितं व्रतं मरुद्भिश्चेत्यर्थः ॥

त्र्यहं सायं त्र्यहं प्रातस्त्र्यहं भुञ्जीतायाचितम् । त्र्यहं नैव तु भुञ्जीतैतद्वसुभी[9] रुद्रैरादित्यैश्चरितं व्रतम् । ११ ।

दे० । मरुद्भिश्चेति ज्ञेयं । त्रीण्यहानि सायमेव भुञ्जीत होमकालादूर्ध्वं । त्र्यहं प्रातरेव । त्र्यहं त्वयाचितलब्धमेव[10] भुञ्जीत । त्र्यहं तूपवसनमिति क्रमेणैव द्वादश दिनानि व्रतम् ॥

---

1. The akṣara व restored by me. 2. मार्गवास T, मार्गं वास first hand of A. 3. See IV. 8. 4. Thus Br. (Lahore ms.) and of the Mss. of Devapāla T and first hand of A; Br. (Bombay ms.) and D, and A second hand: प्यचरंस्तथा. Sūtras 9 and 10 combined are again a śloka, if we cancell akṣara मार्गं वा. 5. Thus Ad; °वन्त: सं° T (आचरित° confirms the reading आचरन् in the text). 6. T इत्येके instead of एतत्. 7. प्येतानचरन् the Ms. 8. See the next Sūtra 9. T भुञ्जीतेत्येतद्व°. The original reading may have been: त्र्यहं नैव तु भुञ्जीत एतद्वसुभिश्चरितम् । 10. °चितं लब्ध° TA.

आ०। इदानीं भोजननियम उच्येत। त्र्यहानि त्रीण्यहानि सायमेव भुञ्जीत। होमकालादूर्ध्वं। त्र्यहं प्रातरेव भुञ्जीत न सायं। प्रातःशब्दो नियते प्रातराशकाले। त्र्यहमयाचितमिति। याच्ञा-प्रतिषेधः। स्वगृहे अप्रार्थितमपि भुञ्जीत हविष्यं नातितृप्तं। चतुर्थं त्र्यहं नैव भुञ्जीत। एतद्वसुभिरिति व्याख्यात[illegible] ॥

एष एवातिकृच्छ्रस्य विधिरेवं[1] विधीयते। १२।

दे०। एतत्कृच्छ्रं व्याख्यातं। अस्य प्राजापत्यमिति नाम[2]। एवंप्रकारं क्लेशसाध्यमन्यदपि कृच्छ्रशब्देनोच्यते। कूर्चसान्तपनादिकं। एतमेव प्रकारं तप्तकृच्छ्रे ऽतिदिशयन्नाह[3]। एष एवातिकृच्छ्र-स्य विधिरेवं विधीयते। यः कृच्छ्रस्य प्रकारः स्थानशयनब्रह्म-चर्यादिक उक्तः स एवातिकृच्छ्रस्य विधिः। यद्येवमभेद एव स्यात्तत्र को ऽतिदेशावकाशः। तस्य भिन्नविषयत्वादित्या-शङ्क्याह। एवं विधीयत इति शेषः। तथा चाह॥

आ०। अस्य कृच्छ्रस्य विशेषात्प्राजापत्य इति नाम। अन्यो ऽप्यवि-शिष्टः। प्राजापत्य एवोच्यते। अतिकृच्छ्रस्यैवैष विधिः। भो-जने तु विशेषः॥

एतेष्वेव तु कालेष्वेकैकं पिण्डं प्राश्नीयात्[4]। १३॥५॥(१।५)

दे०। एतेष्वेव तु सायमादिषु भोजनकालेष्वेकैकं ग्रासमश्नीयादति-कृच्छ्रं चरन्। पिण्डप्रमाणं त्वास्याविकारेण यावद्ग्रासो मुखे वर्तते पाणिपूरणभोजन इति॥

आ०। सायमादिष्वेकैकं पिण्डं प्राश्नीयात्। अवि[illegible]तहस्तग्राह्यपिण्डः। तथा च याज्ञवल्क्यः। पाणिपूरणभोजन[5] इति॥

तप्तकृच्छ्रं [illegible]मः। १।

त्र्यहमुष्णाः पिबेदापस्त्र्यहमुष्णं[6] पयः पिबेत्।
त्र्यहमुष्णं पिबेत्सर्पिर्वायुभक्षः परं त्र्यहम्। २।

---

1. एव ( better reading ? But see the Bhāṣya of Devapāla ) Br. (both mss.). 2. Cp. Baudh. dhś. IV. 4. 6, Visnu smrti 46. 10. 3. °तिदिशन्नाह T. 4. The Lahore ms. of Br.: पिण्डमश्नीयात्. 5. पाणिपुरान्न° the ms. Yājñ III. 319 6. The grammatically correct अपः is found only in the Lahore ms. of Br.; Vas. Dhś. XXI 21. also has आपः

दे० । कृच्छ्रकालेष्वेव सायमादिषूष्णजलपानादिकं । पयः क्षीरं । सर्पिस्त्र्यहमयाचितं । वायुभक्ष इति वायुमेवोपजीवेत् । ...... न त्वन्यत्किमपि भुञ्जीत पिबेद्वेति ॥

आ० । त्र्यहमुष्णाः पिबेदापः । यावच्छक्ति । अन्यत् त्र्यहमुष्णं पयः पिबेत् । अन्यत् त्र्यहमुष्णं यथारुचि । वायुभक्ष इति निराहारोपलक्षणं । न हि वायोर्भक्षः संभवति[1] ॥

बृहस्पतेस्तु कूर्चस्य[2] एष[2] एव[2] विधिः स्मृतः । ३ ।

दे० । बृहस्पतेरार्षे प्ररोचनार्थं च कूर्च इति संज्ञा । यः कृच्छ्रस्य स्थानाद्[illegible] उक्तः स एव कूर्चस्यापि । तुशब्दो ऽप्यर्थे ॥

आ० । बृहस्पतेरार्षे कूर्चो नाम ॥

यवागूं यावकं शाकं पयः सर्पिः कुशोदकम् ।
त्र्यहं त्र्यहं तु[3] प्राश्नीयाद्वायुभक्षः परं त्र्यहम् । ४ ॥ ६ ॥ ( १ । ६ )

दे० । यवागू रपासित[illegible]तुषयवसंपाद्या पेयप्राया[4] सिद्धा । यावको ऽपि तद्वत् । स तु भक्तप्रायः कठिनः । शाकं तु हविष्यमेव न त्वविशेषेण । ......कुशोदकमाहारनिर्देशात्सहोपयोगः । ते ऽपि सप्तत्र्यहा भवन्ति ॥

आ० । तत्र यवाग्वादय उष्णास्त्र्यहं प्रति । यवागूः पेया । यावकः प्रसिद्धः । यवमु मिश्रः । प्रसृतियावकादन्यः । शाकं यवोच्छिष्टभोजनीयं अन्य[illegible] व्याख्यानं । एवं सप्तत्र्यहः बृहस्पतिकूर्चे व्रतम्

---

अथ सान्तपनम् । १ ।

दे० । कृच्छ्रं व्याख्यास्याम इति वाक्यशेषः । अथशब्दः पृथक्स्थानतां[5] पूर्वेभ्यो द्योतयति ॥

आ० । अथशब्दः पृथक्प्रक्रियार्थः ॥

---

1. After Sūtra 2 Br. has one śloka more: षट्पलं तु पिबेदापस् (Lah. पिबेदम्भः) त्रिपलं तु पयः पिबेत् । पलमेकं पिबेत्सर्पिर्वायुभक्षः परं त्र्यहम् ॥
2. Thus Br.; the Mss. of Devapāla: कूर्चस्यैवैष, but A second hand: कूर्चस्य ह्येष एव.   3. च the Lahore Ms. of Br.   4. पेया° A T.
5. T and A (first hand): °स्थानं; A corrects: प्रस्थानतां

**मरुतां होमो मरुतर्पणम् । २ ।**

दे० । मरुतामेवात्रार्षे । अतस्तेषामेव[1] होमः । तानेव चोदकेन तर्पयेत् ॥

आ० । मरुतः सान्तपनऋषयः । तेषामेव होमः । तेषामेव तर्पणम् ॥

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।**
**एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम्[2] । ३ ।**

दे० । कृच्छ्ररूपं च तत्सान्तपनं कृच्छ्रसान्तपनं । गोमूत्रादिकमेकैकमहन्यहन्येकरात्रोपवासश्चेति सप्तरात्रः ॥

आ० । गोमूत्रादीनि षड्द्रव्याण्येकरात्रतः । उपवासश्च द्वितीयः । एतत्सान्तपनम् ॥

**एतदेव त्रिरभ्यस्तं महासान्तपनं स्मृतम्[3] । ४ ॥ ७ ॥ (१ । ७)**

दे० । एतदेव सान्तपनं यथास्थानं गोमूत्रादिभक्षणमुखेन त्रिरभ्यस्तं दण्डकलितकेन[4] वा महासान्तपनं भवति । तेन भङ्ग्या[5] सान्तपने[6] सप्तोपवासाः महासान्तपने चैकविंशतिः पर्यवस्यतीति ।......यत्तु याज्ञवल्क्येन सान्तपनस्य द्व्यहत्वं[7] महासान्तपनस्य सप्ताहत्वं प्रतीयते तदपि विकल्पेन शक्तिविशेषाभावापेक्षया पुरुषान्तर[8] एव कल्पते[8] सर्वस्मृतीनां प्रामाण्यात् । न त्वेतावता सर्वत्र संकोचव्याख्यया[9] क्लेशो ऽनुभावनीयः[9] । तत्र च याज्ञवल्क्यवचनं—

पञ्चगव्यं तु गोक्षीरं दधि मूत्रं शकृद् घृतम् ।
जग्ध्वा परे ऽह्न्युपवसेत्कृच्छ्रं सान्तपनं चरन्[10] ।

अत्र पञ्चगव्यादीनामेकाहन्युपयोगः । द्वितीये तूपवास उक्तः ।

---

1. अथ instead of अतः D. 2. Identical with Manu XI. 213. 3. This Sūtra is not given by Br., and not rubricated nor marked or numbered in the Mss. of Devapāla, but cp. the following passage, which comment upon it, as also Ād. 4. A similar expression is used by Rudradatta on Āp. śrs. XI. 12. 6 : दण्डकलितवदभ्यस्तेन. 5. Thus the Mss.; r. भङ्ग्या ? 6. This word only in T A. 7. T and first hand of A : त्र्यहत्वं. 8. °न्तरे ऽवकल्पने A T. 9. Thus A T; °व्याख्यातं क्लेशेन भवनीयः D. 10. Yājñ. III. 315 (Var. reading, cp. Ād.)

यतो महासान्तपनमाह । पृथक्……स्मृत इति[1] । अत्र पञ्चगव्यादीनां पृथगुपयोगात्षडहानि सप्तमे ऽहन्युपवासः ॥

आ० । एतदेव त्रिरभ्यस्तं स्वस्तानविवृ[2] दण्डकलितवद्वा महासान्तपनं । सप्ताहः संख्या । एकविंशत्यहःसंख्या न कर्तव्या यतो याज्ञवल्क्येन स्फुटमुक्तं—

कुशोदकं तु गोक्षीरं दधि मूत्रशकृद् घृतम् ।
जग्ध्वा……………………………चरन्[3] ।

पृथक्…महासान्तपनं मतम्[1] । मनुना तन्त्रेण द्वावप्युक्तं । गोमूत्रं गोमयमिति[4] । अत्र समस्तद्रव्यैरेकरात्र उपवासश्च द्वितीयः । अयं द्व्यहः । महासान्तपने गोमूत्रमेकरात्रः । एवंव्याख्याने सप्तरात्रः ॥

---

**अथात्र[5] व्रतोपायनम् । १ ।**

दे० । सर्वेषां[6] कृच्छ्रव्रतानां द्वादशाहाधिकारित्वं । गुणं तु द्वादशाहस्येति[7] । तेन तदीया एव मन्त्रादयो ऽत्र गुणत्वेन योजयितव्या इत्यभिप्रायेण गुणविशेषमाह । अथात्र व्रतोपायनम् । एषु समस्तेषु कृच्छ्रेष्वत्र यत्पूर्वं व्रतमुक्तं व्रतादिनियमाश्चेति तस्योपायनं ग्रहणोपाय इतिकर्तव्यता द्वादशाहादित्युच्यते त्यागोपायश्च तत एवेति ज्ञेयम् ॥

आ० । अथात्र सर्वेषु कृच्छ्रेषु व्रतोपायनादिगुणविधिरुच्यते । प्रथमे ऽह्नि प्रातः स्नातः अग्निसन्निधौ व्रतमुपगच्छति ॥

**वसवो व्रतपतयो रुद्रा व्रतपतय आदित्या व्रतपतयो मरुदङ्गिरसो व्रतपतय इति व्रतमालभ्य वसूनद्भिस्तर्पयेत् प्रथमस्मिंस्त्रिरात्रे रुद्रान्द्वितीय आदित्यांस्तृतीये मरुदङ्गिरसश्चतुर्थे । २ ।**

दे० । प्रथमस्य त्रिरात्रस्य प्रथमे ऽहनि स्नात्वाग्निसमीपे वसवो

---

1. Yājñ. III 316 2. Thus the Ms. 3. Yājn III 315 4. Manu XI. 213. 5. Thus of the Mss of Devapāla A and T, D अत्र; the Bombay Ms of Br has अथातो, the Lahore Ms. अथ. 6. The passage from विशेषा up to विशेषमाह follows immediately after the last words of Dev. cited in the Comm. on VII 4. 7 Three quarters of a śloka

व्रतपतयो व्रतमालभे तद्वः प्रब्रवीमि तच्छकेयं तेनर्ध्यासमित्यादिमन्त्रलिङ्गात् ...... देवताभ्यर्थनं प्रतीयते । तथा व्रतान्ते व्रतत्यागः कर्तव्यः । वसवो व्रतपतयो व्रतमचारिषं तदशकं तद्वः प्रब्रूमस्तन्नो गोपायतेत्यादिभिः । एवमेतैश्चतुर्भिर्मन्त्रैर्व्रतमालभ्य प्रथमं त्रिरात्रे ऽद्भिर्व[illegible]प्रत्यहं तर्पयेत् । द्वितीये रुद्रान् । तृतीय आदित्यान् । चतुर्थे त्रिरात्रे [illegible]रस उदकेन तर्पयेत् ॥

आ०। अथात्र सर्वेषु कृच्छ्रेषु व्रतोपायनादिगुणविधिरुच्यते । प्रथमे ऽह्नि प्रातः स्नातः अग्निसन्निधौ व्रत[illegible]पगच्छति । ......व्रतान्ते तथैव विमोकः । ......व[illegible]द्भिस्तर्पयति प्रथमस्मिंस्त्रिरात्रे । रुद्रान् द्वितीये त्रिरात्रे । आदित्यान् मरुदङ्गिरसस्तृतीयचतुर्थयोः ॥

**आ मे गृहा इति द्वाभ्यां वसूनां स्थालीपाकस्य जुहोति ।३।**

दे० । प्रथमे त्र्यहे ऽहन्यहनि चरुणा मन्त्रद्वयेन वसुभ्यो होमः कार्यः। ब्रह्मचारिस्नातकाभ्यां लौकिके ऽग्नौ गृहस्थेनाहवनीये गृह्याग्नौ वा ॥

आ० । ब्रह्मचारिणो ऽपि लौकिके ऽग्नौ ॥

**असङ्ख्यातेति[1] दशभी रुद्राणाम् । ४ ।**

दे० । होमः कर्तव्यः । द्वितीये त्र्यहे ॥

आ० । रुद्राणां द्वितीयस्मिंस्त्रिरात्रे स्थालीपाकस्य ॥

**कदा चन स्तरीरसीति पञ्चभिरादित्यानाम् । ५ ।**

दे० । तृतीयत्र्यहविषयमेतत् ॥

ब्र० । पञ्चभिः पुरोरुग्भिर्ग्रहरहिताभिः पञ्च प्रधानाहुतयः ॥

आ० । पञ्चभिर्ऋग्भिरादित्यानां ग्रहवर्जम् । प्रथमे बृहत्यौ । तृतीयोष्णिक् । चतुर्थी त्रिष्टुप् । पञ्चमी जगती । इन्द्रो ऽप्यादित्यः । सवितापयादित्यः ॥

**सान्तपना इति षड्भिर्मरुद्गणानां त्वामग्ने अङ्गिरसो वायुरग्रेगा[2] इति च[2] । ६ ।**

---

1. Thus. Ād. only; the other Mss.: °ख्याता इति, °ख्यातीति or ख्यात इति. 2. Thus the Lahore Ms. of Br only; all the others : वायुरग्रग:

दे०। चतुर्थे ऽह्यहे मरुद्गणानामङ्गिरसा चाहन्यहनि होमो यथायोग्यं दैवतैः कर्तव्य इत्यर्थः ॥

आ०। इत्येवमष्टाभिश्चतुर्थे त्रिरात्रे ॥

हव्यवाहमिति स्विष्टकृतम् ॥ ७ ॥ ८ ॥ (१।८)

दे०। हव्यवाहमित्यादिमन्त्रेण स्विष्टकृतं जुहुयादविशेषेण सर्वेषु ऽह्यहेषु[1] ॥

ब्र०। हव्यवाहमिति चतुर्ष्वपि त्रिरात्रेषु स्विष्टकृतं। इडामग्न इति लुप्यते[2] ॥

आ०। इति स्विष्टकृतं जुहुयात्सर्वेषु। अत्र प्रत्यहमित्यारम्भात्प्रतित्र्यहमेको ऽपि होमः। तत्राप्यशक्तावारम्भे एकतन्त्रेण चत्वारो ऽपि होमाः ॥

---

वर्षासु श्रवणेनाध्यायानुपाकरोति। १।

दे०। अत्रान्तेवासिनां योगमिच्छन्निति वक्ष्यमाणं संबन्धनीयं। यद्यदध्ययनाध्यापनाङ्गं स्मर्यते तत्तत्किल वक्तव्यं। उपाकरणं वाध्ययनाध्यापनयोरप्यङ्गं[3]। तथा[4] चान्तेवासिनां[4] योगमिच्छन्नित्यतो ऽध्येतुः फलसंबन्धः प्रतीयते।......तत्र त्रैविद्यकसिद्ध्यर्थं वेदाध्ययनाङ्गभूतानि व्रतानि प्रतिपादितानि। अधीतवेदस्यापि शिष्यस्याङ्गोपाङ्गग्रहणार्थं गुरोर्वास इष्यते शिल्पादिशिक्षार्थं च। तथा च स्मृतिः–

कृतशिल्पो ऽपि निवसेत्कंचित्कालं[5] गुरोर्गृहे।
अन्तेवासीत्यादि[6]।

तत्रान्तेवासिनां योगं संबन्धमिच्छन्नाचार्य उपाकरणं वेदानां कुर्यात्। उपाकरणं स्वीकरणं। मनसा संकल्पनं। एतत्स्थानकविशेषादि[7] मयास्मै शिष्याय प्रवक्तव्यमिति। शिष्यो ऽपि शिल्पाङ्गोपाङ्गपरिज्ञानायापि गुरौ वसन्स्थानकविशेषादिक्रमपि[7] गुरोः

---

1. After the interpretation of the mantras Devapāla has समन्त्रकचारा(य)णीयगृह्यभाष्ये कृच्छ्रविधिः 2. See XLVII. 13. 3. द्वयोरप्यङ्गे T A, °प्यङ्गे C. 4. तथान्तेवा° DC. 5. किञ्चित् instead of कंचित् the Mss. 6. Yājn. II. 184. (with varr.) 7. °स्थानविशे° Mss. exc. A. Refers obviously to the division in Sthānakas of the Kāthaka.

सकाशादधीते।…श्रावणभाद्रपदौ मासौ वर्षास्तत्र यः[1] प्रथमः[1] श्रावणं नक्षत्रं तत्रैवोपाकरणं कर्तव्यं[2]। प्रथमपरित्यागे कारणाभावात्। प्रथमं वा नियमेन[3] कारणादभिक्रमः स्यादिति नयेन। किं कुर्वता। अन्तेवासिनां साङ्गोपाङ्गादिशिक्षार्थं गुरौ निवसतां योगं संबन्धमध्यापयितृकृतव्याख्यलक्षणमिच्छता[4]। अन्तेवासिकश्च प्रज्ञातिशयसंबन्धमिच्छतेति फलतो व्याख्या॥

आ०[5]। वर्षास्वध्ययनविधिशेषत्वेनेदमुच्यते। येन वा कृच्छ्रद्वयेनाध्ययनं कृतं तस्यापीदमुपाकर्म। वर्षासु श्रवणेन प्रथमेनैव। अध्यायान् स्नातकविशेषानुपाकरोति। अङ्गीकरोति। इदं मया प्रवक्तव्यमिति॥

स जुहोत्यप्वा[6] [illegible] तस्यास्ते जुष्टीयं[7] गमेयम् अहमिद्धि पितुष्परि मेधामृतस्य जगृभ[8] अहं सूर्य इवा-

1. Thus the Mss., exc. A (sec. hand): प्रथमं; r. यत्प्रथमं. 2. Does this point to a Sūtra text श्रवणेनैव प्रथमेन? cf. Ād. 3. नियम्येत A T 4. संबन्धमध्यापयित्रध्याप्यलक्ष० A; संबन्धमध्यापयित्रकृतव्याख्यालक्ष० D; संबन्धमध्यापयेतयत्रव्याप्यलक्ष० T; संबन्धमध्यापयेतध्याप्यलक्ष० C. 5. The beginning seems to be defective. 6. Thus Br. (text and comm.) and the Stein and Bombay ṛcakas The text of Devapāla also points to अप्वा (thus D, but C: अपा, A: उपधा, T: अपधा), but the Mantrabhāsya either to अपवा or to अप्वा, it runs: पवते स्वरूपाच्च्यवत इति पवा अध्रुवा (varr.; अध्रवा, अध्रुवा, अप्रवा) तत्प्रतिषेधेनापवा चाध्रुवा (varr.: दाध्रुवा, चाप्रुवा, चप्रवा, अपवादादध्रुवा) विग। केचित्तु अप्वेति (varr: अपेति, अपीति) पठन्ति। तत्रायमेवार्थः॥ 7. Uncertain. The Bombay Ms of Br. reads जुष्टीयं, the Lahore one: जोष्टीं; D जुष्टीय C and Bombay ṛcaka जुष्टीं, T जुष्टं, A जुष्ट्रीयं (cp. the Mān. gṛhs.) the Stein ṛcaka जुष्ट्रीयं In the Mantrabhāsya DA: जुष्टीयं, C जुष्टीं T जुष्टयं (Periphrase: अतिशयेन सेवनीयं). 8. Br. (Bombay Ms.) and Bombay ṛcaka: जगृभ अहं, thus also C; जगृभु अहं D; जगृहुरहं Br. (Lahore Ms.) and A; जगृभरहं T; जग्रभ अहं the Stein ṛcaka (four times). Devapāla seems to have read जगृहुरहं (परिजगृहुः……लेभिरे इत्यर्थः).

जनि स्वाहा। रन्तिर्नामासि युक्तिर्नामासि योगो नामासीत्युत्तरास्तिस्रः। तस्यास्त इति सर्वत्रानुषजति।२।

दे०। स जुहोति य उपाकरोति। अप्वा[1] नामासीत्यादिभिर्यजुर्भिरन्यास्तिस्रः। एतेषु यजुःषु प्रथममन्त्रस्थं तस्यास्त इत्यनुषजति।...... तेन रन्तिर्नामासि तस्यास्त इत्यादीनि वाक्यानि भवन्ति। समस्तपाठः शाखान्तरीयत्वात्॥

ब्र०। उपाकर्मणि स्नानव्रतवत्परिसमूह्य पर्युक्ष्य चातुष्कोष्ठैः स्तरैः परिस्तीर्याज्यं संस्कृत्य दर्भोपयामो ऽप्वा नामासि रन्तिर्नामासि युक्तिर्नामासि योगो नामासीति चतस्रः स्रुवेणाहुतयः। योगो नामासि तस्य ते जुष्टीयं[2] गमेयमित्यूहः॥

आ०। य एवोपाकरोति स एव जुहोति। आज्यं पवित्रेण संस्कृत्य चातुष्कोष्ठैः स्तीर्त्वा अपवा नामासि तस्यास्त इति सानुषङ्गैश्चतुर्भिर्ऋग्यजुषैश्चतस्र आहुतीर्जुहोति॥

युजे स्वाहोद्युजे स्वाहा युक्त्यै स्वाहा योगाय स्वाहेत्यन्तेवासिनां योगमिच्छन्।३।

दे०। इति प्रत्येकं संबध्यते॥

आ०। अन्तेवासिनां शिल्पशिक्षार्थं ये गुरौ वसन्ति। उपनेतव्यानामर्थे वा। तथा च स्मृतिः। कृतशिल्पो ऽपि...... फलप्रद इति[3]॥

दधिक्राव्ण इति त्रिर्दधि भक्षयित्वा दर्भपाणिः सावित्रीं त्रिरन्वाहादितश्च त्रीननुवाकान्कस्त्वा युनक्तीति च[4]।४।

दे०। दधिक्राव्ण इति मन्त्रः सकृद्दधिभक्षणमेवावर्तते त्रिः। सावित्री सावितृदेवत्या तत्सवितुरित्यादिका महाप्रभावत्वान्नान्या आ कृष्णेन रजसेत्यादिका। आदावादितः। ये त्रयो ऽनुवाकाः। इषे त्वेत्यादिरेकः। देवस्य त्वेत्यादिर्द्वितीयः। वसोः पवित्रमसित्यादिस्तृतीयः। कस्त्वा युनक्तीति चाश्वमेधे परिधिनियोजने विनियुक्तः। उभयत्रान्वाहेत्यनुषङ्गः॥

---

1. Thus D, उपधा C; A first hand and T: उपाधा; A second hand; अपवा. 2. जोष्टीं again the Lahore Ms. 3. Yājn.II. 184. 4. च given by Br. (both Mss.) and of the Mss. of Devapāla by A (C D T om.); it is not found in the Bombay reaka.

ब्र० । होमादनन्तरमात्मना दधि प्राश्य शिष्यांश्च प्राशयित्वा तैः सह प्रागग्रेषु दर्भेषूपविश्य दर्भपाणिरों भूर्भुवः स्वरित्युक्त्वा तत्सवितुरिति सावित्रीं त्रिरन्वाह । पच्छो ऽर्धर्चशः सर्वामन्ततः । ······ततः कस्त्वा युनक्तीत्युक्त्वा नमो ब्रह्मण इति परिधानीयां[1] त्रिरन्वाह[1] । अग्निं विमुच्य शिष्यपरिवृतः पूजोपकरणमादाय नदीतीरं गच्छेत् । ······तत्र नदीतीरे शुचौ देशे दर्भविष्टरान्विंशतिसंख्यान्कृत्वा प्रागग्रानुदगपवर्गानवस्थाप्य तेष्वग्नये वायवे सूर्याय ब्रह्मण इन्द्राय प्रजापतये भवाय शर्वाय ईशानाय ईश्वराय विष्णवे बृहस्पतये यजुर्वेदाय छन्दोभ्य ऋषिभ्यो वेदेभ्यो ब्राह्मणेभ्यः सोमेभ्यः सोमपेभ्य आचार्येभ्यो नम इति जीवादानपूर्वं[2] पाद्यार्घ्यादिपूजनं कृत्वा तर्पयेत् ॥

आ०।होमादनन्तरं दधिक्राव्ण इति त्रिर्दधि भक्षयित्वा । क्रियाया आवृत्तिः सकृन्मन्त्रः । ······कस्त्वा युनक्तीति च प्रवादः । प्रच्युत्यै त्वेत्यन्तः ॥

**तस्यानध्यायः । ५ ।**

दे० । तस्याध्यापयितुरध्येतुश्चानध्याय उच्यते ॥

आ०। तस्यानध्यायो विरतिरध्ययनादुच्यते ॥

**न विद्योतमाने न स्तनयति । ६ ।**

दे० । वर्तमाननिर्देशात्तात्कालिकमेतदनध्ययनं । विद्योतमाने वैद्युते तेजसि । स्तनयति गर्जति मेघे ॥

आ० । न विद्योतमाने ऽधीयीत । न[3] स्तनयति गर्जति सति ।······ यावद्विद्योतयते तावदनध्यायः । यावच्च गर्जति ॥

**आकालिकं[4] देवतुमुलं[5] विद्युद्गन्वोल्का[6] । ७ ।**

दे० । आकालिकं[7] समानकालमुच्यते । य एवादिः स एव चेदन्तो

1. Corrected (cp. Taitt. Ār. II. 13. 4), °धानीयांस्त्रि° the Mss. 2. Thus the Ms. of Lahore, the Bombay Ms.: जीवादानायाहरपूर्वं. 3. त्र the Mss. 4. Thus Br. and of the Mss. of Devapāla A (second hand), and the Bombay ṛcaka; °कालिक C D, ° कालिके T and first hand of A 5. Thus Br. the Bombay ṛcaka and of the Mss. of Devapāla A (second hand); °मुल D T C A (first hand) 6. Thus Br. (both Mss.) and of the Mss. of Devapāla A; °ल्काः the others 7. °लिकः समानकाल उ° D; °लिके-काल उ॰ C.

भवति। तस्य वचने आकालिकशब्दो निपातितः। आकालिकडाद्यन्तवचन इति सूत्रेण[1]। टकारो टीबार्थः[2]। आकालिकी विद्युत्[3]। य एवोपक्रमकालः स एव विनाशकालो विद्युत इत्यर्थः। एवमिहापि यस्मिन्प्रथमार्धप्रहरादौ देवतुमुलादिकमुत्पद्यते स तस्यादिकालः। स एव द्वितीयदिवसे अन्तकालो भवति। एतदाकालिकशब्देनोक्तं। एतदुक्तं भवति। यावति काले देवतुमुलादिकमुत्पद्यते तावत्येव काले द्वितीये दिवसे ऽध्ययनयोग्यता भवति। अन्तरा त्वनध्यायः। ...तत्रान्तरिक्षे गीतवाद्यादिकं गन्धर्वाधकृतं देवतुमुलं। विद्युदिति विद्युत्पातो विवक्षितः। ...धन्वशब्देनापीन्द्रधनुर्वर्षाकालादन्यत्र वर्षासु ...उल्कापि महत्या उल्कायाः पातो विवक्षितः तारकामात्रपातनो ऽपि ह्युल्काशब्दप्रयोगो ऽस्ति॥

आ०। इदानीमाकालिकाननध्यायान्व्याख्यास्यामः। देवतुमुलम्। अन्तरिक्षचराणां गन्धर्वादीनां मतव्या[4] ध्वनिः देवतुमुलं। यस्मिन्काले स भवति तदारभ्य यावच्छ्वः स एव कालो विद्युत्पातः धनुर्दर्शनं। ऐन्द्रस्य धनुषः। महोल्कादर्शनं। एतच्चतुष्टयमाकालिकम्॥

आचारेणान्ये।८।

दे०। अन्ये ऽप्यनध्यायनहेतव आचाराध्यायोक्ता अनुमन्तव्याः। भूकम्पचन्द्रार्कोपरागनृपतिमहापुरुषप्रमयप्रभृतयो ऽनुमन्तव्याः। तद्यथा॥

आ०। आचाराध्यायेनान्ये अनध्याया[5] व्याख्याताः॥

अत्यक्षराः शब्दाः संततवलीकप्रस्रावः।९।

दे०। अतिक्रान्ताक्षरा अत्यक्षराः शब्दा निर्घातहुंकारतलास्फोटनप्रभृतयः। संततं वलीकस्य प्रस्रावो न तु प्रस्रावमात्रं तस्य प्रायेणाभावात्[6]। एतद्द्वयमाकालिकस्यानध्ययनस्य निमित्तम्॥

आ०। अक्षराण्यतिक्रम्य ये वर्तन्ते वेणावेणुमनुजान्[7] कांस्यशङ्ख-

1. See Pāṇ V. I. 14 2. D seems to read णकारो णीवर्थः 3. See Schol on Pāṇ. l. c. 4. Reading of व्यो indistinct 5. अनध्या the Ms. 6. Thus T; the other Mss. ०णाभावात् 7. Thus the Ms

दुन्दुभिश्वसृगालगर्दभानां शब्दाः अत्यक्षराः । संततवलीकप्रस्रावो यावत् । वलीकाः छर्दिःपटलपर्यन्ताः । ते यावत्संततमविच्छिन्नं प्रस्रवन्ति ॥

**अर्धपञ्चमान्मासानधीत्य पञ्चार्धषष्ठान्वोत्सृजत[1] उत्सृजामहे ऽध्यायान्प्रतिविश्वसन्तु छन्दांसि कस्त्वा विमुञ्चतीति च । १० ।**

दे० । अर्धः पञ्चमो येषां ते ऽर्धपञ्चमा मासाः । सार्धचत्वारः । एवमर्धषष्ठाः सार्धपञ्चमाः[2] मासानुक्तविधिनाधीत्य । अध्ययनार्थप्रयोजकव्यापाराध्ययनं निर्वर्त्य । अध्याप्येति यावत् । उत्सृजते अध्यायान् । उत्सर्गसंकल्पनं करोतीत्यर्थः । न च वेदाध्ययनस्य त्यागो ऽस्ति । अनध्यायविशेषेभ्यो ऽपि वा[3] उत्सर्गे मन्त्रद्वयसंबन्धमाह । उत्सृजाम[4] इत्यादि ।

ब्र० । श्रावण्या ऊर्ध्वं सार्धांश्चतुरो मासानधीत्य पञ्चसार्धान्वा[5] पञ्च वोत्सर्गः[5] । ···उत्सर्गे ऽपि ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य जलतीरे[6] तेष्वेव दर्भविष्टरेषु पूर्ववदग्निवाय्वाद्या[7] देवता अभ्यर्च्य शिष्यैः सहैव दर्भपाणिः सावित्रीं त्रिरुक्त्वेषे त्वेत्याद्यनुवाकत्रयमन्वाह । नमो ब्रह्मण इति परिधानीयांस्त्रिरुक्त्वोत्सृजामहे ऽध्यायान्प्रतिश्वसन्तु छन्दांसि कस्त्वा विमुञ्चतीति पठेत् । तत आज्यमिदं श्येनं[8] यदोषधय उपधानाग्नेः प्रियं धाम तेनैनं संगमयिष्यामीति[9] कक्षमादीप्याग्नये नमो वायवे नम इत्येवं पूर्ववदुदकमुत्सृजेयुः । तदुक्तमाचारा-

---

1. Thus Br. and the Bombay reaka, and cp. Ād.; ०षष्ठान्विसृज्यते D C T ( ०सृजते ) ; A (first hand ): षष्ठ्यान्विसृज्यते, second hand: षष्ठार्धोत्सृजते 2. Thus A (an accus. is required !) ; सार्धचतुरः the other Mss. 3. वा om. DC. 4. Thus or ०ज्याम or ०ज्यामीत्या० the Mss. 5. ? Thus reads the Bombay Ms. of Br., the Lahore Ms. पञ्चार्धान्वोत्सर्गः 6 Only given by Lahore. 7. Cp. the Bhāsya of Br. on IX. 4 8 शीनं Lahore 9. Unknown Mantra.

ध्याये[1] । उत्स्रक्ष्यन्तः प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य कक्षमादीपयन्त्युदकमुत्सृजन्तीति ॥

आ० । एवमर्धपञ्चमान्मासानधीत्य उपाध्यायनध्याया... अर्धष-ष्ठान्वा पञ्च मासानधीत्य तत उत्सृजतेति मानस एव संकल्पः। उपाकरणमुत्सर्गश्च कदाचित्स्वाध्यायोत्सर्गो ऽस्ति। अथवा समाचारो ऽयं। दर्भमयानि पवित्राणि विंशति पात्राणि कुर्वन्त्यध्येतार उपाकर्मणि । तानि बद्धानि धारयति आ उत्सर्गात् । उत्सर्गकाले च प्राचीमुदीचीं दिशमुपनिष्क्रम्य कक्षमादीपयन्ति तानि च पवित्राण्युदकसमीप आस्तीर्य तेषूदकमुत्सृजन्त्याचाराध्यायोक्तेन[2] विधिना। यथा । अग्नये वायवे...आचार्येभ्यो नम[3] इत्युदकमुत्सृज्य ततो जपन्त्यु-त्सृजामहे...छन्दांसि कस्त्वा विमुञ्चतीति चानुवाकशेषम् ॥

तस्यानध्यायो ऽमावस्यां पक्षिणीं[4] नाधीते । ११ ।

दे० । अयमन्यो ऽनध्याय । पक्षाविवोभयपार्श्ववर्तितया अमावस्या-याश्चतुर्दशी प्रतिपच्च । यद्यपि चाचाराध्याये द्वे पौर्णमास्यौ द्वे अमावस्ये चतुर्दशीसहिते पौर्णमास्यामवास्ये उक्ते तथापि[5] प्रतिपद्विधानार्था पुनः श्रुतिः। तदुक्तं गुणार्थेन[6] पुनः श्रुतिरिति ॥

आ० । प्रतिपच्चतुर्दश्यौ पक्षस्थानीयौ यस्याः सा पक्षिणी ॥

नात ऊर्ध्वमभ्रेषु । १२ ॥ ९ ॥ ( १ । ९ )

दे० । अत उत्सर्गादूर्ध्वमभ्रदर्शनमात्रे ऽपि सति नाध्येतव्यं। का कथा विद्योतमानादिषु ॥

आ० । अत ऊर्ध्वमुत्सर्गादूर्ध्वे। आ उपाकरणात् । केचित् । नात ऊर्ध्वं घनेष्वभ्रेषु वर्षत्स्ववर्षत्सु वा नाधीयीत ॥

---

1 Probably a part of the Katha-āranyaka (cp. Dev. on IX. 8). 2. See note 1. 3. The same words as given by Br. on IX 4. 4 Thus Br. and of the MSS. of Devapāla A T and perhaps C; D पक्षिणीर्, Ād. and the Bombay reaka: पक्षिणी. 5. तथा प्रति T C and first hand of A. 6. गुरुणायन D

**अथोपनिषदर्हाः । १ ।**

दे० । शिष्या उच्यन्त इति शेषः । अध्यायोपाकरणानन्तरमध्ययनप्रसङ्गेनोपनिषदं रहस्यशास्त्रं ये अर्हन्ति त उपनिषदर्हाः शिष्या[1] नैष्ठिकब्रह्मचार्यादय उच्यन्ते ॥

आ० । उपनिषद्विद्या । तामर्हन्ति ये त उपनिषदर्हाः । रहस्यवेदार्थप्रणिधानयोग्या उच्यन्त अध्ययनप्रसङ्गेन ॥

**ब्रह्मचारी सुचरिती मेधावी कर्मकृद्धनदः प्रियो विद्यया वा विद्यामन्विच्छंस्तानि तीर्थानि ब्रह्मणः ।२।१०॥(१।१०)**

दे० । ब्रह्मचारी नैष्ठिकब्रह्मयुक्तः । सुचरितमस्यातीति सुचरिती सदाचारो गृहस्थादिरपि । मेधावी ग्रहणधारणशक्तियुक्तः । कर्मकृत् नित्यनैमित्तिककर्मानुष्ठानरतः गुरुपरिचर्याचरणकारी च । धनदः प्रचुरधनदाने समर्थः ग्रहणान्ते गुरुदक्षिणावसरे[2] । ...प्रियः पुत्रादिः सदाचारः । यश्च विद्यया विद्यामादित्सते । तानि ब्रह्मणस्तीर्थानि । वेदस्य रहस्यरूपस्य दाने निपाननिग्रहणे[3] चापाया इत्यर्थः । तीर्थं हि निपानं स्मृतं ।

तीर्थाभिधानमिच्छन्ति तृतीयं कृतबुद्धयः ।
शास्त्रं चैव निपानं च वारि चाप्यृषिसेवितम् ॥

आ० । ब्रह्मचारी तावद्यथोक्तः । सुचरितः शोभनाचारः । अब्रह्मचार्यपि । मेधावी ग्रहणधारणसमर्थः । कर्मकृच्छुश्रूषापरः । धनदो भृतिं वर्जयित्वा प्रकारान्तरेण यो धनं ददाति । प्रियः स्वचरितत्वेन । विद्यया विद्यां परिवन्तेनाद्विच्छन्[4] । तान्येतानि तीर्थानि पात्राणि ब्रह्मणः प्रतिपाद्यस्य । अन्तेवासिनो ऽप्येवंलक्षणा भवन्ति ॥

**नवं नवावसानं समं समूलं[5] समवस्रावं समवस्रत्य[6] वा[6] यस्मात्प्रागुदीचीरापो[7] निर्द्रवेयुः प्रत्यगुदीचीर्वा तस्मि-**

1. शिष्टा D only. 2. ०साने A T. 3. निपानग्रहणे A T.
4. Reading indistinct; instead of परिवन्ते could be read ०पमित्ते.
5. सुमूलं all the Mss. of Devapāla, but in the Bhāsya T A स०.
6. Thus Br. and Ād.; of the Mss. of Devapāla D : ०त्यावा ; A : ०विश्रुत्य वा ; T : ०पस्रुत्य वा ; C: समवस्रुत्य. 7. A T: यस्माद्वा प्रा०.

न्प्राग्द्वारं दक्षिणद्वारं वा शरणं कारयेत् । १ ।

दे० । अध्याहिताग्निमिति[1] वक्ष्यति[1] । तत्संबद्धमिदमनागतावेक्षणेनाभिधीयते[2] । सहकर्मचारिणीमुद्वोढुकामस्तस्मिन्देशविशेषे शरणं कारयेत् स्थपत्यादिभिर्विवाहात्पूर्वमेव । कीदृशं शरणं । प्राग्द्वारं दक्षिणद्वारं वा । तथा नवमन्यानुपयुक्तदार्वादिनिर्मितं । नवावसानं । अवसानं भूप्रदेशः । नवदेशमित्यर्थः । सममनिम्नोन्नतं । समूलं[3] प्रशस्तक्रीडाकुसुमादिमूलयुक्तं । समवस्रावं समो ऽवस्रावो यत्र तत्समवस्रावं[4] । उदकं प्रक्षिप्तं यत्र[5] समं कृत्वा स्रवति संचरति तत्समवस्रावं । अतिरश्चीनमित्यर्थः[5] । समवस्रावं यद्भूमण्डलं तस्मिन्निति संबन्धः । समवस्रुत्य[6] वा यस्मात्प्रागुदीच्य[7] आपो निर्हवेयुः[8] । निर्गच्छेयुः । अथवा प्रतीच्य उपीच्यो वा यत्रापो गच्छन्ति तस्मिंस्तिरश्चीने ऽपि शरणं कारयेत् ॥

आ० । उक्तो ब्रह्मचारी द्विविधः । श्रोत्रियो वेदाध्यायी[9] स नैष्ठिकः । द्वितीय उपकुर्वाणकः । स त्रिविधः । यथोक्तचरितव्रतो मुख्यः । अष्टाचत्वारिंशत्संमितब्रह्मचारी मध्यमः । कृच्छ्रैरवाप्तब्रह्मचर्यफलस्तृतीयः । इदानीं गृहस्थो ऽप्यनेकप्रकार उच्यते । यदि पितृगृहे निवसन्नविभक्तधनः स निवसमानः पितृगृह एव सद्वितीयो वसति । तस्य वैवाहिके ऽग्नौ विकल्पः । यस्तु पुनः प्रमीतपितृकः पितृगृहेषु विद्यमानेषु तस्यापि वास्तुकरणं नोपयुज्यते । अग्निं पुनरादधीत[10] । यस्त्वविद्यमानपितृगृहो निवेष्टुमिच्छति स[11] पूर्वं गृहान्कृत्वा पश्चाद्विवहेत् । यतो

1 Thus D C (and cp Ād. on XII 1, I do not see to which sutra this refers) अध्यहिताग्निर्वक्ष्यते A 2. Thus A T; ०नागत्रा० D (second hand), ०नागाता० D (first hand), ०नागात्वा० C 3 Thus T C, मुमूल A D 4 If this interpretation were correct, we would expect समावस्राव. 5. The words समं……इत्यर्थ only in A T 6 ०त्या D C 7 Thus D C, ०दीचीर् T, ०दीची A 8 Thus A T C D 9, See III 2 10 ०ददीत the Ms 11 न the Ms

वक्ष्यति[1] । ऊर्जे बिभ्रदिति गृहान्प्रतिदृश्य जपति ॥ यथा सोदकं सौषधमावसथं प्रतिपद्यत इति तस्य गृहकरणमुच्यते । नवं नवावसानं । नवमन्यैरनध्युषिते[2] । नवारत्निमात्रं[3] स्थानं । तद्विशिनष्टि । समूलमनूषरं । समवस्राव सर्वत आपो यस्मान्निस्रवन्ति । समवस्रुत्य वा यस्मात्प्रागुदीचीरापो निर्गच्छेयुः । एतदुक्तं भवति । प्रागुदक्प्रवणमित्यर्थः । दक्षिणाप्रत्यगुन्नतं वा । अस्मिन्नेवंविधे नवावसाने प्राग्द्वारं दक्षिणद्वारं वा शरणं कारयेत् । स्थपतिभिः कारयेन्न स्वयमिति शिवजर्थः[4] ॥

**मध्यमायाः कर्ते[5] प्रागग्रोदगग्रान्दर्भानास्तीर्य तेषु स्थूणामवदधाति ध्रुवां सिनोम्यमृतस्य[6] पत्नीं[7] क्षेमे तिष्ठ घृतमुक्षमाणा । तां त्वा स्थूणे सर्ववीराः सुवीरा अरिष्टवीरा इह संविशेम । इहैव स्थूणे अमृतेन रोहाश्ववतो गोमत्यमृतवती सूनृतावती । ऊर्जस्वती पयस्वती चास्मान्स्थूणे पयसाभ्यववृत्स्व ॥ आ त्वा कुमारस्तरुण आ वत्सो जगता सह । आ त्वा परिस्रुतः कुम्भ आ दध्नः कलशैरयमिति[8] । २ ।**

---

1. See XXVII. 3. 2. अनाध्यु० the Ms. 3. ? नवाराग्नि० the Ms. 4. शिवजक्तः the Ms. 5. मध्यमाः कर्ते the Lahore Ms. of Br. ; मध्यमाया कर्ते D A T C (second hand), C first hand: मध्यम'याग: कर्ते; the Bombay Ms. of Br. मध्यमया गते; गर्ते Ād. 6. Thus the Lahore Ms. of Br. , the Stein rcaka, and of the Mss. of Devapāla A D; ध्रुवां सिनोमृतस्य T; ध्रवां मिनोमृतस्य C; ध्रुवसिनो ष्यमृ० the Bombay Ms. of Br., for Ād. see the extract.–The Mantrabhāṣya of Devapāla सिनोमि प्रक्षिपामि. The original reading certainly was ध्रुवां मिनोमि. 7. The Mss. of Devapāla all पत्नी. His Mantrabhāṣya: त्वं हि अमृतस्य अमरधर्मकस्य पत्नी पालयित्री. 8. Thus the Lahore Ms. of Br. and the Stein rcaka. All the other Mss. are more or less corrupt. That this was the reading of Devapāla, is proved by the Mantrabhāṣya : परिस्रुतो दुग्धस्य कुम्भस्त्वामाविशतु अयं दध्नः कलशैः सह.

दे० । मध्यमायाः स्थूणायाः स्तम्भस्य संबन्धिनि कर्ते । कृति छेदने[1] । कृत्यत इति कर्तः । खातः गर्तः । तस्मिन्प्रागग्रान्वा[2] स्वस्तिकसंनिवेशभाजो दर्भानास्तीर्य तेष्वेव दर्भेष्वधिकरणभूतेषु स्थूणास्तम्भं मध्यममवदधाति प्रक्षिपति ॥

आ० । मध्यमायाः स्थूणायाः गर्ते खाते प्रागग्रोदग्रान्दर्भान्स्वस्तिकाकारानास्तीर्य तेषु दर्भेषु स्थूणां स्तम्भमवदधाति ध्रुवोस्मिनो-सीति[3] तिसृभिर्ऋग्भिः इतिकरावच्छिन्नाभिः[4] ॥

**प्राञ्चं वंशं समारोपयत्यृतेन स्थूणामधिरोह वंशोग्रो विराजन्नपसेध शत्रून् । अथा रयिं सर्ववीरा वयं त इति । ३ ।**

दे० । प्राञ्चं वंशं समारोपयति । मन्त्रमाह । ऋतेन···वयं त इति।··· मध्यमवंशस्तम्भयोर्मन्त्रविनियोगादितरस्तम्भवंशानाममन्त्रकं[5] तूष्णीमेवारोपणं शस्यते ॥

आ० । तत्र प्रागग्रं वंशं वास्त्वाख्य[6] समारोपयते मध्यदेशे न्यासपक्षक इति प्रसिद्धः । ऋतेन स्थूणामित्येतया विराजा ॥

**उत्तरपूर्वं समाधानम् । ४ ॥ ११ ॥ ( १ । ११ )**

दे० । प्राञ्चं वंशं समारोपयतीत्युक्तं । प्राग्द्वारं दक्षिणद्वारं वा शरणं कारयितव्यमित्युक्तं । तत्र प्राग्द्वारतापक्षे पूर्वाग्रताभावं[7] वंशसमाधानस्य भावयितव्यं । तदर्थमिदं सूत्रं । समाधानं सम्यगाधानं वंशस्यारोपणं स्तम्भस्य कुड्यकोटिषु ॥

आ० । तत उत्तरपूर्वमुदगग्रं च वंशसमारोपणं कर्तव्यं तूष्णीं स्वस्त्यर्थत्वादत्र त्रिकादिभिर्होमो[8] यावदुक्तः ॥

**अमीवहा वास्तोष्पत इति चतसृभिर्वास्तोष्पतीयस्य स्थालीपाकस्येष्ट्वाथ[9] वास्त्वाविशेत्[9] । अमीवहा**

---

1. Dhātupāṭha XXVIII. 141. 2. Thus D; ०नुदगग्रान्तां A T, C with उदगग्रान्. 3. Thus Ms. 4. ? r, इतिकार० ? 5. ०दितरः स्तम्भ० the Mss. 6. Thus the Ms. 7. Thus T only; पूर्वाग्रता (omitting भावं) A D C. 8. Refers to LXXIII. 4. 9. T: ०पाकस्येष्ट्वापाप्य, इष्ट्वाथ वास्त्वा० । A: ०पाकस्येष्ट्वाथाप्य इ० (etc. as T).

वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः ॥ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवा नः । यत्त्वेमहि प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व ॥ वास्तोष्पते शग्मया संसदा ते सक्षीमहि रण्वया गातुमत्या । पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा न इति । १ ।

दे० । अथ विवाहे कृते वैवाहनाग्नौ प्रवेशिते ऽनन्तरमध्यासिताग्निकं वास्त्वाविशेत् । ... किं कृत्वा प्रविशेत् । वास्तोष्पतीयस्य स्थालीपाकस्येष्ट्वा । ... व्यत्ययेन षष्ठी । स्थालीपाकेनेष्ट्वा । ... अमीवहा इत्यादिना चतसृभिरित्यर्थेन शिष्यहितार्थे चतस्रः पठित्वार्पयति ॥

आ० । ततो विवाहे कृते तस्मिन्नेव गृहे वैवाहने ऽग्नौ वास्तोष्पतीयं स्थालीपाकं श्रपयित्वा । अमीवहा वास्तोष्पत इति चतसृभिरिष्ट्वा । अथ वास्तु गृहं सद्वितीय आविशेत् प्रविशेत् । इदं तद्वक्ष्यति । अध्याहिताग्निमिति[2] । अनेनैव विधिना अध्याहिताग्निर्गृहस्थः । अथ होमादनन्तरं स तत्र निवसेदित्यथशब्दस्यार्थः ॥

वंशोद्वीक्षणिकं[3] ब्राह्मणान्भोजयेत् । २ ॥ १२ ॥ (१ । १२)

---

1. It is uncertain, whether these four verses were given in full in the Sūtra text, but it seems probable on account of Br.; here, after the passage ending वास्त्वाविशेत्, follow the four verses closing with इति and then immediately the last sūtra (XII. 2). Devapāla gives only the sentence up to आविशेत्, but inserts, before treating of XII. 2, the Mantrabhāsya on the four verses. 2. Cp. Devapāla on XI. 1. 3. Reading uncertain; Br. (Bombay ms.). ०च्याकं the Lahore Ms.: ०चिकां; of the Mss. of Devepāla A T: ०चणिकं, C: ०चणिकान् D & Br. (Bombay); for Ād. see the extrac

दे० । तस्मिन्गृहे ब्राह्मणान्भोजयेत् । तस्य च कर्मणो वंशोद्वीक्षणिकमिति[1] नाम । ते हि वंशानुद्वीक्षमाणा भुञ्जते ॥

आ० । वंशोद्वीक्षणिकान्ब्राह्मणान्भोजयेत् । तस्मिन्नेव गृहे ये ब्राह्मणा वंशान्भुञ्जानः सन्त उद्वीक्षन्ते तथा भोजयेत् । अन्ये वंशोद्वीक्षणमिति ब्राह्मणभोजनस्यैतन्नामेत्याहुः ॥

## इति लौगाक्षिसूत्रे गृह्यपञ्चिकायां प्रथमोऽध्यायः[2] ॥

---

अथ पाकयज्ञः । १ ।

दे० । सहकर्मचारिण्या[3] सार्धं यो गृहप्रवेशस्तदनन्तरं पाकयज्ञः कर्तव्यः । तदनुष्ठानावसरलाभात् । पाकं निर्वर्त्य[4] यज्ञाः पाकयज्ञाः । तेषामासूत्रणमिह[5] क्रियते । विस्तरेण तद्वक्ष्यते ॥

आ० । गृहे निवसता सद्वितीयेन पाकयज्ञाः कर्तव्या इति । अथशब्दः पाकयज्ञा[6] इदानीं वक्तव्य नाधिक्रियन्ते । पक्वद्रव्यसाध्याः पाकयज्ञाः । केचित्पाकयज्ञ[7] अन्यार्थं[7] पक्वाः क्रियन्ते वैश्वदेवातिथिभोजनादयः । केचित्तदर्थेन पक्वाः क्रियन्ते अष्टकादयः॥

चतुर्विधः पाकयज्ञो भवति हुतोऽहुतः प्रहुतः प्राशितश्चेति[8] । २ ।

दे० । ···तत्र हुतो हवननिर्वर्त्यो वैश्वदेवादिः । अहुतस्त्वहवनसाध्यो बल्युपहारादिः । यस्य तु प्रारम्भे हवनं स प्रहुतोऽन्वष्टकादिः । प्रकृष्टेनाशनेन निर्वर्त्यते योऽतिथिब्राह्मणभोजनादिः स प्राशितः ॥

आ० । हुतादय एते ऽन्वर्थसंज्ञाः । हवनसंपाद्यो हुतः । अहुतस्तद्विपरीतः । प्रारम्भे[9] यस्य हुतं स प्रहुतः । प्राश्यते यत्र स प्राशितः॥

---

1 इति om AT  2 This is the colophon of Br  3 सहधर्मचा० AT  4 Thus AT, पाकनिर्वर्त्या C D  5. Thus D, ०मामन्त्रणमात्रमिह A T, ०मासूत्रेणमतिमिह C  6 ०यज्ञः or ०यज्ञ the Ms  7 Sic Ms  8 Thus all the Mss of Devapāla and the Lahore Ms of Br, Ād and the Bombay Ms of Br प्राशित इति.  9 ०भो the Ms

हुतो हुतानाम् । ३ ।

दे० । प्रकृतिरिति शेषः । इहत्यानां हुतानां वैदिको होमः प्रकृतिरित्यर्थः । यत इतिकर्तव्यतोपजीव्यते सा प्रकृतिः । योपजीवति सा विकृतिः । तथा च वैश्वदेवे प्रकृतिः । समूहनपर्युक्षणपरिस्तरणस्वाहाकारान्तप्रक्षेपादयः क्रियाः क्रियन्ते ॥

ब्र० । यथा श्रौत उपयङ्गोमादिको हुत इहत्यानां वैश्वदेवादीनां हुतानां प्रकृतिः तत्र यथा श्रौते हि परिसमूह्य पर्युक्ष्य चातुष्कोष्ठैः स्तरैः परिस्तीर्य हस्तेन जुहोति तथैवेहापि ॥

आ० । हुतो हुतानामिति किमुक्तं भवति । अपरिसमाप्तं वाक्यं । तत्र दर्शपूर्णमासप्रकृतय इति वक्ष्यति[1] । अतः प्रकृतिशब्दमाहृत्य वाक्यसमाप्तिं कुर्यात् ।...हुतो हुतानां प्रकृतिः । कश्च वैदिको हुतो यः पक्वान्नेन संबद्धो जुहोति[2] यथाश्वमेधे समाप्ते ऽग्निष्टोमे ऽन्नं प्रयौति। घृतं मधु तण्डुलान्पृथुकान्करम्भाणि[3] धानाः सक्तून्वाज्यानि[3] प्रियङ्गुतण्डुलांल्लाजाः परिहृतासु वसतीवरीषु[4] जुहोति[5] सेयं जुहोतिरिहत्यानां जुहोतीनां प्रकृतिः । यथा वैश्वदेवस्येति तत्प्रकृतित्वेन परिसमूह्य परियुक्ष्य परिस्तीर्य चातुष्कोष्ठं हस्तेनावदायामन्त्रकं[6] देवतानामधेयेन स्वाहाकारान्तेन होमः ॥

उपहारो ऽहुतानाम् । ४ ।

दे० । वैदिक उपहारो ऽत्रत्यानामुपहाराणां प्रकृतिः । अत्रोपाग्निविष्टरमास्तीर्यावाहनं कृत्वा स्रजो गन्धांश्चोपहृत्य धूपं प्रदाय बल्युपहारादिदानान्तम ॥

ब्र० । वैदिक उपहारो यथा वैश्रवणीयं कर्म तत्रह्योक्तानामुपहाराणां प्रकृतिः । तत्र हि वैश्रवणीये कर्मणि पूर्वेणाग्निं विष्टरमास्तीर्यावाहनं कृत्वा स्रजो गन्धांश्चोपहृत्य धूपं प्रदाय बलिमुपकल्पत[7] इति यथोक्तविधिः । इह तथैव नागनायकादीनां[8]

1. See Sūtra 7 2. We expect हूयते 3 Sic Ms 4 Corrected ; ०ल्लजा परिहृतस्वावसतीसुरेषु. 5 Apparently a quotation from the Laugākṣī yajñasutra, cp Āp śrs XX 10 5 6 कस्तेना० the Ms. 7. R. ०कल्पयत ? 8 नागनायकदुर्गादीनां Lahore

बलिकर्मणि शूलगवादौ च पशुकर्मणि सावित्रेण बलिमुपहृत्य तद्दैवत्यान्मन्त्राञ्जपेत् ॥

आ० ।...यथा वैश्रवणीये पूर्वेणाग्निं विष्टरमास्तीर्य[1] ॥

पिण्डपितृयज्ञः प्रहुतानाम् ।५।

दे० । वैदिकः पिण्डपितृयज्ञ इहत्यानां प्रकृतिः । वैश्वदेवशेषपिण्डप्रतिपत्तित्वात्तदीयपिण्डमन्त्रः । ग्रासाशनादयश्च तद्धर्मा भवन्त्यतिदेशात्[2] ॥

ब्र० । पिण्डपितृयज्ञो ऽन्वष्टकादीनामिहत्यानां प्रहुतानां प्रकृतिः । यतो ऽत्र पितरो मादयध्वमित्याद्यवघ्राणान्तं पिण्डपितृयज्ञोक्तं स्यात् ॥

आ० । यथा पवित्रान्तर्हितासेचनावाहनश्रपणाभिघारदक्षिणत उद्वासनादि प्रणीतहोमपिण्डदानोदङ्ङासीनावृत्यनिह्नवनादि पिण्डपितृयज्ञे क्रियते तथेहापि तत्प्रकृतिकत्वे सति भवति । वैश्वदेवे पिण्डेषु पिण्डशेषाप्रतिपत्तित्वात्पिण्डमन्त्रा एव न भवन्ति । श्राद्धे स्वविधिरेवास्ति । तत्र यन्नोक्तं निह्नवनादि तद्भवत्येव ॥

मधुपर्को ब्रह्मौदनश्च[3] प्राशितानाम् ।६।

दे० । प्राशितो द्विविधः । अतिथिभोजनदानादिना[4] ब्राह्मणभोजनवितरणात्मना[5] च । तत्रातिथिभोजनदानस्यातिथ्ये वैदिको मधुपर्कः प्रकृतिः । तत्र च श्रोत्रियाणां पाद्यार्घ्यमधुपर्कपूर्वं मांसप्रदानं भोजनमिति[6] विध्यन्तः । देवताविशेषोद्देशेन तु ब्राह्मणभोजनदाने आधानविहितो ब्रह्मौदनः[7] प्रकृतिः । तत्रापि बर्हिर्युक्तेष्वासनेषूपवेशनमर्घ्यदानादिकं सघृतमन्नं देवतायै संकल्प्य प्राश्नन्तु भवन्त इत्यनुज्ञातपूर्वकं चासनमित्यादिरित्थंभावः ॥

ब्र० । मधुपर्को ब्रह्मौदनश्च प्राशितानां श्राद्धादीनां प्रकृतिः । यथा

---

1. The rest nearly identical with Br.　2. Thus T A C; भवन्त्यनिदशात् D.　3. Thus Ād. and Br. and of the Mss. of Devapāla D in the Bhāsya; ब्राह्मौदन D T in the text, ब्रह्मो० the other Mss. (text and Bhāsya).　4. ०दानात्मनो A T.　5. नात्मनश्च A T C.　6. मित्यादि A T　7. ब्रह्मोदनः T A C.

मधुपर्के एकैकं त्रिः प्राह मयि दोह इत्यादिवच्च[1] पाद्यार्घ्य-दानविधिरुक्ताः तथैव इहापि श्राद्धादौ स्यात् । ब्रह्मौदने च[2] यथा प्राश्नन्तु भवन्त इति यजमानानुज्ञाता ऋत्विजः सघृतान्पिण्डान्प्राश्नन्ति ॥

आ० । इहत्यानां प्रशितानां वैदिकमधुपर्को ब्रह्मौदनश्च प्रकृतिः । यथा श्रोत्रियाणां पाद्यमर्घ्यं मधुपर्कपूर्वं मांसप्रदानं भोनंज पशुवधं मम चामुष्य चेति[3] संज्ञापनं नानागोत्रभोजनं[4] च तथेहापि ब्रह्मौदनो यथादेवोद्देशे ब्राह्मणभोजने बर्हिष्मत्स्वासनेषूपवेशनं[5] पाद्यार्घ्यदानममन्त्रकं । सघृतमन्नं देवतायै संकल्प्य प्राश्नन्तु भवन्त इत्युक्तानुज्ञाताः प्राश्नन्तीति ब्रह्मौदनः प्रकृतिः । उक्तश्चतुर्विधः पाकयज्ञः ॥

## दर्शपूर्णमासप्रकृतयः पाकयज्ञाः । ७ ।

दे० । साधारणेतिकर्तव्यतानिर्देशो ऽयं । असाधारणात्तु[6] पूर्वमितिकर्तव्यता निदर्शिता । दर्शपूर्णमासिके विध्यन्ते अविशेषेण प्राप्ते क्वचिदपवादमाह ॥

ब्रा० । वैतानिकाग्निदर्शपूर्णमासौ श्रावण्यादीनां पाकयज्ञानां प्रकृतिः ॥

आ० ।...तेषु दर्शपूर्णमासानां सर्वं प्राप्तं । तत्र किंचित्प्रतिषिध्यते ॥

## तेष्वावृदुपचारस्तूष्णीम् । ८ ।

दे० । आवृत्क्रिया । उपचारो ऽनुष्ठानं । तत्तूष्णीं । निर्वापावघातादिक्रियानुष्ठानममन्त्रकमित्यर्थः ॥

आ० । आवृत्क्रिया । तस्योपचारः व्यापारः । व्रीह्यवघातादि[7] तूष्णीं कुर्यात् । न तु मन्त्रवत् ॥

## अनर्थलुप्तम् । ९ ।

दे० । यल्लुप्तार्थे[8] । निष्प्रयोजनं प्रकृतौ दृष्टमपि न कर्तव्यं विकृतावमन्त्रकमपि । यथा पेषणकलापोपधानादि[9] स्थालीपाके

---

1. See XXIV. 6 and 8. 2. तु Lahore. 3. See XXIV 16. 4. See l. c. 17. 5. Corrected ; बर्हिसत्स्वा० the Ms. 6 ०धारणयास्तु A T, धारणास्तु C. 7. Emended ; व्रीह्यवननादि the Ms. 8. Thus A T ; यल्लुप्तार्थे C, लुप्तार्थ D. 9. Emend : पेषणकपालोप०.

निष्प्रयोजनमेवं सामिधेनीनां लुप्तत्वात्समिदाधानं लुप्ताश्रुत्वा-
न्न कर्तव्यम् ॥

ब्र० । तेषु तु दर्भलवनावाहननादि कर्ममन्त्रकं । ब्रह्मवरणोपभृद्ध्रुवा-
प्राशित्रेडाचमसाद्दपात्रप्रयोगादिकमनर्थकं लुप्यत एव ॥

आ० । यदनर्थलुप्तं । अर्थात्प्रयोजनवशाद्यल्लुप्तं तत्तूष्णीमपि । यथा
चरौ पेषणं । सामिधेनीषु लुप्तासु समिदाधानम् ॥

## प्रयाजाभावाच्चोपभृत्[1] ।१०॥ १३॥ (२।१)

दे० । सामिधेन्यभावस्तु वक्ष्यमाणः[2] परिसंख्यानात्तत्र क्लृप्तिः[3]
पाकयज्ञानामित्यादिकात् । न चैतावता दर्विहोमगृहमेधीया-
दिवदपूर्वत्वं पाकयज्ञानां किं दर्शपूर्णमासप्रकृतित्वाभिधाने-
नेति वाच्यं कतिपयचतुरवत्तजुहूहोमादिधर्मोपजीवनात् ॥

आ० । प्रयाजानुयाजानामभावादुपभृत्[4] । एवमादि प्रयाजादयः
कस्माल्लुप्यन्ते । परिसंख्यानात् । वक्ष्यति हि तन्त्रक्लृप्तिं पाक-
यज्ञानां । एवं तर्ह्यपूर्वाः पाकयज्ञा गृहमेधीयवत् । किं दर्शपूर्ण-
मासप्रकृतित्वेन अस्ति प्रयोजनं चतुरवत्तं[5] जुह्वा होमादि ॥

---

## उदगयने भार्यां विन्देत । १ ।

दे० । स्नात्वा भार्यामधिगच्छेदिति । स्नानानन्तरं भार्यान्वेषणकालः
···विन्देत लभेत पश्येदित्यर्थः । उदगयने आदित्यस्य दक्षिणः
दिग्भागादुत्तरदिग्भागाभिमुखगमने सति । उत्तरायण इत्यर्थः ।
इष्टायां वरेण कन्यायां पित्रा सहजेन सेवकेन[6] । नक्षत्राण्याह॥

आ० । वेदमधीत्य स्नात्वा भार्यामधिगच्छेदित्यवसरप्राप्तो भार्याधि-
गमः । उदगयने उदयगते[7] सूर्ये ऽधिगच्छेत् । भरणीया
भार्या । तथा कुर्याद्यथा लभेत । भार्याधिगमे[9] यत्नः कार्यः ।
उदगयने नोदासीत ॥

---

1. This sūtra is not given by Br., but its commentary is found in Ād. ; the Mss. of Devapāla read all: ०भावश्चोपभृत्, but see the Vivarana of Ād. 2. ? Thus DC; ०माणात् A T, 3. ०प्ति A C T and first hand of D. 4. Corrected, प्रयाजानुयाजयामभावा० the Ms. 5. चतुरन्तं or चतुरत्त the Ms. 6. Instead of सेवकन T A: वा संवादात्म-केन, C: संवादोत्मकनं. 7 Read उदग्गते ? 9. सूयमधिगच्छेत् the Ms. 8. सूर्यभार्या० the Ms.

**कृत्तिकास्वातिपूर्वैरिति वरयेत् । २ ।**

दे० । कृत्तिकाश्च स्वातिश्च पूर्वाणि तैर्वरयेत् । कंचित्प्रयुञ्जीत न तु स्वयं वृणुयादित्यौचित्यं णिचा दर्शयति ॥

आ०। भार्या लब्धां सतीमुदगयने कृत्तिकास्वातिपूर्वैर्नक्षत्रैर्वरयेत् । कृत्तिकाश्च स्वातिपूर्वाणि च तानि कृत्तिकास्वातिपूर्वाणि । तैर्वरयेत् । आत्मनो भार्यत्वेनाङ्गीकुर्यात् । मयैषा भरणीया विभवानुसारेणेति ॥

**लक्षणिना लक्षणानि परीक्षयेत् । ३ ।**

दे० । हस्तादिलक्षणवेदिना लक्षणानि शुभसूचकानि परीक्षयेत् ।... लक्षणपरीक्षणपूर्वकं वरणमिति । लक्षणालाभे परीक्षायां कारणान्तरमाह ॥

आ० । कथं वरयेत् । पूर्वं भागधेयं तस्याः परीक्ष्य । लक्षणानि वेत्तीति लक्षणी । तेन पुरुषेण लक्षणानि शुभाशुभफलानि शरीरचिन्हानि परीक्षयेत् ॥

**भागधेयमपि वा पिण्डैः परीक्षयेत् । ४ ।**

दे० । अपिशब्द उपायान्तराभ्युपगमे । वाशब्दो विकल्पे । पिण्डैर्वा भाग्यानि परीक्षयेत् । भर्तर्यनुकूलत्वापादनानि । पूर्वोक्तालाभ इत्यर्थः ॥

आ० । भागधेयं प्राशस्त्यं धर्मसुखभागित्वं । अपि वा पिण्डैः परीक्षयेत् । मृत्पिण्डैरित्यर्थः ॥

**वेद्याः सीताया ह्रदाद्गोष्ठादादेवनादादहनाच्चतुष्पथादिरिणात्संभार्यं नवमम् । ५ ।**

दे० । यज्ञार्था वेदिः प्रसिद्धा । सीता हलोत्कृत्ता भूमिः । अशोष्यः पद्माद्याकारो जलाशयो ह्रदः । गोष्ठं गवाश्रयो गोकुलादिः । आदीव्यन्त्यस्मिन्नादेवनं किनवस्थानं । आदह्यन्ते ऽस्मिन्नित्यादहनं श्मशानं । स्वस्तिकाकारेण संबध्यमानं मार्गद्वयं चतुष्पथः । इरिणमूषरप्रदेशः । निस्तृण इत्यर्थः । एतेभ्यः प्रत्येकैकस्मिन्पिण्डं गृह्णीयात् । संभार्यं च नवमं । अष्टाभ्यो ऽपि वेद्यादिभ्यो लेशं लेशं मृदः संभृत्य नवमं कुर्यादित्यर्थः ॥

ब्र०। प्राशस्त्य परीक्षणार्थं पिण्डान्यथोक्तवेद्यादिस्थानेभ्यो [illegible] कुर्वन्नवमार्थं सर्वतः किंचिच्छिद्रयात्तदेकीकृत्य नवमम् ॥

आ०। वेदिर्यागार्थं परिगृहीता भूमिः । सीता हलकर्षेण [illegible] । ह्रदः संततोदकजलाशयः । गोष्ठो गोस्थानं । आदेवनं द्यूत-भूमिः । आकष उच्यते । आदहनं श्मशानं । चतुष्पथः चतुर्णां पथां संपातः । इरिणः ऊषर प्रदेशः । निस्तृण इत्यर्थः । तेभ्यश्चाद्भिः [illegible] तांश्च लक्षयित्वा [illegible] । संभारैः सर्वेभ्यः संभृतं नवमम् ॥

ऋतमेव परमेष्ठ्यृतं[2] नात्येति[2] किंचन । [illegible][3] इयं पृथिवी श्रिता [illegible] [illegible]यादिति कन्याया नाम गृहीत्वा सर्वतः कृतलक्षणान्पिण्डान्पाणावा[illegible]य [illegible] उपनामयेत् । ६ ।

दे०। वेद्यादिभ्य उद्धृतानां पिण्डानामनुमन्त्रणमाह । ऋतमेव... असावित्युक्ते नाम प्रतीयात् । कन्या उच्यते । असौ भगव-त्यादिसंज्ञिता ॥

ब्र०। तत्रादौ लोकपालप्रजापत्यादीनां यथाचारमुदकलशे पूजनं बलिहरणान्तं विदध्यात् । तांश्च पिण्डान् गन्धकुसुमाद्यैरलं-कृत्य स्वस्तिपुण्यत्वात्रिकादिभिर्हुत्वा[4] स्वस्त्ययनमुच्चार्य यथोक्तविधिना कन्यायाः उपनामयेत् । ऋतमेवेति । अत्रासौ शब्दस्थाने कन्यायाः प्रथमान्तं नाम ग्राह्यं । यथा । सर्वमिद-मियं रुक्मिणी भूयादिति ॥

आ०। ऋतमेव परमेष्ठीत्यनेन मन्त्रेणाभिमन्त्र्यासौशब्दस्थाने कन्या-या नाम गृहीत्वा पिण्डान् पाणौ गृहीत्वा कुमार्याः पाणावुप-नामयेत्सपिण्डं हस्तमुपनतं कृत्वा ॥

---

1 Thus (or आकष ?) the Ms 2 °मेष्ठ्यत[illegible]नाहेति T A C; in the Bhāṣya नात्येति D, नात्येति C नास्तीति A T; periphrased: नातिवर्तते. 3 ऋतय the Mss of Devapala 4 See LXXIII 4

**एतेषामेकं गृहाणेति ब्रूयात् । ७ ।**

**पूर्वेषां चतुर्णामेकं गृह्णतीमुपयच्छेत्[1] । ८ ।**

दे० । वेदिसीताह्रदगोष्ठोद्धृतानामन्यतमं गृह्णीयाच्चेत्तदोद्वहेदेनां ।
इतरग्राहिणीं तु वर्जयेत् ।

वेदिपिण्डे हि वेदार्थक्रियासाहाय्यमावहेत् ।
प्रजावतीति सीतायां गोष्ठपिण्डे गवादिकम् ॥
ह्रदपिण्डे ह्रदोद्भूतकुसुमाभरणोदिता ।
तृप्तिदा शैत्यहेतुश्च भर्तृजीवनकारिणी ॥
श्मशाने विधवावश्यं द्यूतभूमौ कलिप्रिया ।
इरिणे नित्यसंतप्तावकीर्णी तु चतुष्पथे ॥

ब्र० । क्रियावती वेदिपिण्डात्सीतायाः फलदा भवेत् ।
अक्षुब्धा तु ह्रदाज्ज्ञेया गोष्ठाद्भवति गोमती ॥
चतुष्पथाद्विप्रकीर्णा द्यूतस्थानात्कलिप्रिया ।
श्मशानान्मृतभर्ता स्याद्वन्ध्या भवति चोषरात् ॥
संभार्ये पिण्डमित्याहुर्व्यामिश्रं भजते सदा ॥

आ० । तां च पूर्वेषां चतुर्णां मध्यादेकं गृह्णतीमुपयच्छेदङ्गीकुर्यादित्यर्थः[2]
अर्थादुक्तं भवत्युत्तरेषां चतुर्णां मध्यादेकं गृह्णतीं नोपयच्छेत् ॥

**संभार्यमेके । ९ ।**

दे० । मन्यन्त इत्यध्याहारः । गृह्णतीमुपयच्छेदित्यनुषङ्गः ॥

आ० । संभार्यमपि गृह्णतीं कदाचिदुपगच्छेतेति[3] विकल्पो रुचिकृतः ।
ततो वृणीयाद्वक्ष्यमाणेन विधिना ॥

**रोहिणीमृगशिरः श्रविष्ठा उत्तराणीत्युपयमे[4] । १० ।**

दे० । उपयमः स्वीकारः । तत्रैतान्यनुकूलानीत्यर्थः ॥

---

1. ०गच्छेत् D C and a few times Ād in his Vivarana of this Sutra 2 The aksaras दङ्गी are conjecturally supplied by me; the Ms. presents a blank. 3 Thus the Ms. 4. ०पयमेत् all the Mss of Devapāla, but cp. the Bhasya and Ād.; the Lahore Ms of Br has ०पनमेघद्रा पु० the Bombay Ms. ०पनमघद्रापु०.

आ०। ततो वृतायां रोहिणीमृगशिरः श्रविष्ठा उत्तरा इत्येतानि नक्षत्राणि उपगमने[1] प्रशस्तानि ॥

**यद्वा पुण्योक्तम् । ११ ॥ १४ ॥ ( २ । २ ) ॥**

दे०। पुण्यं । ज्योतिःशास्त्रं यथासंभवमनुमन्तव्यमित्यर्थः ॥

आ०। यद्वा पुण्योक्तं ज्योतिःशास्त्रविहितं हस्तस्वात्यादि । तद्वोपयमने विवाहे भवति ॥

---

**अथ ब्रह्मदेयायाः[2] प्रदानविधिं वक्ष्यामः । १ ।**

दे०। ब्राह्मण[3] विधिना या दीयते सा ब्रह्मदेया[4] । तस्याः प्रकृष्टे दाने विधिमितिकर्तव्यतां वक्ष्यामः। अथाधिकारार्थः । ब्राह्मो दैवः आर्षः प्राजापत्यः आसुरः गान्धर्वः राक्षसः पैशाच इत्यष्टौ विवाहाः । तत्र ब्राह्मासुरव्यतिरिक्तानां[5] षण्णां विधानं सुप्रथितं नेह वचनमर्हति । तेन ब्राह्मासुरयोरेवेतिकर्तव्यतोक्ता[6] । तथा हि प्रसह्यापहाराद्राक्षसो विवाहस्तत्र किं प्रकाराभिधानेन । न किंचिदित्यर्थः । एवमसविज्ञातोपगमात्पैशाचोऽपि प्रकारवचनं नार्हति पापत्वात् । स्वयमिच्छन्त्या सहेच्छावतः[7] संयोगाद्गान्धर्वस्तत्राप्यसाधारणीकेतिकर्तव्यता । सह धर्मश्चर्यतां सहापत्यमुत्पाद्यतामिति धर्मे चार्थे च कामे च नाभिचरयितव्यमिति प्राजापत्यविधिः प्रथितः । अलंकृत्य कन्यामन्तर्वेद्यृत्विजे प्रदीयत इति दैवः । गोमिथुनं कन्यावते दद्यादित्यार्षस्य विधानं[8] ॥

आ०। अथशब्दो मङ्गलार्थः । ब्राह्मण विवाहेन दीयते या सा ब्रह्मदेया ।

---

1 R. उपयमन, cp the Vivarana of Sūtra 11 2 Thus both the Mss of Br (also in his comm.), Ad., the Berlin, Bombay, Parisian and Stein reakas; ब्राह्म० D, T, C (sec. hand); ब्रह्म० A and C (first hand) 3 ब्राह्मगन C T A. 4. Thus A D; ब्राह्म० T C. 5 Thus D (second hand); ०तिरेकाणां C sec. hand; ०तिरिकाणां T and first hand of D; ०तिरेकिणां A and first hand of C. 6. ब्रह्म० all. 7 Thus C D and first hand of T; ०च्छांवहतः A and sec. hand of T. 8 For this whole passage cp Gaut. dhS IV. 6–13

ब्रह्मशब्दो विवाहोपलक्षणार्थः । दैवस्याप्ययमेव विधिः । त प्रदानमितिकर्तव्यतां वक्ष्यामः ॥

**शुद्धपक्षस्य[1] पुण्याहे पर्वणि वोदगग्रान्दर्भानास्तीर्य तेषूपविशतः प्राङ्मुखः प्रतिग्रहीता सामात्यः प्रत्यङ्मुखः प्रदाता २ ।**

दे० । शुक्लपक्षस्य संबन्धिनि प्रशस्ते ज्योतिःशास्त्रविशुद्धे दिवसे पर्वणि वा पौर्णमास्यरूपे विस्तररूपपवित्रार्थमुत्तरदिगग्रान्दर्भानास्तीर्य । ततो दातृप्रतिग्रहीतारावुपविशतः[2] । प्राङ्मुखो भूत्वा कः । प्रतिग्रहीता । कीदृशः । सामात्यः । सपरिजनः । प्रदाता पुनः प्रत्यङ्मुख उपविशेत् । तथैव । सामात्यो दर्भानास्तीर्योदगग्रान् ॥

ब्र० । अत्र दातृप्रतिग्रहीत्रोः सुहृद्बन्धुभृत्यैः सहोदगग्रेषु दर्भेषूपविष्टयोः ॥

आ० । शुद्धपक्षस्यापूर्यमाणपक्षस्य । पुण्याहे पुण्येऽहनि । शुद्धतिथिनक्षत्रग्रहकरणयोगयुक्ते[3] विष्टिव्यतिपातगण्डान्तदुर्योगग्रहोपतपविवर्जिते ज्योतिःशास्त्रप्रसिद्धे । अथवा पर्वणि । दर्शपूर्णमासयोः । कन्यां दद्यात्प्रतिगृह्णीयाच्च । कथं । उदगग्रान्दर्भानास्तीर्य तेषु दर्भेषूपविशति । यतः प्राची दिक् ततो मुखमस्यति प्राङ्मुखः । कोऽसौ । प्रतिग्रहीता । कन्यायाः पितृव्यमातुलादिभिरमात्यैः सह वर्तते यः स सामात्यः । तेषु दर्भेषु प्रदातोपविशति । सामात्य इत्युभयत्रापि संबध्यते ॥

**मध्ये प्रागग्रोदगग्रान्दर्भानास्तीर्य[4] तेषूदकं संनिधाय**

---

9. Thus all the Mss., besides the four of Devapāla, which read शुक्लपक्षस्य. 10. Thus emended; D: ०तारौ प्रविशत॰, ०ग्रहीत्रो- प्रविशेत् T A C. 11 ०युक्त the Ms. 12. Thus the two Mss of Br, the Berlin-, Stein- and two Tuebingen 1eakas: all the Mss. of Devapāla and the Parisian reaka: प्रागुदगग्रान्दर्भा॰.

**व्रीहियवानोप्य[1] °दक्षिणत उदङ्ङासीन ऋत्विगुपयमनं कारयेत् । ३ ।**

दे० । तयोर्दातृप्रतिग्रहीत्रोर्दक्षिणदेशे उत्तराभिमुख उपविष्टः सन्नृत्विग्विशेष आचार्यस्तयोरुपयमनं दातृप्रतिग्रहीतृसंबन्धं[2] कारयेत् । किं कृत्वा । दातृप्रतिग्रहीत्रोर्मध्ये प्रागग्रानुदगग्रांश्च दर्भानास्तीर्य तेषु च दर्भेषु कंसपात्र्यामुदकं[3] संनिधाय । तत्रोदकमध्ये व्रीहियवस्यावपनं कृत्वा । अथोदकं संनिधायेति सामान्यवचनात् । कंसस्य[4] कुतो लाभः । कंसे[5] हिरण्यं समोप्येति दर्शनात्[6] ॥

ब्रा० । ऋत्विङ् मध्ये यथाचारं शालिचूर्णैर्मण्डलं[7] कृत्वा स्वस्त्ययनं च कृत्वा[8] तत्र प्रागग्रान्दर्भान्प्रथममास्तृणाति तेषूपर्युदगग्रांस्तत्रोदकपूर्णं कंसं[9] परिवर्तुलं मङ्गल्यपात्रं व्रीहियवगर्भं निदधाति । तत्र यथाचारं विवाहोद्वाहदेवता अभ्यर्च्य दक्षिणत उदङ्मुख उपयमनं वक्ष्यमाणविधिना करोति ॥

आ० । मध्ये दातृप्रतिग्रहीत्रोः प्रागग्रानुदगग्रान्दर्भानास्तीर्य । प्रथमं प्रागग्राः । तेषु दर्भेषूदकपूर्णं कंसं निधाय । कंसे हिरण्यं समोप्येति दर्शनात् । उदकं वा संनिधायेति । तत्रोदके व्रीहियवान्प्रक्षिप्य ततो दक्षिणत उदङ्मुख उपविष्टः । कोऽसौ । ऋत्विक् । उपयमनं कुर्यात् ॥

**समेतेष्वाह ददानीति प्रतिगृह्णामीति त्रिरावेदयते ।४।**

दे० । समेतेषु संघट्टितेषु दातृप्रतिग्रहीतृबन्धुषु सत्स्वृत्विग्ब्रूयात् । दातुस्तावदिदं ब्रूयात् । कन्यास्मै प्रदीयतामिति । प्रतिग्रहीतुः कन्यास्मात्प्रतिगृह्यतामिति । ततो ददानि ते इति त्रिरुच्चारयति

1 व्रीहीन्यवान्वोप्य the Lahore Ms of Br. instead of °ओप्य, the Mss of Devapāla and the Bombay reaka उप्य, the Berlin, Stein and Tuebingen reakas वाप्य, cp LX 6　2 Thus A; °गृह्यसंबन्धं the other Mss.　3 काम्य° D　4 कांस्यस्य D　5 कांसे D　6 See XVI. 5　7 °र्णैः स्वस्तिका the Bombay Ms of Br　8. पठित्वा the Lahore Ms　9 काम्यं the Bombay Ms

दातारं बोधयेत् । दाता तथैव कुर्यात् । एवं प्रतिगृह्णामि ते इत्यप्यृत्विजावेदितः प्रतिग्रहीता ब्रूयात् । त्रिषत्या[1] हि देवा इति श्रुतिः[2] । त्रिरभिहितं न व्यभिचारि स्यात्सकृदुक्तं व्यभिचारो भवतीति त्रिरुच्चरणमिष्टं । अत एव समेतेष्वाहेत्युक्तं बहुजनसंनिधौ दत्तां[3] प्रतिगृहीतां[3] च न कश्चित्कदाचिदपहर्तुं त्यक्तुं वा शक्यतीति ॥

ब्र० । कन्यां ददात्वस्मै भवानिति दातारं प्रचोदयेत् । कन्यां प्रतिगृह्णात्वस्मद्भवानिति[4] वरं । एवं त्रिवारं । उदकपूर्वं दत्तायां कन्यायां प्रणवोच्चारणपूर्वं भगवन् कन्यां प्रतिगृह्णामीति त्रिवारं । नात्र सावित्रः प्रतिग्रहमन्त्रः । प्रत्याम्नानात् ॥

आ० । समेतेषु संगतेषु ज्ञातिष्वाह । किं । कन्यां ददात्वस्मै भवानिति प्रदातारं चोदयेत् । कन्यां प्रतिगृह्णात्वस्मद्भवानिति[4] वरं । ततो ददानि ते प्रतिगृह्णामीति त्रीन्वारानावेदयते । उच्चैर्भाषयते दातृप्रतिग्रहीतारौ । कन्यां ददानि त इति दातारं जल्पयते । कन्यां प्रतिगृह्णामीति वरं । एवं त्रिरावेदनमुच्चैः सुव्यक्तं यथा भवति निबन्धनमेतदुपयमनमृत्विक् कार्यद्वयेनापि ॥

**एतद्वः सत्यमित्युक्त्वा समाना वः सं वो मनांसीत्यृत्विगुभौ समीक्षमाणो[5] जपति । ५ ॥ १५ ॥ (२।३ )**

दे० । एतद्दानप्रतिग्रहकर्म युष्माकं सत्यमव्यभिचारितमस्त्विति लौकिकोक्तौ । ऋत्विक् समाना व इत्यादिकमृग्द्वयं जपति । उभौ दातृप्रतिग्रहीतारौ वीक्षमाणः[6] ॥

ब्र० । प्रतिगृहीतायां कन्यायामृत्विगेतद्वः सत्यमिति दातृवरौ पश्यन्नाह । एतन्नः सत्यमिति प्रतिवदतः । एवं त्रिर्व्यत्यासं ततो वरस्योत्तरत उपविष्टायां वध्वां समाना वः सं व इत्यृत्विग्वधूवरावीक्षमाणो जपति । जपादूर्ध्वं वरस्योत्तरत उपवेशयेदित्यन्ये ॥

---

1 त्रिस्त्या the Mss. 2 See Kāṭh. VIII 17 102 9. 3 ०त···०तं D. 4 ०स्माद्भ० the Mss. 5 ०माणौ the Mss of Devapala (but see the comm.) and the Stein and Parisian ṭīkās. 6 वीत्त्यमाणः the Mss.

आ०।एतद्वः सत्यमित्युक्त्वा ऋत्विक्। ते ऽपि एतन्नः सत्यमिति प्रतिवचनं यथालिङ्गं वदन्ति। ततः समाना वः सं वो मनांसीत्यृग्द्वयमृत्विगुभौ पक्षौ वधूवरयोः समीक्षमाणो[1] जपति। पुनर्ऋत्विग्ग्रहणादेतन्नः सत्यमिति प्रतिवचनं ज्ञायते। अत्र सावित्रः प्रत्याम्नातः। कन्यां तूषे करे वा गृहीत्वा कन्यां प्रतिगृह्णामीत्येष एव प्रतिग्रहः॥

---

## अथ शुल्कदेयायाः।१।

दे०। आसुरविवाहविधिमाह[2]। अथ शुल्कदेयायाः। प्रदानविधिरुच्यत इति शेषः। शुल्केन मूल्येन या दीयते सा शुल्कदेया॥

ब्र०। शुल्कदेयाविधिरासुरविवाह विषयः।...कुमारीणां यदा केशा वेणीबन्धनयोग्याः स्युस्तदा सीमन्तोन्नयनविधिना सद्योद्धरणममन्त्रकं[3] प्राग्वाक्प्रदानात्कर्तव्यमिन्द्राणीमासु नारीष्विति यद्वक्ष्यति तद्वाचा दत्तायां कन्यायामिन्द्राणीयाग आज्येन वाग्दानदिवसे भवेत्[4]। तत्राज्यं हविः। आज्यं हविरनादेश इति हि परिभाषा[5]। यज्ञं यजेतेति[6] वचनात्। इति तन्त्रं लक्ष्यते। तस्मादाज्यभागान्ते चतुर्गृहीतेन प्रधानम्।

अमन्त्रिका[7] तु कार्येयं स्त्रीणामावृदशेषतः।<br>
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्॥

आ०।मिथुनं[9] शुल्कः। तथा। आसुरे ज्ञातिभ्यो द्रविणं दत्त्वा। स च वैश्यस्य द्रविणवत्त्वात्। तेन शुल्केन या दीयते सा शुल्कदेया। तस्याः प्रदानविधिं वक्ष्याम इति शेषः।

## हिरण्यं व्यतिहरतः।२।

1 समीक्षमाणा the Ms. 2 असुर० the Mss. 3 Thus the Lahore Ms. of Br.; the Bombay Ms. ०मगं समन्त्रकं 4 Thus the Lahore Ms. of Br.; the Bombay Ms. omit यद्वक्ष्यति and the words कन्यायां० ...भवेत्। 5 In the 3rd Kandika of the Laugaksi-grhyasutraparibhasa. 6 The Bombay Ms. यजेदिति. 7 The Bombay Ms. आम०। 8 Manusmrti II 66. 9 This means probably गोमिथुनं।

दे० । सुवर्णं विजिगीषया परस्परं ददतो दातृप्रतिग्रहीतारौ । आसुरत्वादस्य[1] विजिगीषोः[1] । प्रधानत्वाच्चासुराणां राजसत्वेन अन्योन्योपचारं कुरुत इति गम्यते । कन्यामूलभूतं तु सुवर्णं व्यतिहरतो निश्चिन्वतो द्वौ दातृप्रतिग्रहीतारौ । संभूयेत्यर्थद्वयं[2] तन्त्रेणावृत्त्यावगम्यते ॥

आ० । हिरण्यं व्यतिहरतो दातृप्रतिग्रहीतारौ परस्परं समर्पयतः ॥

**प्रजाभ्यस्त्वेति प्रददाति । ३ ।**

दे० । तत्प्रकृतं हिरण्यं प्रजाभ्यस्त्वेत्यनेन ददाति वरः कन्यायाः पित्रे ॥

आ० । प्रददाति वरः ॥

**रायस्पोषाय त्वेति प्रतिगृह्णाति । ४ ।**

दे० । कन्यायाः पिता प्रतिगृह्णाति ॥

**कंसे हिरण्यं समुप्य[3] हिरण्यवर्णा इति चतसृभिः[4] समवमृशन्ते । ५ ॥ १६ ॥ (२ । ४)**

दे० । सर्वे बन्धव उपस्पृशन्ति । बहुवचनं सर्वबन्धवपेक्षणं । तत्कन्यामूलभूतं हिरण्यं प्रतिगृहीत कंसपात्रे निधाय जलयुक्तं हिरण्यवर्णा इत्यृग्भिस्तिसृभिः[5] समवमृशन्ते घोरपापविशुद्ध्ये ॥

आ० । कंसे हिरण्यं समोप्य[6] प्रक्षिप्य प्रकृतं हिरण्यवर्णा इति चतसृभिः समवमृशन्ते । बहुवचनात्सर्वे ज्ञातयोऽपि । हिरण्यमन्यदेव न मूल्यं । मूल्यमन्यदपि भवति ॥

---

1 Thus A D; आसुरत्वार्षस्य विजिगीषुः । 2. संभूयेतत्यथ० A 3. Thus Br, all the Mss of Devapāla, the Berlin and two Tuebingen ṭeakas, only the Parisian ṭeaka 230 (and cp Ād ) reads समोप्य; cp Ād on XV. 3 4 The four verses are intended, which correspond (with various readings) to TS V 6 1. a, c, b, d They formed probably a part of the Kathaāranyaka 5 Thus D; A om ऋग्भि । The reading must be incorrect, as four verses are intended 6 समेप्य the Mss

गौदानिकैर्मन्त्रैः[1]। कन्यामलंकृत्य चतुष्पादे भद्रपीठे प्राङासीनायाश्चतस्रो ऽविधवा माता पिता च गुरुः सप्तमस्तां सहस्रच्छिद्रेण पवित्रेण स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोतीन्द्राय स्वाहेन्द्राण्यै स्वाहा कामाय स्वाहा भगाय स्वाहा ह्रियै स्वाहा श्रियै स्वाहा लक्ष्म्यै स्वाहा पुष्ट्यै स्वाहा विश्वावसवे गन्धर्वराजाय स्वाहेति । १ ।

दे० । अथ विवाहमाह ।··· पादचतुष्टययुक्तो भद्रपीठः । शोभने आसने प्राङ्मुख्या उपविष्टायाश्चतसृषु दिक्षु चतस्रो ऽविधवा भवन्ति । वामभागे माता । दक्षिणभागे पिता । अग्रे गुरुः संस्कारस्य कर्ता सप्तमः । तेषु यथासंनिवेशनं स्थितेषु । गोदाने भवा गौदानिकाः । तैर्मन्त्रैस्तां गुरुः कन्यां सहस्रच्छिद्रयुक्तेन पवित्रेण पावनेन वस्त्रविशेषेण सुप्रजास्त्वाय गौदानिकैरेव मन्त्रैः कटककेयूरादिभिर्यथाविभवमलंकृत्याहतेनानुपभुक्तेन वाससा प्रच्छाद्य स्थालीपाकेन गुरुर्जुहोति । अत्र पल्लवचतुष्टयं वस्त्रस्य पवित्रस्य चतस्रो ऽविधवा अवष्टभ्नन्ति । मातापितरौ जलमभिषिञ्चतः । गुरुमन्त्रपाठं करोति[2] स्नापने ऽलंकरणे च गुरुरेव प्रयोजककर्ता[3] तेन होमेन समानकर्तृकत्वं ।··· विश्वावसवे गन्धर्वराजाय स्वाहा इत्येकैकाहुतिः । तेन नव भवन्ति ॥

ब्र० । ब्राह्मदेयविधिना प्रत्तायां कन्यायां सौभाग्यविवृद्धये विवाहसंनिकृष्टेष्वहस्सु गौदानिकमन्त्रस्नापनपूर्वमिन्द्राद्या नव देवता स्थालीपाकेन यष्टव्याः ।··· शुद्धपक्षस्य पुण्याह इदं सर्वं ।

1 Thus or गोदा the Mss promiscue　2 This passage (beg अत्र पल्लव०) is cited as taken from Devapāla, by the author of the Kurmakāṇḍa in the Stein and Parisian Mss　3 Thus or प्रयाजन० the Mss

…आज्यभागान्तं हुत्वा हारकेयूराद्याभरणालंकृतां दक्षिणतो ऽग्नेश्चतुष्पादे भद्रपीठे प्राङ्मुखीमुपवेश्य तस्या मूर्ध्नि सहस्रच्छिद्रं शुक्लोर्णोतं पवित्रं सव्येन पाणिना सप्त यथोक्ताः स्नापकाः स्वयं चालंकृताः प्रान्तैरवष्टभ्य सर्वगन्धकुङ्कुमकर्पूरजातीफलपूगफलमङ्गल्यफलादिदूर्वाक्षतनानाविधकुसुममङ्गल्यवृक्षपल्लवादिमिश्रितवारिपूर्णकलशैर्दक्षिणपाणिस्थैर्या आपो दिव्या इति[1] द्वाभ्यामेना व्याघ्रमिति च[1] स्नापयन्ति । ततो ऽवरूढां गुरोर्दक्षिणतो मङ्गल्यमञ्चोपविष्टामहतेन वाससा प्रच्छाद्येन्द्राय स्वाहेत्येवं नव यथोक्ताः प्रधानाहुतीः स्थालीपाकस्य मेक्षणेनावदाय जुहोति । विश्वावसवे गन्धर्वराजाय स्वाहेति नवमी ॥

आ० । इदानीं भर्तृसंयोगे सति मन्त्रवत्संस्काराधिकारान्पिता करोति । गौदानिकैर्मन्त्रैः कन्यां स्नापयित्वेति संबन्धः । कन्यामलंकृत्य कटककेयूरकुण्डलादिभिः । चतुष्पादे भद्रपीठे त्रिपात्स्नानपीठं भवति । अत्र चतुष्पादग्रहणं । प्राङ्नासीनायाः चत्वारो ऽविधवा… स्नापयन्ति । गौदानिकैर्मन्त्रैर्या आपो दिव्या इत्यादिभिः । तथा सर्वसुरभिणानुलिप्यमानामेना[2] व्याघ्रं परिषस्वजानमित्येतदभिप्रायं गौदानिकैर्मन्त्रैः स्नापयित्वेति । चतस्रो ऽविधवाः सहस्रच्छिद्रं वस्त्रं पर्यन्तेषु गृहीत्वा शिरसि धारयन्ति । माता पिता गुरुश्च वाससः उपरि या आपो दिव्या इत्यपो ऽभिषिञ्चन्ति । … ततः स्थालीपाकस्य जुहोति इन्द्राय स्वाहेति । …ये तु गौदानिकैर्मन्त्रैर्जटाकर्ममन्त्रैः कन्यायाः क्षुरेणालंकृतिं व्याचक्षते तेषां केशवपनं प्रत्याख्यातं ।

---

1 The Gaudānikamantras refer to XLIV 3 According to Devapāla only two verses are meant, viz Kāth, XXXVII 9 : 89 14-17 , this statement must be false, as the text has the plural Br gives these two verses and (probably as the last gaudānika) Kāth I c 90 15 See also Ād on this sūtra.

2 Conjectural reading, the Ms has ०लिप्यमानसेना.

अस्तु चेच्चूडाकरणमेव किं नातिदिष्टं समाचारविरोधश्चा-
मङ्गलं । एतस्माद्यदेवास्माभिर्व्याख्यातं तदेव साधीयः ॥

**नाडीं[1] तूणवं मृदङ्गं पणवं सर्वाणि च वादित्राणि गन्धोदकेन समुपलिप्य[2] कन्या प्रवादयते शुनं वद दुन्दुभे सुप्रजास्त्वाय गोमुख प्रक्रीडयन्तु कन्याः सुमनस्यमानाः सहेन्द्राण्या कृतमङ्गला इति । २ ।**

दे० । नाड्यादीनि सर्वाणि वादित्राणि गन्धोदकेन सुगन्धिना चतुःसमाधिकेनोपलिप्य[3] पूर्वं कन्यैव प्रवादयते । वाद्यमानेषु च गुरुर्मन्त्रं पठति । तत्र नाडी वंशः । तूणवं गोमुखः वाद्यविशेषः ॥

ब्र० । प्रधानानन्तरं नाडीतूणवादि गन्धोदकेनोपलिप्तं शुनं वद दुन्दुभ इत्यादिना कृतमङ्गला इत्यन्तेन मन्त्रेण कन्या प्रवादयते । तत ऋतुतिथियागादितन्त्रे समाप्ते[4] स्वस्त्ययनं कृत्वा सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् ॥

आ०। ततो नाड्यादीनि वादित्राणि गन्धोदकेन चन्दनकुंकुमादिकल्केन समुपलिप्य कन्या प्रथमं वादयते । ...नाडी वंशः । तूणवस्तत्प्रकारः मुखवायुपूरणः । नालवक इति प्रसिद्धः ॥

**प्रतिसखि प्रक्रीडयत्येकमहर्द्वे वाहोरात्रे[5] ।३।१७॥ (२।५)**

आ० । ततः प्रतिसखि क्रीडयाति । सखी सखी नर्तयति गापयन्ति[6] च । एकमहः । द्वे वाहनी । अहोरात्रे वा द्वे ॥

---

**यज्ञियस्य वृक्षस्य प्रागायतां शाखां सकृदाच्छिन्नां सूत्रतन्तुना प्रच्छाद्य सावित्रेण कन्यायै प्रयच्छति । १ ।**

दे० । यज्ञमर्हतीति यज्ञियः । यज्ञर्त्विग्भ्यां घखञाविति[7] । यज्ञार्हाणां वृक्षाणां वटादीनामन्यतमस्य संबन्धिनीं शाखां सकृदाच्छिन्नां सूत्रतन्तुना प्राच्यां दिश्यायतां प्रसृतां सकृदेकेनैव प्रहारेण

---

1 नाडी all the Mss of Devapāla 2 समनुलिप्य the Lahore Ms of Br only 3 R : चतुः समादिके० ? A om these words. 4 Cp XLVII 12 5 Of the Mss of Devapāla only D has this sutra The Bhāṣya on it is missing in Devapāla. For Br comp his remark on XVIII 1 6 गोपयंति the Ms Read perhaps सखी सखी नर्तयति गापयति च. 7 घञाविति D, other Mss are utterly corrupt, cp Pāṇini V 1 71

छिन्नामेकसरेण सूत्रतन्तुना प्रच्छाद्य कन्यायै प्रयच्छति । देवस्य त्वेत्यादिना प्रयच्छामीति कन्यायै प्रददाति गुरुः ॥

ब्र० । एकमहर्द्धे वाहोरात्रे सखीभिः सह गायननर्तनादनन्तरमश्वत्थोदुम्बरादियज्ञियवृक्षोद्भवां पूर्वदिक्प्रसृतां सकृदाच्छिन्नां लोहितसूत्रप्रच्छन्नां सावित्रेण कन्यायै शाखां प्रयच्छति ॥

आ० । ...देवस्य त्वेत्यनेन शाखां प्रयच्छामीत्यन्तेन ॥

**या तेऽलक्ष्मीर्मातृमयी[1] पितृमयी संक्रामणी सहजा वापि काचित् । तां तिष्येण सह देवतया निर्भजामि निर्णुदामि सा द्विषन्तं गच्छतु तिष्यबृहस्पतिभ्यां नमो नम इति[2] । २ ।**

दे० । गृहीतशाखां कन्यां मन्त्रयते[3] गुरुः[4] । या तेऽलक्ष्मी०...नमो नमः ...अन्ये तु तिष्यबृहस्पतिभ्यां नमो नम इति एकं यजुरेकदेशमाच्छिद्य शाखोत्सर्गे प्रयुञ्जते वक्ष्यमाणे ॥

ब्र० । या तेऽलक्ष्मीरिति शाखाहस्तामनुमन्त्रयते । तिष्यबृहस्पतिभ्यां नमो नम इत्यन्तो मन्त्रः ॥

आ० । या तेऽलक्ष्मीरिति गृहीतशाखां कन्यामनुमन्त्रयते नमस्कारान्तेन । अलक्ष्मीनिर्णोदनमेतच्छाखाप्रदानम् ॥

**तस्या उत्सर्गः स्थावरोदके शुचौ वा देवतायतने[5] । ३ ॥ १८ ॥ ( २ । ६. )**

दे० । स्थावरोदकं कूपतडाकादि । तत्र तस्याः शाखाया उत्सर्गः प्रतिपत्तिकर्म । शुचौ देवगृहे । देवगृहं मद्योपहारशोणितादिनापवित्रमपि संभाव्यते । तदर्थं शुचिग्रहणम् ॥

ब्र० । शाखाया यथोक्तस्थाने स्थापनं । होमस्यानाम्ना न त्रिकादिभिर्जुहुयात् ॥

---

1. अल० T C A and the Stein reaka. 2. Thus Br. (इति not given by Devapāla). If the text has contained no more, it is not apparent whereto this mantra belongs. Perhaps the meaning of the sūtrakāra was, to connect it with Sūtra 3 Cp. Devapala on this Sūtra. The Stein reaka adds immediately : इति शाखाया उत्सर्गः । 3. R. : अनुमन्त्रयते. 4 This clause not given by A Could these words, which in Devapāla precede the mantra, contain a Sūtra ? Cp. also Br. and Ād 5. The Lahore Ms. of Br. and a Tuebingen reaka : शुचौ वा देशे देवतायतने वा ।

आ० । स्थावरोदके शुचौ वा देवतायतने । देवतायतनमशुच्यपि भवति मद्यरुधिरोपहारसंबन्धात्[1] । अतो विशेषणं शुचाविति । अत्र होमशङ्का न कार्या[2] ॥

---

**अथातो हविष्यकल्पं व्याख्यास्यामः । १ ।**

दे० । हविष्यकल्प इति पारिभाषिकी कर्मविशेषसंज्ञा ॥

ब्र० । द्वादशवर्षं यावद्यद्यनूढा कन्यात ऊर्ध्वं रजस्वलेतिदोषनिवारणार्थं हविष्यकल्पः ॥

आ० । अथशब्दो ऽत्र नैमित्तिकप्रदर्शनार्थः । ब्रह्मचर्यान्तं निमित्तं । दशवार्षिकं ब्रह्मचर्यं कुमारीणां द्वादशवार्षिकं वा । अत ऊर्ध्वं पुरुषं प्रतीच्छया स्वप्ने वा रेतःसेकः संभाव्यते । अत ऊर्ध्वमेतत्कर्मावश्यं कर्तव्यं । अतो हविष्यकल्पनाम व्याख्यास्यामः ॥

**दशवार्षिकं ब्रह्मचर्यं कुमारीणां द्वादशवार्षिकं वा । २ ।**

दे० । वर्षदशकादूर्ध्वं ब्रह्मचर्ये[3] कुमारी न स्थापयितव्या पित्रा । आगत्या[4] वा[4] द्वादश वर्षाणि नातिक्रमणीयानि ॥

**ब्रह्मचर्यान्ते गन्धर्वे देवकुले वा द्वावग्नी प्रज्वाल्य द्वौ पशू उपाकरोत्यर्यम्णे[5] दक्षिणं प्राजापत्यमुत्तरम् । ३ ।**

दे० । ब्रह्मचर्यावसाने विवाहात्पूर्वं गन्धर्वे निर्निमित्तजलस्राविणि देशे देवतायतने वा लौकिकौ द्वावग्नी प्रज्वाल्य द्वौ पशू छागौ कन्यासंस्कारार्थमुपाकुर्यात् । पशुकल्पवत्[6] । एकमर्यम्णे दक्षिणभागवर्तिन्यग्नौ द्वितीयं प्रजापतये उत्तरभागवर्तिन्यग्नौ । इतिकर्तव्यतां समन्त्रव्याख्यानां पशुकल्प एव व्याख्यास्यामः ॥

ब्र० । अत्र द्विपशुपक्षे द्वावृत्विजौ वरुणप्रघासवत् । एकपशुपक्षे एक एवाग्निरेक एवर्त्विक् । विशेषवचनाभावादजपशू एव द्वौ । ऋतस्य त्वेत्यत्रार्यम्णे जुष्टं प्रजापतये जुष्टमिति पश्वलाभे न प्रयोगः ।

आ० । एतद्वयसो ऽर्वाङ्[7] न कर्तव्यं । ब्रह्मचर्यान्तसंभावनमात्रेणैव कर्तव्यं । गन्धर्वे गन्धर्वोदकसंनिधाने प्रतिमा देवकुले वा । कथं कर्तव्यं । अग्नी द्वौ प्रज्वाल्य वरुणप्रघासवत् द्वौ पशू उपाकरोति । पशुकल्पवत् । अर्यम्णे दक्षिणं प्रजापतये उत्तरम् ॥

---

1. Emended: सत्यरु० the Ms. 2. Emended : मकार्यः the Ms. 3 Found only in A. 4. Thus TC (C. first hand, आगत्य वा); अगत्या वा A; आपत्यापि वा D. 5 ०यम्णो D T C; as given in the text A and Br. and the Parisian reaka. 6 See LI 7 ऽर्वाङ् the Ms.

**असंभवे त्वेकपशुः । ४ ।**

दे० । प्रचुरार्थाद्यभावे एक एव द्विदैवतः पशुरुपाकर्तव्यः । अवदानानि च हृदयादिभ्यो मेदोऽन्तेभ्यो द्वादशभ्यो[1] द्विर्द्विर्ग्रहीतव्यानि । अर्यमप्रजापतिभ्यां स्वाहेति होमः । एक एव च योगः सह तयोरेकदेशत्वधर्मसमवायात् । अत एव केचिद्धृदयादिभ्यो द्विगुणान्यवदानानि नेच्छन्ति ॥

ब्रा० । यद्येक ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चाम्यर्यमप्रजापतिभ्यां जुष्टमित्यजं दक्षिणे ऽर्धशिरसि बध्नाति । अर्यमप्रजापतिभ्यामिति भीषाहोमः। अर्यमप्रजापतिभ्यां जुष्टमवक्रन्तामीति वपाकर्तनं । अर्यमप्रजापतिभ्यां स्वाहेति नामधेयहोमः ॥

आ० । यदार्थानुसमयेन क्वचित्काण्डवानुसमयेन सहार्थस्यानुग्रहाय असंभवे त्वेकपशुः यागो द्विदैवतः । अर्यमप्रजापतिभ्याम् ॥

**तण्डुलैर्वा कुर्यात् । ५ ।**

दे० । धनदौर्गत्ये सति हिंसानियमेन वा तण्डुलैः कुर्यात् । तण्डुलग्रहणं पिष्टकार्थम् ॥

ब्रा० । पश्वलाभे तण्डुलपिष्टेन वा पश्वाकृतिं कुर्यात् ॥

आ० । तण्डुलशब्दः प्रकृतिद्रव्यसमर्पकः । तेन तण्डुलपिष्टेन कर्तव्यः । अन्यथा वृत्तिसंगृहपक्तयो नोपपद्यन्ते अत्यन्तविकारत्वात् ॥

**यथास्थानं पशुर्यथास्थानमवदानानि तथा हविः । ६ ।**

दे० । यत्रैव स्थाने आज्यभागाभ्यां पूर्वे[2] मुख्यः[2] पशुस्तत्रैव पिष्टकपशुः अवदानान्यपि तेषां च श्रपणहोमौ इतिकर्तव्यता रशनाबन्धयूपनियोजनोपपायनविशसनादिलुप्तार्थवर्जं । हविः पशुपुरोडाशस्थाने स्थालीपाकः । तदपि यथास्थानं पशुपुरोडाशक्रमे । वपाहोमस्थाने त्वाज्यहोमः ॥

ब्रा० । तस्य वपामन्यानि चावदानानि हृदयादीनि यथास्थानं कल्पयेत् ॥

आ० । पिष्टपशोर्यथास्थानं पशुः यथास्थानमवदानानीति वदति । तेनोपाकरणशाखानियोजनोद्धननयनावदानादि पिष्टपशोरपि कुर्यात् । अवदानानि वपादीनि । तेभ्य एवाङ्गेभ्यो ऽवदाय श्रपयित्वा जुहुयात् । स्विष्टकृतं च त्र्यङ्गात् । एकपशावर्यमप्रजापतिभ्यां स्वाहेति होमः । बहून्यक्षराण्यतिरिच्यन्ते यत्र । ऋक्सामान्यक्षराणि । तत्र ऋक्षूहः । एतदर्थमाह[3]। पूयते वा एतदृचो

1. ०शभ्यो D T C. 2 पूर्वो मुख्यो A; पूर्व मुख्यं the other Mss
3 The following must be a citation from a Brāhmana.

यदुत्तरं यदेनमूहति तस्मादृचं नोहेत् । दर्शितश्च सूत्रकारेण तुल्याक्षर ऊहः । उन्मेष तिष्ठोद्युस्व तिष्ठेति[1] विचारः । तथा हविः । किमत्र विधीयते । यावत्पशुतन्त्रे प्राक् स्विष्टकृतो यथाचरितमन्नं साधयित्वेत्यप्येतत्किमर्थं[2] विधीयते । अत्रो-च्यते । इहान्यत्पशुपुरोडाशस्थानीयं हविर्विधीयते ॥

**अग्निं सोमं वरुणं मित्रमिन्द्रं बृहस्पतिं स्कन्दं रुद्रं वात्सी-पुत्रं भगं भगनक्षत्राणि कालीं षष्ठीं भद्रकालीं पूषणं त्व-ष्टारं महिषिकां[3] च[3] गन्धाहुतिभिर्यजेत ।७॥ १९॥(२।७)**

दे० । सुगन्धचन्दनघनसारादिद्रव्ययुतेनाज्येनाहुतयो गन्धाहुतयः । ताभिरग्न्यादिकाः सप्तदश देवता यजेत । वात्सीपुत्र इति देवतानाम । यतः शब्दैकसमधिगम्या देवता विभक्तिविपरि-णामेन चतुर्थ्यन्तैः स्वाहाकारयुक्तैः शब्दैरुद्दिश्याग्न्यादिदेवता यष्टव्याः । अग्नये स्वाहेत्यादिकैः ॥

ब्र० । वनस्पतियागादनन्तरमग्नये स्वाहा...वात्सीपुत्राय स्वाहा... महिषिकायै[4] स्वाहेति सप्तदश स्रुवेण कर्पूरकुंकुमगन्धाहुती-र्हुत्वा ऋतुतिथियागादि तुल्यम् । ...अतिक्रान्तद्वादशवर्षाणां कन्यानामिदं प्रायश्चित्तं नान्यासाम् ॥

आ० । ततोऽग्न्यादीन् गन्धद्रव्ययुक्ताभिश्चन्दनयुक्ताभिराहुतिभिर्यजेत। अग्न्यादीन्महिषिकान्तान्सप्तदशावापस्थाने यजेत। काल्यै स्वाहा षष्ठ्यै स्वाहेति होमः । उपहारो भवत्येव ॥

---

**अथातो हविष्यपुण्याहः । १ ।**

दे० । इयमपि पारिभाषिकी संज्ञा । हविष्येण व्रीह्यादिना पुण्येऽहनि क्रियमाणताशब्दप्रवृत्तिनिमित्तम्[5] ॥

आ० । अथातः शब्दो नैमित्तिकव्युदासार्थः । हविष्यपुण्याह इति कर्मणो नामधेयम् ॥

**उदकान्तं गत्वा यथोपपत्ति वा पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कां[6] स्नापयि-**

---

1. Cp Āp Śrs IX 18. 1-2. 2. साधयित्वेत्यप्येत० the Ms. The passage refers to ? 3 Uncertain; some of the Mss (the Lahore Ms of Br.; from the Mss. of Devapāla: A, the Parisian, the Stein, and a Tuebingen ıcaka) महिषकां; च not given by Br. 4 महिषकायै Lahore again. 5 Thus the Mss. ! 6 ०स्कं the Lahore Ms of Br, Ād and the Mss of Devapāla in the text, exc T

**स्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोतीन्द्राणी वरुणानी गन्धर्वाण्युदकान्यग्निर्जीवपुत्रः प्रजापतिर्महाराजः[1] स्कन्दो ऽर्यमा भगः प्रजानक इति। २॥२०॥ (२।८)**

दे० । उदकस्य समीपं गत्वा । अतिदूरं[2] तडाकादिके[2] ग्रामे[3] यथोपपत्ति[4] यत्रोपपद्यते स्थाने[5] क्षीरेण[6] स्थालीपाकं कृत्वा माङ्गलिकबिल्वाक्षोटादिफलोपेताभिः सर्वौषध्यादिगन्धयोगिनीभिश्चाद्भिरामलकैः कन्यां स्नापयेत् । सशिरस्कामित्यनेनान्यदा[7] स्त्रीणामशिरस्कमपि स्नानं भवतीति सूचयति स्नापनाहतवस्त्राच्छादनव्यवदानेन[8] च स्थालीपाकेन होमः स्नानाद्य तत्पूर्वं स्थालीपाक इति विवक्षितः क्रमः । चतुर्थ्या देवतापदपरिणामः स्वाहाकारश्च पूर्ववत् । जीवपुत्रो ऽग्निरित्येकैव देवता । जीवः प्राणो वायुः पुत्रो रक्षको ऽस्येति बहुव्रीहिरन्यपदार्थप्रधानो योग्यश्च संनिहितो ऽग्निरेवान्यपदार्थः । महाराज इत्यत्र न पूजनादिति[9] प्रतिषेधो ऽस्ति नियमाश्रयणात् । पूजायां स्वतीग्रहणं[10] कर्तव्यमिति वचनादन्यथा हि परमराज[11] इत्यादावपि ऋचः[12] प्रतिषेधः स्यात् । अन्ये तु महाराजा[13] इत्याकारन्तं पठन्ति । ते स्वतीनियमं[14] प्रति नाद्रियन्ते ॥

ब्र० । इन्द्राण्यै वरुणान्यै गन्धर्वाण्यै उदकान्यै...महाराजाय स्कन्दाय...प्रजानकाय जुष्टं निर्वपामीति सावित्रादिना समनुद्रुत्यैकादशभ्यो देवताभ्यो निर्वपति । आज्यभागान्ते हुते सर्वगन्धैः

---

1. ०राज T C and Br., as also the Parisian Teaka. The commentaries seem to point rather to ०राजा; but the Parisian Teaka has. महाराजाय स्वाहा. 2. Thus D T; ०दूरतडाका० A; ०दूरं तरतटाका० C, but तर effaced. 3. Thus D and second hand of C; ०त्वग्रामे A, ०दिकान्तग्रामे T; ०दिकान्ते ग्रामे first hand of C. 4. ०पत्तिः D T C, ०पत्ति A. 5. स्थानं D. 6. चीरे A. 7. माशिरस्कमि० A T C. 8. R ०व्यवधानेन ? 9. Thus (and cp. Pāṇini V. 4. 69) D T A; C first hand न प्रजानकादिति, corrected into नृपपूजनादिति (or ' न नृपू०?). 10. ०महणाय A C T. 11. ०राज्ञ A; D perhaps ०राज as also T. 12. ऋचोबाधः A. 13. Thus A only; ०राज C D T. 14. स्वतो० A.

फलोत्तरैः सशिरस्कां स्नापितां कन्यां नवेन शुक्लेन सदशेनानन्यधृतेन वाससाच्छाद्येन्द्राण्यै स्वाहा वरुणान्यै स्वाहेत्येवं पयसस्यावदायैकादश प्रधानाहुतयः। अग्नये जीवपुत्रायेत्येकाहुतिः।

आ०। तम् (हविष्यपुण्याहं)उदकसमीपे गत्वा कुर्यात्। यथोपपत्ति[1] वा[1]। यत्र वा कर्तुमुपपद्यते। पयसि स्थालीपाकं श्रपयित्वा नाप्सु। आज्यभागान्ते सर्वगन्धैः सर्वौषधिभिः फलोत्तमैरामलकादिकैः। तथा च। सर्वौषधीभिः संयुक्ताः शुष्क आमलकत्वचः। स्नानं माङ्गलिकं कुर्यादलक्ष्मीनोदनं हितम्। सशिरस्कमिति वचनादशिरस्कमपि स्नानं स्त्रीबालकानामिति ज्ञायते। अहतेन अव्युषितेन विभवानुसारेण वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति।...अग्नये जीवपुत्राय स्वाहेत्येकाहुतिः। जीवपुत्र इति बहुव्रीहिरन्यपदार्थमपेक्षते। महाराजेति समासान्तो[2] न कृतः। तेन महाराज्ञे स्वाहेति प्रयोगः॥

---

यामेव द्वितीयां रात्रिं[3] कन्यां विवाहयिष्यन्स्यात्तस्यां रात्र्यामतीते निशाकाले नवां स्थालीमाहृत्य पयसि स्थालीपाकं श्रपयित्वा[4] सर्वगन्धैः फलोत्तरैः सशिरस्कां स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य[4] जुहोत्यग्नये सोमाय मित्राय वरुणायेन्द्रायोदकाय भगायार्यम्णे पूष्णे त्वष्ट्रे राज्ञे प्रजापतय इति। १।

दे०। एका विवाहाहोरात्ररात्रिः। तस्याः पूर्वा या द्वितीया रात्रिः यस्यां पिता कन्यां विवाहयिष्यन्भवेत् विवाहयिष्यामीत्यनेन व्यवसायेन युक्तः। अथवा यां भविष्यन्तीं रात्रिमधिकृत्य पिता कन्यां विवाहयिष्यन्स्यात् तस्या या द्वितीया[5] रात्रिस्तामाश्रित्येतिकर्तव्यता प्रवृत्ता[6]। तस्यामेव रात्र्यामतीते

---

1. ०पत्तिर्वा the Ms 2. Cp. Pāṇini V. 4. 68. 3. रात्री Br., and the Berlin, Parisian and Tuebingen reakas. 4. From श्रपयित्वा unto ०कस्य not found in D; A also omits these words except the first श्रपयित्वा. T and C add them on the marge (T reading सशिरस्कं). 5. Thus A; पूर्वा द्वितीया D C T. 6. Thus D T. ०वृत्त' सन A, ०वृत्त' सं C

मध्यप्रहरद्वये महानिशाख्ये पूर्ववत्स्थालीपाकेन यागं कुर्यात् गुरुरग्न्यादिभ्यो देवताभ्यः ॥

ब्र० । अथ विवाहदिनस्य पूर्वेद्युररुणोदयवेलायां नवां स्थालीमाहृत्याग्न्यादिभ्यः प्रजापत्यन्ताभ्यो द्वादशभ्यो निरुप्य पयसि स्थालीपाकं श्रपयेत् । आज्यभागान्ते यथावत्स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोत्यग्नये स्वाहेत्यादि प्रजापतये स्वाहेति यावद्द्वादशेति । स्वाहान्ते होमः । तत ऋतुतिथ्याद्याश्रावितान्तं तुल्यम् ॥

आ० । यां रात्रिमवधिं कृत्वा द्वितीयां रात्रिं कन्यां विवाहयिष्यन्स्यात्तस्यामवधिभूतायामतीते निशाकाले महारात्र इत्यर्थः प्रहरार्धशेषमात्रे नवां स्थालीमाहृत्येति । नवग्रहणात्पुराणान्यन्यत्रापि भवन्ति । इह तु नियमः । पयसि स्थालीपाकमिति व्याख्यातं । श्रपणार्थीये पयसीत्यर्थः । अग्नये सोमायेति द्वादशाहुतीर्जुहोति ॥

एता एव देवताः पुंसः कुम्भं वैश्रवणमीशानं च यजेत । २ ॥ २१ ॥ ( २।६ )

दे० । पुंसो ऽपि तस्यां रात्र्यां संस्कारार्थमेतयैवेतिकर्तव्यतया एता एव देवता यजेत । कुम्भादयश्च तिस्र इति । एतावानेव च विशेषः । स्त्रियो द्वादशाहुतयः पुंसः पञ्चदश ॥

ब्र० । वरो ऽपि तस्मिन्नेवाह्नि एतस्मिन्नेव काले नवायां स्थाल्यां पयसि स्थालीपाकं श्रपयित्वाज्यभागान्ते तथैव स्नापयित्वाहतेन वाससा प्रच्छाद्यैताभ्यो देवताभ्यो हुत्वा कुम्भाय वैश्रवणाय ईशानाय तिस्र आहुतीर्यजेत । निर्वपणकाले ऽप्येवं पञ्चदश देवताः ॥

आ० । एता एव देवताः पुंसोऽतिदिश्यन्ते। अस्यामेव रात्र्यामन्यदा वा ॥

---

**चतस्रो ऽष्टौ वाविधवाः शाकपिण्डीभिः स्त्रियो[1] ऽन्नेन[2] च ब्राह्मणान्भोजयित्वा वीणागाथिभिः सह संगायेयुरपि वा चतुरो नर्तनं कुर्यात् । क्रीडं वः शर्धो मारुतमनर्वाणं रथेशुभं कण्वा अभिप्रगायतेति[3] ॥ १ ॥**

दे० । अविधवाः जीवद्भर्तृकाः । शाकमिश्राः पिण्ड्यः शाकपिण्ड्यः । चतस्रो ऽष्टाविति च प्रथमान्तं स्त्रीपदसमानाधिकरणं । चतस्रो ऽष्टौ वेति यथासंभवं विकल्पः । समसंख्यानियमार्थमेतच्चतुष्ट्वाष्टत्वनियमार्थमिति केचित् । तेनायं समन्वयः । अन्यूनाश्चतसृभ्यो ऽविधवाः स्त्रियः समसंख्याः षट्कवर्जाः शाकपिण्डीभिरन्यैश्च यथासमृद्धिभिर्भोजनविशेषैर्ब्राह्मणान्भोजयित्वा । वीणया वाद्यमानया सह ये गायन्ति तच्छीलास्तैः सह संभूता[4] मङ्गलाचारं[5] गायेयुः ।...... अपि वा चतुरो नर्तनं कुर्यात् । चतुरो नर्तनप्रवीणो नर्तनं कुर्यात् । यद्यसौ[6] शीलादिगुणयुक्तो भवेत् । विपर्ययेण तु न ताभिः सह नर्तनं कुर्यादित्यनेनाभिप्रायेणापिवाशब्दः । अनुष्ठानं त्वार्यवर्ते यादृग्दृश्यते तथा क्रमः । कन्यायाः मातृप्रभृतयो ऽष्टौ चतस्रो वा अविधवा यथाविभवं भोजयित्वा ब्राह्मणांश्चाविधवाभिः सह वीणागायिभिश्च गायन्ति नृत्यन्ति च सोत्साहं । तदनुसारेणायमर्थः । चतस्रो वा स्त्रियः कर्मभूतब्राह्मणांश्च शाकपिण्डीभिरन्येन च भोजनप्रकारेण भोजयित्वा वीणागायिभिः सहाविधवाभिश्च संगायेयुः । के अर्थात् कन्या-

---

1. Thus all the Mss. of Text and Comm.; the original reading must have been (cp. S'ānkh. gṛhs. I. 11. 5) सुरया. 2. Thus Br. and of the Mss. of Devapāla AT; न्येन DC. and Ād. Devapāla seems to have read अन्येन, see his Bhāṣya. 3. The verse, though given sakalapāṭhena, is found in the Kāṭhaka (XXI. 13: 54. 14). 4. Thus D; संभूता भूत्वा ACT. 5. मङ्गलगानं A. 6. यो ऽसौ A. 7. के ऽर्थाः A and first hand of D.

मात्रादयः । अपि वेति समुच्चये सर्वलो ऽसौ स्त्रीगणश्चतुरः सोत्साहो भूत्वा नर्तनं कुर्यात् । क्रीडं वः···प्रगायत । अनेन गायतो ऽनुमन्त्रयते ॥

ब्र० । पूर्वैद्युरेव विवाहाह्नः इदमपि कर्म ।······पतिवत्यः[1] स्त्रियो[1] नृत्तगीतकुशलाः शाकपिण्डीभिः शर्करामरिचघृतक्षौद्रमध्वादिसाधिताभिर्भोजयेत् । अन्येनान्नेन[2] च ।···ता अविधवास्ते च विप्रा वीणागायिभिः सह संगायेयुरपि वा तेषां मध्यादेक एव चतुरो गीतनृत्तज्ञः पुरुषः कश्चिन्नर्तनं कुर्यात् । क्रीडं व इति गायत ऋत्विगनुमन्त्रयते मन्त्रलिङ्गात् ॥

आ० ।···अविधवाः पतिव्रताः···पतिवत्य इत्यर्थः ।···अन्येन चोदनादिना ब्राह्मणांश्चान्येन च शाकपिण्डीभिर्भोजयित्वा । अक्षोटतिललवणदध्यादिसंस्कृताः शाकपिण्ड्यः । उभयसमुच्चयार्थश्चशब्दः । वीणागायिभिः संहताः संगायेयुः । वीणया सह ये गायन्ति ते वीणागायिनः । अपि वा चतुरो नर्तनं कुर्यात् । चतुरो नृत्तकुशलः । तद्द्वयं नृत्तं चानुमन्त्रयेत क्रीडं व इत्यनया । एतदाज्यभागान्तं कृत्वा कुर्यात् ॥

**अक्षतसक्तूनामग्निं पुष्टिपतिं प्रजापतिं च यजेत । अग्निना रयिमश्नवत्पोषमेव दिवे दिवे यशसं वीरवत्तमम्[3] ॥ प्रजापते न हि त्वदन्य[4] इति च[5]। २ ।**

दे० । अक्षतानामनवहतानां यवानां सक्तुभिरग्निं पुष्टिपतिं यजेताग्निना रयिमित्येतया ऋचा । तथा प्रजापतिं प्रजापत इत्यादिमन्त्रेण । एतावप्याज्यभागान्ते यागौ ॥

---

1. Thus the Parisian ṛcaka; Lahore: पतिमतीर्नारीः, Bombay: पतिव्रतीस्त्रियो. 2. Lahore: समान्येनान्न. 3. Thus Br, and the Parisian ṛcaka; वीर्यमुत्तमं the Mss. of Devapāla, but in the Mantrabhāṣya वीर्यवन्तं; वीरवन्तं A, वीर्यवन्तं TDC. 4. Br. gives this verse sakalapāṭhena. 5. Thus A (without अन्य); DCT: प्रजापतिमिति च; the Parisian ṛcaka reads as accepted into the text, omitting, however, च.

ब्र०। ततो ऽक्षतसक्तूनां पाणिनावदायाग्निना रयिं प्रजापते न हीति प्रधानद्वयं। ऋतुतिथ्याद्याश्राविताान्तं तुल्यम् ॥

आ०।···हविषो[1] यत्र यत्र षष्ठी स्थालीपाकस्य जुहोत्याज्यस्य जुहोतीति तत्राप्राणिनः षष्ठी पञ्चम्यर्थे वा द्वितीयार्थे वा संबन्धमात्रविवक्षया वा। अत्र चकारभगवतो[2] नारायणस्येतिवत्। न माषाणामश्नीयादित्यादिवच्च ॥

**सर्वत्रोद्वाहकर्मस्वनादिष्टदेवतेष्वग्निं पुष्टिपतिं प्रजापतिं च यजेत। ३ ॥ २२॥ (२ । १०)**

दे०। यत्र नाम्ना मन्त्रवर्णैर्वा देवतानिर्दिष्टा विवाहप्रकारेणोक्ते तत्राग्निं पुष्टिपतिं प्रजापतिं च यजेत । प्रकृतत्वादक्षतसक्तुभिराज्यभागान्ते भविष्यत्सु प्रास्थानिकादिष्वेतद्बोद्धव्यम्[3] ॥

आ०। प्राग्विवाह ऽय होमान्ते उद्वाहाः[4] । ते च सर्वे इत आरभ्यानादिष्टदेवताः[5] । यथा इदं प्रास्थानिकं विवाहो न च सहयक्षेषु[6] त्रिष्वनादिष्टदेवतेष्वग्निं पुष्टिपतिं प्रजापतिं च यजेत। आज्येनेति केचित्। देवताग्रहणाद्द्रव्यं परिसंचष्टे इति वदन्तः। अन्यथा सर्वत्रोद्वाहकर्मस्वनादिष्टदेवतेष्वित्यवक्ष्यत्*। नैवं। एवमुच्यमाने शाकपिण्डीभोजनं गायनं नर्तनं सर्वमतिदिष्टं स्यात्। अतो यागः सक्तुभिरेव ॥

---

**अथ प्रास्थानिकम्[7] । १ ।**

दे०। प्रस्थाननिमित्तं प्रास्थानिकं[7] कर्मान्तरं वक्ष्यत इत्यर्थः। प्रस्थानं च वरस्य श्वशुरगृहप्राप्तये विवाहं कर्तुम् ॥

ब्र०। इदं प्रास्थानिकं[7] कर्म वरस्य विवाहार्थं श्वशुरगृहागमनसमये कर्तव्यम् ॥

---

1. हविष्यो the Ms. 2. Corrupt ? Meaning ? 3. °ष्वेव बोधव्यं D, °ष्वेवद्बोधव्यं T C, °ष्वेतद्बोतव्यं A. 4. Reading ? 5. °रभ्यनादि° the Ms. 6. Are these words corrupt ? * and the Sūtrakāra would have omitted the words : अग्निं···यजेत. 7. Thus of the Mss. of Devapāla D only, TAC: प्रस्था°, प्रा° the Lahore Ms. of Br., and Ād., as also two Tuebingen ṛcakas.

आ० । अथशब्दः कन्योद्वाहत्वव्यावृत्त्यर्थः । पुंस एव वेदमिति[1] भावः प्रस्थाननिमित्तं कर्म प्रास्थानिकम् ॥

**तस्मिन्यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चाद्भगिनी सिचं गृह्णाति[2] शस्त्रं गृहीत्वा । २ ।**

दे० । तस्मिन्प्रास्थानिके कर्मणि । यथोक्तमुपसमाधायाग्नेः पूर्वं[3] कर्तव्यं । उद्धृतस्य[4] चावोक्षितस्य च परिसंवाहनपर्युक्षणपरिस्तरणपूर्वमाज्याहुतिपञ्चकेन संततीहोमैश्चैकादशभिः संस्करणमुपसमाधानमुच्यते । तत्र जयप्रभृतिभिर्मन्त्रैर्होमं कुर्यात् । जयाभिधानाभ्यातानहोमं कुर्यात् । आकूतं चाकूतिश्च[4] बृहस्पतिपुरोहिता ऋताषाडित्यादिभिर्मन्त्रैर्जुहुयादित्यर्थः । एते हि मन्त्रास्तत्साध्या वा होमा जयाभ्यातानराष्ट्रभृदाज्यभागादिशब्दसाधतया प्रसिद्धाः । आज्यभागान्ते चाग्निं पुष्टिपतिं प्रजापतिं च यजेत । सर्वत्रोद्वाहकर्मस्वनादिष्टदेवतेष्वित्यादिसूत्रवचनप्रामाण्यादिति[5] केचित् । अन्ये त्वाहुः । सूत्रकारप्रामाण्यादेव जयशब्दोऽत्राग्निप्रजापतिदेवतयोर्होमयोर्हुतयोः परिभाषतये । आज्यभागान्ते[6] चोप्रसमाधानमिति । कश्चित्त्वाह । विवाहकरणेऽन्तरान्तराचोदितत्वादाज्यभागान्तानि कर्माणि कृत्वा पुष्ट्यर्थमग्नये प्रजापतये चाक्षतसक्तुभिर्होमः कर्तव्यः । सूत्रकारवचनसंप्रत्ययार्थमिति । अन्यथा हि नाम्ना मन्त्रैर्वा सर्वत्र देवतावगमान्नानादिष्टदेवतं[7] किंचिदुद्वाहकर्मसु कर्म विद्यत इति । सूत्रार्थसंप्रत्ययाभावः स्यात् । एवं जयहोमेषु कृतेष्वाज्यभागान्ते वरस्य पश्चात्स्थिता सती भगिनी मुख्योपचरिता वा यथासंभवं खड्गच्छुरिकादीनामन्यतमं शस्त्रविशेषं हस्ते गृहीत्वा तूष्णीं सिचमुपरि-

1. Thus the Ms. 2. गृह्णातीति D; गृह्णामीति TAC. and the Parisian ṛcaka. 3. पूर्वकं T. 4. R. उद्धृतस्य. 4. See Appendix II. 5. See XXII. 3. 6. ०न्तं C. 7. ०देवते TC.

परिधानीयस्य[1] वाससो भ्रातुः संबन्धिनोऽञ्चलं गृह्णाति।परिधानदशां हस्तेन स्पृशतीत्यर्थः। अञ्चलग्रहणमदृष्टसंस्कारार्थं[2] शस्त्रग्रहणमपि[3] । तथा च प्रायस्तदेव शस्त्रमुत्तरकालेऽपि रक्षार्थं शयनादिसन्निधौ निधीयमानमार्यवर्ते लक्ष्यते[4] ॥

ब्र० । अत्राप्यक्षतसक्तव एव हविः । आज्यभागान्ते व्रजतो महाराजस्य[5] भगिनी पश्चाद्वस्त्रान्तमादत्ते छुरिकादिकं शस्त्रमादाय जन्यैः सह पूषा मेति गृहान्निष्क्रम्य स्वसा सिचान्तहस्तेव सह जलसमीपं गच्छति[6] ॥

आ० । तस्मिन्प्रास्थानिके कर्मणि यथोक्तमुपसमाधाय । उद्धतावोक्षिते ऽग्निसादनं परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यसंस्कारान्तं जयप्रभृतिभिर्मन्त्रैराज्यभागान्तैर्हुत्वा । प्रभृतिशब्दोऽवमग्राहकः[7] । तेनाघाराद्यपि भवति । एवं च जयप्रभृतिभिर्हुत्वेतिवचनमाज्यभागान्तं[8] तन्त्रमुपलक्षयति[9] । सर्वत्र प्रभृतिशब्दस्यावमग्राहकत्वं सर्वतन्त्रेषु प्रसिद्धं। द्वादशरात्रप्रभृतीनि सत्त्राणीत्युक्त्वा[10] एकादशरात्रादीनि विदधाति । एवमाज्यभागान्तं हुत्वा पश्चाद्भगिनी वरस्य सिचं वस्त्रैकदेशं गृह्णाति । कथं। पूर्वं शस्त्रं शासनसमर्थं शरादि भगिन्येव ॥

## पूषा मेति यान्ति यत्रोदकम् । ३ ।

---

1. ०परि० om. T.   2. Thus D; ०हणं सदृशसंस्कारार्थं TC. 3. च instead of अपि A.   4. वलक्ष्यते TC.   5. Thus also the Parisian ṛcaka; वरस्य a Tuebingen Ms.   6 Differently the Lahore Ms. of Br. and a Tuebingen Ms. (after आदत्ते) : पूषा मेति छुरिकादिकमादाय वरो जन्यसहितः स्वस्रा गृहीतासिचान्त एवोदकान्तं व्रजेत्. 7. Instead of ऽव the Ms. has a blank of one akṣara. 8. Had, then, the text of Ād. an इति after ०प्रभृतिभिः ? 9. ०यन्ति the Ms. 10. मन्त्राणी० the Ms.

दे० । पूषा मा प्रपथे पात्वित्यादिना मन्त्रेणोदकसंमुखा व्रजन्तीत्यर्थः ॥

ब्र० । [1]

आ० । पूषा मेति गच्छन्ति जन्याः वरश्च ॥

**शं नो देवीरित्युपस्पृश्य प्राची दिगिति यान्ति यथादिशम् । ४ ॥ २३ ॥ (२।११)**

दे० । उदकान्तं प्राप्योदकोपस्पर्शनं शिरसि प्रक्षेपमाचमनं कृत्वा । प्राची दिगग्निर्देवतेत्यादिना मन्त्रेण यथादिशं या दिग्येषां गन्तव्या तदभिध्यायिना मन्त्रेण यथालिङ्गमभिध्याय[2] वरप्रभृतयो गच्छन्ति । अत्र विवाहस्य कारयिता यो गुरुः स एव पिता वा वरस्य मन्त्रपाठे कर्ता ॥

ब्र० । तत्र शं नो देवीरित्युपस्पृश्य प्राची दिगग्निर्देवतेति यान्ति यथादिशं । उदकान्तात्कल्याणं वदन्ती स्वसा प्रत्येति । ततो होमकर्ताग्निं पुष्टिपतिं प्रजापतिं च सक्तुभिरिष्ट्वा ऋतुतिथ्यादि संस्थापयेत् ॥

आ० । भगिनी यत्र स्थाने उदकं तत्र शं नो देवीरित्यपः स्पृष्ट्वा हस्तार्धसेकमात्रं[3] प्राची दिगिति यान्ति गच्छन्ति यथादिशं दिगुपलक्षणेन मन्त्रेणेत्यर्थः । ततो ऽक्षतसक्तुनाग्निं पुष्टिपतिं प्रजापतिं च यजेत । ततस्तन्त्रसमाप्तिः ॥

---

**षडर्घ्यार्हा भवन्त्याचार्य ऋत्विग्राजा विवाह्यः प्रियः स्नातक इति । १ ।**

दे० । विवाहात्पूर्वमेव पाद्यार्घ्यमधुपर्कैर्विवाह्यः श्वशुरेण पूजनीयः तुल्यं च पूजाविधानं षण्णामपीति षण्णामुद्देशः । अर्घ्यं पूजामर्हन्तीत्यर्घ्यार्हाः षड् भवन्ति । आचार्य उपनेताध्यापयिता शिष्यस्य । ऋत्विग्याज्यस्य । तस्यापि प्राक् कर्मणः

---

1. See under Sūtra 3. 2. ०धाय the Mss. 3. Conjectural reading, हस्तार्धमेकपात्रं the Ms.

संमननात्[1] । राजा क्षत्रियः । स त्वभिषेकभावेन सदा जनपदस्य पूज्यः । विवाहनमर्हतीति विवाह्यः । अर्हे कृत्यतृचश्चेति[2] कृत्ये ण्यत्प्रत्ययः । स कन्यायाः पितुरर्घ्यार्हः । तथा यो यस्य प्रियो गुणोत्कर्षेण स तस्य दानाद्यवसरेष्वर्घ्यार्हः । स्नातकस्तु सद्यः स्नातक आचार्यस्य ॥

ब्र० । विवाह्यस्य श्वशुरगृहागतस्यार्घ्यदानप्रसङ्गेणान्येषामपि विधिसामान्यादर्घ्यार्हाणामिह पञ्चानां ग्रहणम् ॥

आ० । अनन्तरं श्वशुरगृहप्राप्तस्य मधुपर्केणार्पणं पूर्वं क्रियते । ब्रह्मदेयाविधानस्य सर्वो ऽयमितिकर्तव्यताकलापः । प्रस्थानार्तः[3] तेन शङ्का न कर्तव्या । कन्याप्रदानादनन्तरं मधुपर्क इति । मधुपर्कादनन्तरं ब्रह्मदेयाविधानस्योपपन्नत्वात्पूजापूर्वकत्वाच्च दानस्य । केचिद्विवाहस्योपरिष्टान्मधुपर्कविधिः पठ्यत इति तत्रैव मधुपर्कं ददाति तदैव कन्यादाने निवृत्ते ऽसौ[4] विवाह्य इति वदन्तः[5] । सर्वदेशसमाचारस्तु विवाहात्पूर्वं मधुपर्कदानं । अतस्तदेव साधीयः । अतो ऽत्रैव व्याख्यास्यामः । आदौ तावन्मधुपर्काणां विधिरुच्यते । षडर्घ्यार्हा भवन्ति । अर्घ्यं पूजामर्हयन्ति ये ते ऽर्घ्यार्हाः । षडिति नियमः ॥

## अथैनमर्हयन्ति । २ ।

दे० । अथशब्दो वक्ष्यमाणप्रकारस्वीकारार्थो निपातानामनेकार्थत्वात् । एनमाचार्यादीनामन्यतमं वक्ष्यमाणप्रकारेणार्हयन्ति पूजयन्ति संमानयन्ति ॥

आ० । अथैतेषामन्यतममर्हयन्ति यदा तदानयेतिकर्तव्यतया ॥

## आदौ च[6] कर्मणः । ३ ।

दे० । विवाहोत्तरकालमर्हणं विहितमिति यथाचोदितमानुपूर्व्यमिति नयेन विवाहादूर्ध्वमेव मधुपर्कादिदानमिति केचिदाहुः[7] ।

1. Thus D; समानानां TAC. 2. See Pāṇini III. 3. 169. 3. Sic. Ms. 4. निवृत्तसौ the Ms. 5. R. वदन्ति ? 6. Of the Mss. of Deva. only A gives च, CTD omit the word. 7. केचिद्भ्रान्ताः TAC.

अत एव च विवाहोत्तरकाल एवेदमपकृष्य व्याचक्षते । तन्निरासायेदं कर्मण आदावेव पूजनं कर्तव्यम्······॥

आ० । चशब्दात्प्रतिसंवत्सरं च तदुक्तं विवाहयज्ञयोरर्वाक् कर्मणः तथा यज्ञं प्रत्यृत्विजः पुनरिति[1] ॥

**अर्घ्यमुदकं[2] सौषधं दर्भा इति । ४ ।**

दे० । अर्घ्यलक्षणमाह । अर्घ्य०······इति । उदकं व्रीहियवयोश्चान्यतरः[3] । दर्भाः[3] । एतत्त्रयमर्घ्यम् ॥

आ० । अर्घ्यं तावदुच्यते । उदकं सौषधं । सतण्डुलाक्षतबदरादि । दर्भाश्च । एतद्द्रव्यत्रितयमर्घ्यशब्देनोच्यते ॥

**कंसे चमसे वा दध्यासिच्य मधु च वर्षीयसापिधाय विष्टराभ्यां परिगृह्य पाद्यप्रथमैः प्रतिपद्यन्ते । ५ ।**

दे० । मधुपर्कलक्षणपूर्विकां पूजयितुरनुपदेशां पूजाप्रतिपत्तिमाह । कंसे चमसे वा···प्रतिपद्यन्ते । अत्र पूजयितार इत्यर्थाल्लभ्यते । कंसपात्रे चमसे वा दारुपात्रविशेषे दध्यासिच्यते । मधु च मधुपर्क उच्यते । तच्च मधुपर्कपात्रं बृहता पात्रेण पिधाय स्थगयित्वा विष्टराभ्यां गृहीत्वा । पाद्यं प्रथमं येषां पाद्यार्घ्यमधुपर्काणां तैर्यथायोग्यमूर्ध्वमधो मध्ये च पूजां स्वयमेव प्रतिपद्यन्ते पूजयितारः । न तु तत्राप्युपदेशमपेक्षन्ते ॥

ब्र० । अर्घ्यार्थमागतं बुद्ध्वा प्रत्युत्थाय स्वागतमित्युक्त्वा स्वयमेव तस्य पादप्रक्षालनं विधाय तं हर्षयन्गृहं प्रवेशयेत् ॥

आ० ।···विष्टराभ्यां दर्भसटाभ्यां परिगृह्याधस्तादुपरिष्टाच्च पाद्यप्रथमैर्द्रव्यैरुपक्रमन्ते ॥

**मयि दोहो ऽसि विराजो दोहः पाद्यायै विराजो दोहमशीयेत्याह्रियमाणम्[illegible] मन्त्रयते । ६ ।**

दे० । कन्याया दातरि विवाह्यस्य निकटीभूते सति ऋत्विक् पाद्यादिकं कन्यादातृसमीपमानाययति । तदानीयमानमनेन

1. See Yājn. I. 110. 2. अर्घ्यं चोदकं the Mss. of Devapāla. 3. Thus D; ०तरंदर्भाः A, ०तरदरभाः C.T.

मन्त्रेण विवाह्यो ऽनुमन्त्रयते । अमन्त्रज्ञश्चेद्विवाह्यस्तदा ऋत्विगेवैनं पाठयति । एवं सर्वत्रैवेयम् ॥

ब्र० । ततो विष्टरादिपश्वन्तमर्घोपाकरणमुपहरेत् । मयि दोह इति पाद्यादिकं सर्वं तदाह्रियमाणमर्घ्यार्हो ऽनुमन्त्रयते ॥

**विष्टरो ऽसि मातरि सीदेति विष्टरमास्तीर्य तस्मिन्नुपविशति । ७ ।**

दे० । अनेनासनान्तरस्योपरि दर्भविष्टरमास्तीर्य विवाह्य उपविशति तूष्णीम् ॥

ब्र० । भगवन्निदमास्यतामित्युक्त्वार्हयित्रा[1] विष्टरे प्रत्ते[2] विष्टरो ऽसि मातरि सीदेति विष्टरमास्तीर्य तस्मिन्नुपविशति ॥

आ० । अनन्तरं विष्टरो ··सीदेति विष्टरं दत्तं स्वयं वा गृहीत्वा आसनपीठादावास्तीर्य[3] तस्मिन्नुपविशति ॥

**विष्टर आसीनायैकैकं त्रिः प्राह । ८ ।**

दे० । विष्टरे दर्भाच्छादितासनविशेषे आसीनायोपविष्टाय विवाह्याय पाद्यादीनामेकैकं त्रिः प्राह कन्याया दाता । पाद्यं पाद्यं पाद्यं । अर्घ्यमर्घ्यमर्घ्यं । मधुपर्को मधुपर्को मधुपर्कः । आचमनीयमाचमनीयमाचमनीयमिति । आसीनायेति सप्तम्यर्थे चतुर्थी । विष्टर आसीने विवाह्य इत्यर्थः ॥

आ० । पाद्याद्येकैकं द्रव्यं त्रीन्वारान्प्राह ॥

**नैव भो[4] इत्याह[4] न मार्षेति । ९ ।**

दे० । अभ्यर्हणीयाभिमुख्यापादनाय[5] यज्ञो इति पूजासंबोधनं प्राप्तं नामसंबोधनं च मार्ष यज्ञदत्त इत्यादि तन्निषेधयति ॥

ब्र० । भगवन्निति पूज्यसम्मान[6] वा वचनमत्र[6] ब्रूयान्नैव भो इति न मार्षेति ॥

---

1. Thus the Lahore Ms., the Bombay Ms. : ०यित्वा. 2. प्रत्ये the Bombay, प्रत्त the Lahore Ms., पत्ते the Parisian Lauka. 3. आसीन० the Ms. 4. भोरित्याह the Mss. of Devapāla, but cp. the Bhāṣya. 5. Thus TD; ०णीयस्य मुख्या० AC. 6. Utterly corrupt; the Lah. Ms. has : पूजमस्माननवचन मन्त्रमत्र०

आ० । अत्र प्राप्तानां पूजावचनानामभिमुखीकरणाय प्रतिषेधः ॥

**शं नो देवीरित्यपो ऽभिमन्त्र्य पाद्याभिः प्रक्षालयते[1] दक्षिणं पादमवनेनिज इदमहमस्मिन्कुले ब्रह्मवर्चसं दधाम्युत्तरं पादमवनेनिज इदमहं मयि तेजो वीर्यमन्नाद्यं प्रजां पशून्ब्रह्मवर्चसं दधामीति[2] । १० ।**

दे० । शं नो देवीरभिष्टय इत्यादिमन्त्रैरपो ऽभिमन्त्र्य विशेषेण पाद्याभिः पादयोः शोधनसंपादनसमर्थाभिः पादौ प्रक्षालयते । ऽभ्यर्हणीयस्य कन्याया दाता । पादयोः प्रक्षालने यथालिङ्ग-मन्त्रौ ॥

ब्र० । भगवन्पाद्यं पाद्यं पाद्यमिति पाद्ये निवेदिते पाद्यपात्रं दक्षिणेन पाणिनादाय तत्सव्ये पाणौ निधाय शं नो देवीरित्यपो ऽभि-मन्त्र्य । ···ताभिर्यथालिङ्गं वर एव स्वयं पादाववनेनिज्यात्॥

आ० ।···ताभिः पादौ प्रक्षालयते स्वयमेव । दक्षिणं पादमिति दक्षिणमुत्तरं पादमित्युत्तरम् ॥

**आपोहिष्ठीयाभिरर्घ्यं[3] परिगृह्य सावित्रेण मधुपर्कं[4] विष्टरो ऽस्यन्तरिक्षमधिविश्रयस्वेति विष्टरमवकृष्योरु त्वेत्यवसार्य[5] तच्चक्षुरित्यवेक्ष्य[6] पृथिव्यास्त्वेति विष्टरे[7] निधाय मधु वात[8] ऋतायत इति तिसृभिः प्रदेशिन्या**

---

1. ०लयति Br. and the Parisian Ṭeaka. 2. Of all the Mss. only the Lahore copy of Br. gives इति. 3. Thus Br., Ād., the Berlin Ṭeaka and of the Mss. of Devapāla TD (second hand) and C (first hand); the other Mss.; आपो हि ष्ठेत्याभिः 4. ०पर्कौ the Mss. of Devapāla. 5. The Mss. of Devapāla and the Parisian Ṭeaka insert here: उरु त्वा वाताय. 6. इति वीक्ष्य DTC and the Stein Ṭeaka. 7. The Mss. of Devepāla insert here भूमौ; विष्टरं भूमौ निधाय the Parisian Ṭeaka. 8. Although all the Mss. read वात (and thus also has it the Chambers Ms. of the Kāṭh), not वाता, Devapāla starts in his Mantra Bhāṣya from the plural. Cp. XXXIV. 5.

**प्रदक्षिणमालोड्यति[1] ॥ ११ ॥**

दे० । आपो हि ष्ठेत्यादिभिरर्घ्यं प्रतिगृह्णाति । देवस्य त्वेत्यादिना मधुपर्कं प्रतिगृह्णातीत्यध्याहारपूरितेन सवितृदेवताकेन मन्त्रेण मधुपर्कं प्रतिगृह्णाति । विष्टरो ऽसीतिमन्त्रेणोपरितनं विष्टरमवकर्षति[2] । अवकृष्य[2] चाक्षिप्य उरु त्वेति मन्त्रेणापसारयति । तच्चक्षुरित्यादिना मधुपर्कं वीक्ष्य । पृथिव्यास्त्वेत्यादिमन्त्रेणाधस्तने विष्टरे मधुपर्कं निदधाति । मधु वात ऋतायत इति तिसृभिरङ्गुष्ठसमीपवर्तिन्या प्रदेशिनीतिसंज्ञयाङ्गुल्या प्रदक्षिणं कृत्वा दधिमधुनी मिश्रयति ॥

ब्र० । भगवन्नर्घ्यमर्घ्यमिति त्रिरुक्ते पाद्यपात्रवदर्घ्यपात्रमादायापो हि ष्ठेति तिसृभिः शिरसि कुशपवित्रेणापः क्षिपेत् । ...भगवन्मधुपर्को मधुपर्को मधुपर्क इति त्रिराह दाता । देवस्य त्वेति मन्त्रेण मधुपर्कं प्रतिगृह्णामीत्यञ्जलिना प्रतिगृह्य सव्ये पाणौ निदधाति । विष्टरो ऽसीति वर्षिष्ठपात्रस्योपरिस्थितं विष्टरमुत्क्षिपति विष्टरमवकृष्य उरु त्वेत्यवसार्य । अपिधानं निवार्य । तच्चक्षुरित्यभ्यवेक्षते । पृथिव्यास्त्वेति मधुपर्कं विष्टरे ऽधःस्थितं भूमौ निधाय । मधु वात ऋतायत इति तिसृभिः प्रत्यृचं प्रदेशिन्याङ्गुल्या प्रदक्षिणं संयौति ॥

आ० । ततो ऽर्घ्ये निवेदिते आपोहिष्ठीयाभिरर्घ्यपात्रं गृह्णाति । सावित्रेण च मधुपर्कं गृह्णातीति वाक्यशेषः । ...विष्टरो-ऽसीत्युपरितनं विष्टरमाकृष्यापास्य । उरु त्वेत्युद्घाट्य तच्चक्षुरित्यनयानुष्टुभावेक्ष्यावलोक्य पृथिव्यास्त्वा नाभौ सादयामीत्यधस्तने विष्टरे स्थापयित्वा । ...दधिमधुनी प्रदक्षिणावृत्तं मिश्रयति ॥

**वसवस्त्वाग्निराजानो भक्षयन्तु पितरस्त्वा यमराजानो भक्षयन्तु रुद्रास्त्वा सोमराजानो भक्षयन्त्वादित्यास्त्वा वरुणराजानो भक्षयन्तु विश्वे त्वा देवा बृहस्पतिरा-**

---

1. ०ड्यते Br. (Both Mss.). 2. अप instead of अव DCT.

जानो भक्षयन्त्विति प्रदक्षिणं प्रतिदिशं प्रतिमन्त्रं पात्रस्यान्तेषु लेपान्निमार्ष्टि[1] ॥ १२ ॥

दे० । प्राच्या आरभ्य प्रदक्षिणं कृत्वा भक्षयन्त्वन्तैर्मन्त्रैर्मधुपर्कपात्रप्रान्तेष्वङ्गुलिलेपान्निमार्ष्टि । प्रतिदिशं प्रतिमन्त्रमिति वचनात्पञ्चमेन मन्त्रेणार्थात्पूर्वोक्तदिक्कोणे निमार्जनमापतति ॥

ब्र० । ...लेपान्निमार्ष्टि । विश्वे त्वा देवा इत्युत्तरार्ध एव ॥

आ० । वसवस्त्वेति पात्रान्ते प्राच्या आरभ्य दक्षिणाङ्गुलेर्लेपान्निमार्ष्टि शोधयति । पञ्चमेनोत्तरत एवान्तरतो ऽवरेकात् ॥

यन्मधुनो मधव्यस्य[2] परमस्यान्नाद्यस्य परममन्नाद्यं रूपं तेनाहं मधुनो मधव्यस्य परमस्यान्नाद्यस्य परमोऽन्नादो मधव्यो भूयासं । त्रय्यै विद्यायै यशो ऽसि श्रियै यशो ऽसि यशसे[3] ब्रह्मणो दीप्तिरसि सत्यश्रीर्यशः श्रीर्मयि श्रीः श्रीः[4] श्रयतामिति[5] मधुपर्कस्य चतुष्प्राश्नात्यङ्गुष्ठद्वितीयाभिः कनिष्ठया प्रथममेवमनुपूर्वं सर्वाभिस्तदवशिष्टं सुहृदे प्रयच्छति ॥ १३ ॥

दे० । यन्मधुन इति मन्त्रेण मधुपर्कस्य संबन्धिनो भागानङ्गुष्ठसहितया एकैकयाङ्गुल्या गृहीत्वा चतुरो वारानश्नाति । अङ्गुष्ठसहितया वा[6] कनिष्ठया प्रथमं ततो ऽनामिकया मध्य-

---

1. निर्मार्ष्टि A. 2. The Parisian and a Bombay ṛcaka give first यन्मधुनो मधव्यस्येति च and then follows the text as given above. 3. यशसेसि C and first hand of D: probably the original reading was यशसो यशो ऽसि, cp. Mantrapātha II. 10 1; but Devapāla has read यशसे, the Bhāṣya running : अतो यशसे त्वामश्नामि. 4. श्रीः is given twice by all the Mss. of Devapāla, by the Bombay Ms. of Br., in the Berlin, the Tuebingen, the Bombay and the Parisian ṛcakas, once by the Lahore Ms. of Br., and the Stein ṛcaka. 5. The Mss. of Devapāla here insert च. 6. वा must be cancelled.

मया प्रदेशिन्या प्रत्येकं। ... यच्छिष्यते तत्सुहृदे कनीयसे भ्रातृप्रभृतये प्रयच्छति॥

ब्र०। यन्मधुन इति कनिष्ठादिभिश्चतसृभिरङ्गुलीभिरङ्गुष्ठद्वितीयाभिः क्रमेण चतुष्प्राश्यावशिष्टं सवर्णाय मित्राय ददाति॥

आ०। यन्मधुन इति चतुर्वारान्प्राश्नाति। कथं। अङ्गुष्ठद्वितीयाभिरङ्गुलिभिः। अङ्गुष्ठो द्वितीयो यासां ता अङ्गुष्ठद्वितीयाः। एवमानुपूर्व्येण सर्वाभिरित्यस्यातिरिच्यमानत्वात्पञ्चमं प्राशनमिच्छन्ति[1]। तच्चशब्दं विना न लभ्यते। अतो ऽनुपपन्नं। तदवशिष्टं सुहृदे प्रयच्छति। शिष्टमिति वक्तव्ये तदवशिष्टग्रहणं स्वयं वा प्राश्नीयादित्येवमर्थम्। गृह्यान्तरेषु च दृश्यत एव प्राशनम्॥

आचामत्यमृतोपस्तरणमसीति[1] ॥ १४॥

दे०। अनेन मन्त्रेणाचामति॥

ब्र०। भगवन्नाचमनीयमाचमनीयमाचमनीयमित्येवं त्रिरुक्ते ऽमृतोपस्तरणमसीत्यप आचामति॥

तस्मा असिपाणिर्गां प्राह॥ १५॥

दे०। अर्हयिता दत्तमधुपर्कः सन् खड्गपाणिर्भूत्वा तस्मा अर्हणीयाय भक्षितमधुपर्काय गामाह। गां प्रकरिष्य इत्यनुज्ञां प्रार्थयते। अर्थार्थेनेत्यर्थः गोश्च करणं निपातनम्॥

ब्र०। तत आचान्तायार्हयिता खड्गपाणिर्भगवन् गां प्रकरिष्ये गां प्रकरिष्ये गां प्रकरिष्ये इत्येवं गां संनिहितां कृत्वाह॥

आ०। गां प्राह। गां प्रकरिष्य इति निवेदयतीत्यर्थः॥

तां शास्ति मम चामुष्य च पाप्मानं जहि हतो मे पाप्मा पाप्मानं मे हतों कुरुतेति॥ १६॥

दे०। तां गां शास्ति। ओं कुरुष्वेत्यनुज्ञामर्हणीयो ददातीत्यर्थः। मम च... मे हत। अर्हयितामुं मन्त्रमाह।... ओं कुरुत। हे विशसितारः गौः क्रियतामित्यनुजानातीत्यर्थः॥

---

1. Somewhere केचित् seems to have fallen out.

ब्र० । मम चामुष्य चेत्यादिनों कुरुतेत्यन्तेन मन्त्रेण वरानुज्ञातस्ता-
मभिना शास्ति । अमुष्येति षष्ठ्यन्तं दातुर्नामोदीरणम् ॥

आ० । तां गामनुशास्ति[1] अर्हो ऽनुमन्यते येन् । अनुशासनं[1]
प्रेषणं क्रियायोगः । अमुष्येत्यत्राहीयितुः षष्ठ्यन्तं नाम । यथा ।
मम देवदत्तस्य च[2] पाप्मानं जहीति ॥

चतुरो नानागोत्रान्ब्राह्मणान्भोजयेत् ॥ १७ ॥

दे० । नानागोत्रान्नानाप्रवरांश्चादौ चतुरो ब्राह्मणान्भोजयेत् । पश्चा-
त्सबान्धवमर्हणीयम् ॥

ब्र० । तया चतुरः पृथग्गोत्रान्विप्रानाशयेत् ॥

आ० । तया गवा प्रकृतया पूर्वं चतुरो नानागोत्रान्ब्राह्मणान्भोजयेत् ॥

एष आद्य उपायः[3] ॥ १८ ॥

दे० । ब्राह्मणाय उपायो गोकरणादिक उपदिष्टः । तेन[4] नात्र[4] विचि-
कित्सा कर्तव्येत्यर्थः ॥

ब्र० । एष प्रथमः कल्पः कलौ तु निषिद्धः ॥

आ० । प्रथमः कल्प इत्यर्थः ॥

यद्युत्सृजेन्माता रुद्राणामिति जपेत् । माता[5] रुद्राणां
दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्र णु
वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ।
सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम ।
अद्धितृणमघ्न्ये विश्वदानीं[6] पिब शुद्धमुदकमाचरन्ती ।

---

1. So then, Ād. seems to read अनुशास्ति. 2. च supplied by me. 3. The Lahore Ms. of Ād., and the Berlin, Parisian, and Tuebingen ṛcakas read: एष आद्योपायः 5. The two verses are accented in one of the Tuebingen Mss. 4. तेनात्र ACT (the better reading ?). 6. Thus (as Ṛgveda) Br., the Berlin ṛcaka and of the Mss. of. Devapāla TC; विश्वधानी the Parisian, विश्वधानीं the Stein & Bombay ṛcakas; विश्वदानी AD, and this reading is presupposed by Devapāla's Bhāṣya: यतस्त्वं विश्वदानी सर्वस्य धात्री पयोद्वारेण.

**ओ३मुत्सृजत[1] । तृणान्यत्त्वित्युक्त्वा तामुत्सृष्टां पशुमङ्गं वा[2] ॥ १६ ॥**

दे० । अर्हयिताह ओमित्यविचारितासिद्धं कृत्वा । ... इत्युक्त्वा तामुत्सृष्टां दृष्ट्वा पशुं छागं पश्वङ्गं वा मांसखण्डं प्रतिनिद्धीत ॥

ब्र० । यद्युत्सृजेद्भगवन् गां प्रकरिष्य इति यथोक्तमुक्ते ऽर्घ्यार्हो मा प्रकार्षीरित्युक्त्वा माता रुद्राणामित्यृग्द्वयं जप्त्वोमुत्सृजत तृणान्यत्त्वित्याह । तस्यामुत्सृष्टायां महाजं तदङ्गं वा क्रीत्वा यथाविभवं प्रतिनिदध्यात् ॥

आ० । तत्र यद्युत्सृजेदर्हो गामेवं प्रयोगः ॥

**नामांसो मधुपर्कः स्यादिति ह विज्ञायते ॥ २० ॥**

दे० । नामांसो मांसविहीनो मधुपर्कः स्यादिति ह श्रुतितो विज्ञायते । हशब्द इतिहासे ॥

आ० । हशब्द आगमसूचनार्थः । स चायमागमः श्रोत्रियायागताय महोक्षं वा महाजं वा पचेदिति[3] ॥

**अपि वा घृतौदन एव स्यात् ॥ २१ ॥ २४ ॥ ( २। १२ )**

दे० । अपि वा घृतमिश्रितौदन एव कर्तव्यो मांसद्वेषेण[4] तादृशा वा[5]

ब्र० । अपि वा सर्पिष्मदन्नं स्यात् ॥

आ० । गोसंनिकृष्टं[6] हि घृतम् ॥

**इति लौगाक्षिसूत्रे गृह्यपञ्चिकायां द्वितीयो ऽध्यायः[7] ॥**

---

1. ओम् missing in TC and added in D on the marge. A : उत्सृजतोमिति तृणा०. 2. Thus all the Mss.: the verb (प्रतिनिदधाति) seems to have fallen out. 3. SatapathaBrāh. III. 4. 1. 2. 4. Thus ACT; द्वेषिणे D. 5. तादृशां CT. 6. ०घृष्टं the Ms. 7. The colophon runs in Br. here : इति श्रीमद्यजुषि काठके लौगाक्षिसूत्रे गृह्य०.

**अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम्[1] । समर्यमा सं भगो नो निनीयात्सं जास्पत्यं सुयममस्तु देवा इत्युदाहारं प्रहिणोति[2] ॥ १ ॥**

दे० । अनृक्षरा इत्यादिमन्त्रेण गृहीतजलभाण्डमुदकस्याहर्तारं प्रेषयति । कन्यास्नानाद्युपयोगिजलमानेतुं पुरुषं प्रहिणोतीत्यर्थः ।

ब्र० । मधुपर्कप्रदानादनन्तरं सुमुहूर्ते पाणिग्रहणसंस्कारः । तत्र ऋत्विगनृक्षरा ऋजव इति कंचिन्मङ्गल्योदकानयनाय प्रेषयति । कश्मीरेषु श्वश्रूरविधवा चेदन्या वाप्यविधवैव तदाहरति ॥

आ० । अनृक्षरा इत्यनया त्रिष्टुभा उदाहारमुदकाहरणार्थं सकुम्भं पुरुषं प्रेषयति ॥

**शमीशाखया सपलाशयापिधायाहरेत्[3] ॥ २ ॥**

दे० । स प्रहित उदाहार उदकुम्भं शमीशाखया सपत्रयापिधाय[4] स्थगयित्वा उदकमानयेत् ॥

---

1. Thus Br. and of the Mss. of Devapāla TC and first hand of D: A! वरीयं. D second hand वरेण्यं, and this is the reading commented upon in the Mantrabhāṣya: वरेण्यं वरणीयं गङ्गादिकं जलाहरणस्थानम् । 2. It is difficult to state with certainty the original wording of this sūtra. The above given is the one of Br. But the three Mss. of Devapāla DCT have before the words अनृक्षरा etc.: अनृक्षरा इत्युदकलशमानीय. whilst the Berlin. Stein. Bombay and Parisian Ḷeakas have similarly: अनृक्षरा इत्युदकमानीय. Perhaps here is a trace of a double redaction, provenient of two different sūtra texts: 1. अनृक्षरा इत्युदकमानीय, 2. as given above. To me it is probable, that originally the Sutra text had only the pratīka of the verse, which is found with accents in one of the Tuebingen Mss. 3. Thus D, all the other Mss. सपलाशया वापिधाया०. 4. Thus D; सपलाशया वा A. सपर्णया वा, TC.

ब्र० । मङ्गल्यतर्वश्वत्थादिशाखया सपर्णया कुसुममालया शमीशाखया सकिसलया वा सुवर्णं वा ताम्रभृङ्गारमयां पूर्णं स्थगयित्वा हरेत् ॥

आ० । स च पुरुषः शमीशाखया सपर्णया कुम्भमपिधायाद्भिः पूरयित्वा आनयेत् ॥

एतासामेवापामुदकार्थान्कुर्वीत ॥ ३ ॥

दे० । एतासामेवाहारितानामपां संबन्धिनो भागानवदायावदायोदकसंपाद्यानर्थान् कन्यास्नानसुवर्णक्षारणाग्निपर्युक्षणादीन् कुर्यात् नान्येन जलेन ॥

आ० । एतासामेवापामाहृतानां वक्ष्यमाणानुदकार्थान् कुर्वीत कन्यास्नापनादीन् ॥

शं[1] न आपो धन्वन्याः शं नः सन्त्वनूप्याः । शं नः समुद्रिया आपः शमु नः सन्तु या इमा[2] इत्यकेवलाभिरद्भिः स्नातां या अकृन्तन्या अवयन्या अतन्वत याश्च देवीरन्ताँ[3] अभितो ऽददन्त[4] । तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्मतीदं परिधत्स्व वास इत्यहतं वासः परिधाप्याशासानेत्य[illegible] मौञ्जेन दार्भेण[5] योक्त्रेण

1. This Sūtra is preceded by Br. (and the Parisian ṭīkā) by the words: शं न इति स्नात्वा. But Br. intermixes this chapter with various digressions and comments. 2. This is the wording of the Mantra according to CD and the Parisian ṭīkās; all the other Mss.: शमु नः स्न्तु कूप्याः । या इमा इत्य०. As the verse closing with कूप्याः occurs in the Kāṭhaka (II. 1 : 8.8-9), it is probable that not *this* verse was intended but the above given one, with a various reading at the close. Otherwise we would expect the pratīka. 3. With the anunāsika the Lahore Ms. of Br., and the Bombay, Stein, Berlin and Tuebingen ṭīkās. 4. Devapāla in his Mantrabhāṣya presupposes अततन्त. 5. Thus the Berlin, Stein, Parisian and Tuebingen ṭīkās; दर्भेण the other Mss. We expect मौञ्जेन दार्भेण वा योक्त्रेण.

न्ना संनह्यति[1]। आशासाना सौमनसं प्रजां सौभाग्यं रयिम्। अग्नेरनुव्रता भूत्वा संनह्ये सुकृताय कम्[2] ॥४॥

दे०। ...अकेवलाभिः सर्वौषध्यादिगन्धद्रव्ययुक्ताभिः फलविशेषसहिताभिश्चाद्भिः कन्यां स्नापयेत्। ...अहतमपूर्वपरिहितमत्यन्ताभिनवं वस्त्रं परिधापयेत् ततश्चाशासानेत्यादिना मन्त्रेणान्तरे मध्ये गुप्तं कृत्वा यथा न दृश्यते तथा वा संनहनं कन्यायाः कुर्यात्। मौञ्जेन दर्भनिर्मितेन वा योक्त्रेण॥

ब्र०। ततः स्नानमण्डपं चतुष्पादे भद्रपीठे कन्यां नीत्वा शं न आपो या इमा[3] इति सर्वौषध्यामलकयुक्ताभिरद्भिः स्नापयति।... स्नातां या अकृन्तन्निति वसनहस्तः परिधानार्थं प्रचोदयति। मन्त्रमृत्विगेवाह न कन्या परिहिता। आशासानेति कमित्यन्तेन स्वयमेव कन्या मुञ्जमयेन दर्भमयेन वा दाम्ना वासो ऽन्तरतो बध्नाति॥

आ०।.. स्नातां स्वयमेवाभिषिक्तं[4] ..। आशासानेत्यनयानुष्टुभा योक्त्रेण तद्वासः संनह्यति स्वयमेव कन्या। अन्तरतः प्रच्छन्नेन। योक्त्रं त्रिगुणं दाम। तच्च मौञ्जं दर्भमयं वा॥

प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम्[5]। यथेयमिन्द्र

---

1. संनह्यते the Lahore Ms. of Br. and the Parisian Ṛcaka. 2. The Mantra in sakalapātha not given by Devapāla immediately after the Sūtra, but later, in the Mantrabhāṣya. The Mantras are given with accents in the Tuebingen Ṛcaka, except the one beginning: या अकृन्तन्. 3. So then Br. accepts (cp. note 5 on this Sūtra) two different mantras (?). 4. स्वमेवाभि° the Ms. 5. Thus runs the Mantra according to Br. (and as to the first words, according to Ād.). Devapāla reads in his text: प्रेतो मुञ्चातु मामुतः सुबद्धाममुतस्करत्। (Thus D; करम् ACT). In the Mantrabhāṣya the Mss. have different readings; हे कन्ये इतः स्थानात्प्रमुञ्चातु (AD: °ञ्चा ।) प्रमुञ्चामि त्वां नयामि भवतीं। मुञ्चतु (Thus D; मुञ्चन्तु ATC) इति लिङ्व्यत्ययः पुरुषव्यत्ययश्च। तथा च शाखान्तरे प्रेतो मुञ्चामीति मन्त्रः पठ्यते। As for मा...करत् the Bhāṣya gives: कश्चिन्मा कार्षीत्.

**मीढ्वः सुपुत्रा सुभगासति । पूषा त्वेता नयतु हस्त-गृह्याश्विनौ त्वा प्रवहतां रथेन । गृहान्गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासि[2] । मा विदन्परिपन्थिनो य आसीदन्ति दम्पती । सुगेभिर्दुर्गमतीतामपद्रान्त्वरातय इत्युदानीय[3] ॥ ५ ॥**

दे० । प्रेतो मुञ्चातित्वित्यादिभिस्तिसृभिरुदानीय[4] स्नानस्थानादुत्क्षिप्योत्सङ्गे कृत्वा स्थानान्तरे पिता ज्येष्ठो भ्राता वा ॥

ब्र० । एवमधोवस्त्रपरिहितां संनद्धां च प्रेतो मुञ्चामीति तिसृभिः स्नानदेशादुदानीय ॥

आ० । एवं स्नातां परिहितवाससं तस्मात्स्थानादुदानयति । उत्क्षिप्यानयत्यृत्विक् । प्रेतो मुञ्चामीति तिसृभिस्त्रिष्टुम्मध्यमाभ्यामनुष्टुब्भ्याम् ॥

**उक्तं वाससः कर्म ॥ ६ ॥**

दे० । ( पिता ज्येष्ठो भ्राता वा ) यथोक्तं वासस उपरिभागाच्छादनस्याप्यधस्तनाच्छादनमवकृन्तन्नित्यादिना[5] मन्त्रेण कर्म कुर्यादित्यर्थः ॥

ब्र० । या अकृन्तन्नित्यनयैवोत्तरीयं च वासः परिधापयति ॥

आ० । उक्तं च वासः कर्मोत्तरीयस्य या अकृन्तन्निति ॥

---

1. Thus (हस्तगृ०) Br. and, in the Mantrabhāṣya TC, as also the Stein and Tuebingen ṭeakas: हस्तंगृ० DTC in the text and D in the Bhāṣya; हस्तैगृ A. 2. Thus Br., four ṭeakas and TAC: D, and the Lahore Ms. of Br., the Parisian ṭeaka: विदथे मा वदासि and thus is presupposed by the Mantrabhāṣya: विदथे च यज्ञे मा वदासि यज्ञे प्रतिकूलं भर्तुर्मा वादीः 3. Perhaps the original Sūtra was much shorter: प्रेतो मुञ्चामीति तिसृभिरुदानीयः the verses are accented in T[1]. 4. मुञ्चात्वि० D. मुञ्चन्त्वि० C. 5. These words contain the pratīka या अकृन्तन्.

## आचारिकाणि ॥ ७ ॥

दे० । अस्मिन्नवसरे आचारिकाणि आचारादागतानि देशजातिकुलधर्मतया प्रसिद्धानि कर्माणि कारयेदित्यर्थः । तद्यथा । आगमनप्रयोजनकथनं कन्याया नामग्रहणं कुलदेवतापूजनं सुमनोलताभिस्ताडनमित्यादीनि ॥

ब्र० । अस्मिन्नवसरे देशजातिकुलोचितानामाचारिकाणां मङ्गल्यानां कर्मणां कालः । यथा कश्मीरेषु श्वश्रूरन्या वाविधवा वधूवरयोः शिरसि मङ्गल्यमालामाबध्नाति ।

> महेश्वरस्त्र्यम्बकश्च ईश्वरः शिव एव च ।
> भवः[1] शर्वश्च रुद्रश्च दक्षिणादिक्रमेण तु ॥

इति वरस्य पादजानुस्कन्धशिरःसु सप्तसु स्थानेषु श्वश्रूः पुष्पाणि निदध्यात् ।

> गौरी चैव तु गायत्री सावित्री च सरस्वती ।
> उमा कान्ता भवानी च वामावर्तेन पूजयेत् ॥

इति वध्वा वामावर्तक्रमेणैव पुष्पाणि निदध्यात् । पुष्पवतीरित्यृत्विक्[2] पठेत् ।

> आचारिकाणि द्रव्याणि वस्त्राण्याभरणानि च ।
> मणिमुक्ताप्रवालानि यथाशक्ति प्रदीयते ॥
> गोभूहिरण्यमश्वांश्च वस्त्राणि विविधानि च ।
> अन्यानि चैव दानानि यथाविभवमर्पयेत् ॥

अस्मिन्नवसरे ऽलंकरणस्वदायेषु परस्परं ग्राह्या चटोपचटिका[3] ॥

---

1. स्कन्द॰ the Ms. (Bombay; in the Lahore Ms. this long digression is not found). 2. Kāṭh XVI. 13: 225. 11-12. 3. These words (missing in the Lahore Ms., but given precisely so by the Bombay and Tuebingen Ṭīkās) are of unknown significance.

आं० । अस्मिन्नवसरे आचारिकाणि कर्माणि कुर्यात् । देशजाति-
कुलव्यवस्थया[1] स्थितानि । अशास्त्रार्थमिति न प्रतिबध्नीयात् ॥

**तूष्णीं निर्मन्थ्यं[2] आष्ट्रात्सान्तपनं यत्रदीप्यमानं वा बहिरग्निमुपसमाधाय[3] परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यं विलीनोत्पूतं हुत्वाधारादाज्यभागान्तं हुत्वापरेणाग्नि-मनो रथं वावस्थाप्य योगे योग इति युनक्ति दक्षिण-मितरमुत्तरामितराम् ॥ ८ ॥**

दे० । एष औपसदो ऽग्निर्वैवहनो वा तस्मिन्पाकयज्ञा इति वक्ष्यति[4] ।
वैवाहनस्य विकल्पमानाश्चतस्रः प्रकृतयो ऽत्रोच्यन्ते । सद्यो
ऽरणिभ्यां निर्मथितो यस्तत्र निर्मथ्यशब्दो रूढः । तत्र नि-
र्मथनसामान्यान्निर्मथनानन्तरवन्मन्त्रे प्राप्ते तूष्णीमित्युक्तं ।
एष एकः । आष्ट्राद्वितीयः । सान्तपनस्तृतीयः । स पुनर्यो
बलेनाग्निना संतप्तादपसारिताद्भभागात्[5] कर्पासगोमयचूर्णा-
दिसंसर्गं कृत्वोत्पाद्यते पाषाणं कंसमणिं[6] च तापयित्वा
सूर्यसंमुखं सूर्यकान्तमणिं वा स्थापयित्वा सो ऽभिमतः ।
यत्रदीप्यमानश्चतुर्थः । अत्र विशेषश्रुतावपि[7] तेतावथश्म-
शानपरिगृहीतसूतकपातिताद्याग्निवर्जमिति[8] ज्ञेयं । उपसमा-

---

1. ०स्थाया the Ms. 2. Thus the Bombay Ms. of Br., and of the Mss. of Devapāla TC, and the Berlin, Bombay and Tuebingen Ṛeakas: निर्मन्थ्य the other Mss. 3. Before समूह्य the Bombay Ms. of Br. (not the Ms. of Lahore) inserts सूतकाग्निप्रभृतिवर्जं, the Berlin, Tuebingen and Bombay Ṛeakas: सूतकाग्न्यादिवर्जं; also all the three commentators treat of this matter. I do not believe that the passage belongs to the Sūtra. 4. See XLVII. 1-2. 5. ०सारिताग्निकाद्भ० TAC. 6. कंसमणिं D. 7. अत्रा-वशेष० A. 8. Hopelessly corrupt. The above given is the reading of D; त्रेतावमथश्मशानापरिगृहतिसूतकश्च पश्चाद्यग्निवर्जं० CD: त्रेतान्तावमथश्मशानपरिगृहीतसूतकश्चपचाद्यग्निवर्जं० A; CDA point to ०सूतकश्वपचाद्य०.

धायेति प्रत्येकं संबन्धनीयं । गार्हपत्यवदुद्धतावोक्षिते जानु-दघ्ने कुण्डे स्थापयित्वेत्यर्थः । गृहाद्बहिरेवेति नियमः । परिसमूहनं सजलेन करेण चतुर्दिक्संस्पर्शनं । पर्युक्षणमा-सेचनं । एवं चतुर्दिक्क्रमेणैव दर्भैः परिस्तरणं प्रथितं । त्रिभिः स्तरैः स्तृणातीति वैश्रवणे [1] दर्शनात् । आज्यस्य विलयनं विगलनं । उत्पवनं पवित्रेण पवनं । आघारादारभ्या-ज्यभागान्तान्होमान्हुत्वाग्नेः पश्चिमभागे स्थितयोः सतोः[2] कन्यावरयोर्यथासंख्यं वामदक्षिणभागे नाग्नेरपरभागे अनः शकटं रथं वा स्यन्दनं वा सयुगमवस्थाप्य योगे योग इत्य दि-कया ऋचा कन्यावरौ यूपे[3] युनक्ति दक्षिणभागे[4] वरमुत्तर-भागे[4] कन्यां । योक्त्रेण संयोजयतीत्यर्थः ॥

ब्र० । ततो ऽरणिभ्यामश्वत्थीशमीगर्भीत्यादियथोक्तजातिरूपाभ्यां तूष्णीं निर्मथितं । भ्राष्ट्राद्वा । उखामङ्गारेषु निधाय...मुञ्ज-तृणादिकमाधाय यो जन्यते । सूतकाग्निशवाग्निसंकराग्नि-पतिताग्निवर्जं । तथा च । चण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित् । पतिताग्निः शवाग्निश्च ते नष्टग्रहणोचिताः ॥ यत्र-दीप्यमानं वा । तं बहिर्वेश्मनो गार्हपत्यसंमितोद्धतावोक्षिते न्युप्य तस्मिन्नुद्वाहविवाहहोमौ कुर्यात् । उद्वाहे ऽक्षतसक्तवो हविः । विवाहे तु लाजाः । लाजानां निर्वपणं केचिन्नेच्छन्ति । तद्विचार्यं । अग्नये पुष्टिपतये प्रजापतये जुष्टं निर्वपामीति सक्त्वर्थं यवान्निर्वपेत् । आज्यभागान्तं हुत्वा पश्चादग्नेः शकटं रथं वावस्थाप्य तस्मिन्वधूवरौ प्राङ्मुखौ योगे योगे तवस्तरमिति मन्त्रावृत्त्या युनक्ति । दक्षिणेन वरं तस्योत्तरतो वधूम् ॥

आ० । ततो होमार्थं बहिरग्निमुपसमाधाय । तं विशिनष्टि । तूष्णीं निर्मथ्य[5] । अरणिभ्यां निर्मथ्येत्यर्थः[5] । अग्नेर्जनित्रमित्यादि मा भूदिति तूष्णींग्रहणं । भ्राष्ट्राद्वा । संतापजनितं वा ।

---

1. See Br. and Âd. on XIII. 4. 2. सन्तो the Mss. 3. R. युगे. 4. दक्षिणे वरमुत्तरे D. 5. निर्दक्त्य the Ms.

अश्मानमुखां वा संताप्य कंसमणि[1] वा परिमृज्यादित्याभिमुखं शुष्कगोमयादिना जन्यते यः स सान्तापनः । यन्त्रदीप्यमानं वा सत्यप्यविशेषे रथ्या–सूतकसंकरपरिगृहीताग्निवर्जं । एवमयं वैवाहनो ऽग्निरुपशान्तः सर्वेभ्य एव योनिभ्यो यथायोन्याहृत्य तं प्राकृते भस्मनि निक्षिपेत् । भस्मनारणी संस्पृश्य मन्थेयुरिति वचनात्[2] । भस्मनाशे ऽग्निनाशो भवतीति श्रुतेश्च[3] । प्रादुष्करणकाले चेद्गृह्य उपशान्तः श्रोत्रियगृहादानीय तूष्णीं गृह्यभस्मनि प्रक्षिप्याग्निहोत्रदेवताभ्यो हुत्वा गृही[4] पत्नी वोपवसतीति भस्मन्येवाग्निप्रक्षेपस्य बह्वृचगृह्ये ऽपि दर्शनात्[5] । एष वैवाहनो ऽग्निर्दक्षिणाग्निप्रकृतिः । यस्तूदयकाले आह्रियते शुचिर्भूत इति[6] स गार्हपत्यप्रकृतिः । ... बहिरग्निमुपसमाधाय । बहिरिति नियमः । गार्हपत्यलक्षणसदृशमुद्धत्यावोक्ष्य तत्राग्निमुपसमाधाय स्थापयित्वा सोदकेन पाणिना चतुर्दिशं समन्तात्समूह्य पर्युक्ष्य परिषिच्योदकेन समन्तात्परिस्तीर्य वैश्रवणीयवत् ।...तत आज्यं निरुप्य मन्त्रेण विलीनं कृत्वा ऊर्जे त्वेत्युत्पूतं कृत्वाग्नेर्जिह्वेत्यनेन । ...आघारदाज्यभागान्तं हुत्वापरेणाग्निमग्नेरदूरे अनः शकटं रथं स्यन्दनं वास्थाप्य तत्र युगधुरोर्दम्पती युनक्ति दक्षिणं वरमुत्तरां वधूम् ॥

तूष्णीं विमुच्य[7] खे रथस्य खे ऽनसः खे युगस्य शत-

---

1. कंसमणिं the Ms. (cp. Devapāla). 2. From the Katha Vaitānikasūtra ? 3. This śruti is unknown to me. 4. Thus conjecturally emended: गृहे the Ms. 5. I cannot find this passage in Āśv. or Śānkh., but cp. Āp. gṛhs. 6. 16-17 and Hir. gṛhs. I. 22. 4-5. 6. See XLVI. 1. 7. The Bombay Ms. of Br. given after विमुच्य the pratīka खे रथस्येति followed immediately by हिरण्यं नि॰ बद्ध्वा, and then comes the Mantra Sakalapāṭhena. All the Mss. of Devapāla and the Lahore Ms. of Br. have as given above.

क्रतो[1] । अपालामेन्द्र त्रिष्पूत्वा करोतु सूर्यवर्चसमिति हिरण्यं निष्कर्त्य बद्ध्वाध्यधि मूर्धनि दक्षिणस्मिन्युगतर्द्मन्यद्भिरवक्षारयते[2] शं ते हिरण्यमिति । शं ते हिरण्यं शमु सन्त्यापः शं ते मेथी भवतु शं युगस्य तर्द्म[3] । शं त आपः शतपवित्रा भवन्त्वेना पत्या तन्वा संसृजस्वेति ॥ ६ ॥

दे० । प्राकृतयोक्त्रवदत्रापि[4] प्राप्तं मन्त्रं निषेधयति तूष्णीमिति[5] विमुच्य कथं[6] योजितं योक्त्रं मोचयित्वा । खे रथस्येत्यादिकयर्चा हिरण्यं दर्भपवित्रेण बद्ध्वा युगस्य दक्षिणभागगते रन्ध्रे निदधाति । कथं[7] बद्ध्वा । निष्कर्त्य कृत्वा । यथा सुखविमोचनं भवति तथेत्यर्थः । तत्सुवर्णं बद्ध्वानन्तरं दक्षिणभागे वरस्थाने कन्यामानीय ससुवर्णे दक्षिणभागे युगतर्द्मनि छिद्रे पूर्वोक्ताभिरद्भिरध्यधि[8] क्षारयति[9] । उपर्यधः सामीप्ये[10] इति । वीप्सायामध्यधीति द्विर्वचनं । युगपच्छिद्रस्याधः समीपं[11] कन्यां स्थापयित्वा मूर्धनि सुवर्णोदकं क्षारयतीत्यर्थः ॥

ब्र० । खे रथस्येति हिरण्यमूर्ध्वपाशेन ग्रन्थिना दर्भैर्बद्ध्वा वधूमन्तरा कराग्नी आनीय वरस्य दक्षिणत उपवेश्याध्यधि मूर्धनि दक्षिणस्मिन्युगच्छिद्रे तद्धिरण्यं निष्कर्त्य बद्ध्वाप आसिञ्चति ॥

---

1. क्रतुः Br. 2. Instead of the correct ०तर्द्म० (so distinctly a Tuebingen and the Berlin Devakas, both in Sârada writing) all the other Mss.: ०तर्म.—Instead of ०क्षारयते, A: ०क्षालयते and thus also Br., Âd. and three Devakas (is it preferable?) 3. तर्म all, except probably a Tuebingen Ms. 4. Thus D; ०योक्तृविमुक्ता विवाहात्रापि T, ०योक्तृविवाहेपि A, ०योक्त्राविवाहात्रापि C. 5. इति om. T. 6. ? कथा CT, कषा AD. 7. Thus AD; कषं TC. 8. Cp. XXV.3. 9. क्षाल० A. 10. ? Thus D; उपर्यवय इति सामीप्य A, उपर्यधः सामीप्य इति सामीप्य इति TC. 11. ? Thus D; ०छिद्रस्य वरसमीपं T, युगाच्छिद्रस्य वरः समीपं AC (the last: ०वरसमी०).

आ० । तूष्णीं विमुच्य योक्त्रपाशं...हिरण्यमङ्गुलीयादि दर्भैर्निष्कर्ये निश्चल्यं सुखविमोचनीयमूर्ध्वपाशेन ग्रन्थिनेत्यर्थः । दक्षिणस्मिन्युगाच्छिद्रेऽवधाय तस्याधस्तात्कन्यामद्भिरवक्षालयते । शं ते हिरण्यमित्यनया जगत्या हिरण्योदकेन शिरस्यवसिञ्चति ॥

**दक्षिणतः पुमान्भवति ॥ १० ॥**

दे० । कन्याया अभिषेकसंस्कारे कृते सति पुमानग्नेरपरभागे[1] प्राङ्मुखः पुरुषो भवति । दक्षिणेनार्थात्कन्योत्तरतो भवतीति लभ्यते ॥

ब्र० । ततो वरस्योत्तरतो वधूमुपवेश्य दक्षिणतः पुमान्भवति ॥ ततस्तां तथैव प्रत्यानीय वरस्योत्तरत उपवेशयति[2] ॥

आ० । ततो दक्षिणतः पुमान्भवति । अन्तरङ्गा कन्या संस्कार्यत्वात् । अनेन ज्ञायते दक्षिणयुगतर्ध्मनि[3] कन्या आसीत ॥

**अथ जुहोत्यग्नये जनिविदे स्वाहा सोमाय जनिविदे स्वाहा गन्धर्वाय जनिविदे स्वाहा[4] ॥ ११ ॥**

दे० । अथशब्दो मङ्गलार्थ इति मथुरः[5] । अन्तराले ऽन्नतसक्तुहोमद्योतनायाथशब्द इत्यादित्यदर्शनः[6] । अवश्यं ह्युक्तयुक्त्या[7] ते[8] होमान्तरालादावपि[9] होतव्याः[10] इत्यत्रैवावसरे न[11] क्षातिरिति[11] । होमान्क्रमेणाह । अग्नये जनिविदे...स्वाहेति । पूर्वं स्त्रियो देवैर्भुक्ताः सोमगन्धर्ववह्निभिरिति श्रूयते । तेन निष्क्रयाय तेषामिति होमः ॥

ब्र० । अथ जुहोति । होमं कुर्यादृत्विक् ॥

---

1. Instead of पुमान् TAC: पुनर्. 2. This is another explanation of the same sūtra, given further on by Br. 3. After त the Ms. had a blank of one akṣara. 4 The two Ms. of Br. and of the Mss. of Devapāla A, have *not* the इति which all the other Mss. here insert. Probably the verb of sūtra 12 belonged originally not to the Sūtra text. 5. A commentator of the Kāthakasūtras ? 6. This is the author of the Vivaraṇa, see Ād. on this sūtra. 7. Thus DA; °क्तयुर्थो TC. 8. A om. 9. Thus DT; होमान्त[illegible]पि AC. 10. °व्यः AC. 11. रक्षतिरिति AC. (comp. Ād.)

आ० । अथ जुहोति केचिदस्मिन्नवसरे ऽक्षतसक्तूञ्जुह्वति[1] अथशब्दस्योदितत्वात् । कां क्षतिः[2] एषां होमानां । रस्ताच्चो- परिष्टाच्चावश्यं होतव्यास्ते अत्र चाथशब्दस्यार्थवत्ता भवति । अन्ये व्याचक्षते । विवाहे जयप्रभृतयश्चेति यद्वक्ष्यति[3] ते जय- प्रभृतय इत्यादयो भवन्ति ॥

**आयुषः प्राणमिति[4] सन्तनीर्जुहोति[5] ॥ १२ ॥**

दे० । एकादश सन्तन्य एवमाद्याः ॥

ब्र० । आयुषः प्राणमित्येकादश नाभेर्भौवनस्य । आयुषः प्राणं सन्तनु स्वाहा । दिवः स्व: सन्तन्वित्यन्तम्[6] ॥

आ० । आयुषः प्राणमित्येकादश सन्तनीर्जुहोति ॥

**जयाभ्यातानानाष्ट्रभृतश्च[7] ॥ १३ ॥**

दे० । जुहोतीत्यनुषङ्गः । जयांश्चाभ्यातानांश्च । तान्राष्ट्रभृतश्च जुहो- तीत्यर्थः ॥

ब्र० । आकूतामिति त्रयोदशाहुतीः । द्वादशगृहीतेन प्रतिमन्त्रं जया- ञ्जुहुयादिति लौगाक्षिः[8] ।...चतुर्गृहीतं जुहोत्यभ्यातानैः ।...। ऋताषाडिति द्वादशभिर्यडन्तैर्हुत्वा स नो भुवनस्येति त्रयो- दशीं रथमुखे[9] ॥

**तानि यथोक्तम् ॥ १४ ॥**

दे० । तानि त्रीणि जयादीनि कर्माण्युक्तानतिक्रमेण कर्तव्यानि । द्वादशगृहीतेन जयाञ्जुहुयादिति लौगाक्षिः । यथाधीतं मन्त्र- मनुद्रुत्य ऋगन्तेन स्वाहाकारेण द्वादश प्रक्षेपा अपीति केचित् ।

---

1. जुह्वति the Ms.; Ād. refers to XXII. 2-3. 2. ? read का क्षतिः ? ( comp. Dev. ) 3. viz. in sūtra 16. 4. The Mss. of Devapāla : आयुषः प्राणं सन्तन्विति. 5. Perhaps (cp. note 3) the verb originally did not form part of this sūtra. 6. The Ms. has only दिवस्सु इत्यन्तं, see kāṭh XXXIX. 18: 125. 4. 7. On these Mantras see Appendix II. 8. A quotation from the Kāṭhaka yajnasūtra. 9. Cp. Kāṭh. XXI. 12: 53. 1.

अन्ये तु द्वादशावदानगृहीताज्यस्य सर्वमन्त्रानुद्रवणेन सर्वान्ते स्वाहाकारेणैक एव प्रक्षेप इत्यनुतिष्ठन्ति । प्रतिमन्त्रं तु द्वादशावदानान्युद्धरन्ति । अभ्यातानहोमे तु चतुर्गृहीतं जुहोति ।... राष्ट्रभृतस्तु द्वादशगृहीतेन । त्रयोदश होमाः । ऋताषाडिति द्वादशभिर्वडन्तैर्हुत्वा स नो भुवनस्य पत इति रथमुखे ऽध्यध्यग्निं ध्रियमाण[1] इति[1] यथोक्तता ॥

आ० । तानि त्रीणि कर्माणि यजूंषि वा यथोक्तमर्थानतिक्रमेण जुहोति । द्वादशगृहीतेन जयाञ्जुहुयादिति लौगाक्षिः । द्वादशगृहीतं गृहीत्वा यथाधीतं मन्त्रमनुद्रुत्य ऋगन्तेनैक[2] एव[2] होमः । चतुर्गृहीतं जुहोत्यभ्यातानैः । राष्ट्रभृतो[3] यथोक्तता । ऋताषाडिति द्वादशभिर्वडन्तैर्हुत्वा स नो भुवनस्य पत इति रथमुखे त्रयोदशीं[4] जुहोति । तानि यथोक्तमाधिपत्यानि जुहोतीति ये व्याचक्षते[5] तेषां तानीत्यतिरिच्यते । यथोक्तता चाधिपत्यलिङ्गानां मन्त्राणां न काचिदस्ति । पुंल्लिङ्गानां तानीति परामर्शः कर्मापेक्षया यजुरपेक्षया वा न विरुध्यते ॥

## आधिपत्यानि[6] जुहोति ॥ १५ ॥

दे० । अधिपतिशब्दोपलक्षितानि लिङ्गादाधिपत्यान्युच्यन्ते । तानि सानुषङ्गाण्येकविंशतिर्यजूंषि ॥

ब्र० । एवं जयाभ्यातानान्राष्ट्रभृतश्च हुत्वा । अग्निर्भूतानामित्याहुत्येकविंशतिमाधिपत्यानि जुहोति ॥

आ० ।...तानि सानुषङ्गाण्येकविंशतिः ॥

## आकूत्या इति त्रिभिस्त्वेत्यन्तैः ॥ १६ ॥

दे० । त्वेत्यन्तैरिति स्वाहाकारान्ततां निवर्तयतीति केचित् । अन्ये त्वाहुः । त्वान्तानामेव पाठान्तत्वाव्यभिचारादन्यान्तत्वमप्यस्तीति[7] स्वाहाकारान्तताद्योतनाय त्वान्तग्रहणमिति ॥

---

1. Emended; ०माणस्येति the Mss. 2. Emended; ०नेकेनेव the Ms. 3. ०भृता the Ms. 4. त्रयोदश the Ms. 5. This means that some take sūtra 14 and 15 together. 6. On these Mantras see Appendix III. 7. Thus D first hand, and A; D corrects on the marge: पाठात्त्वान्तत्वाव्यभि०, TC read: पाठत्वाव्यभि०

ब्र० । तत आकूत्यै त्वा स्वाहा । कामाय त्वा स्वाहा । समृधे त्वा स्वाहेति तिस्रः ॥

आ० । त्वेत्यन्तैः । यतो ऽत्वान्ता[1] अपि सन्ति ॥

**हिरण्यगर्भ इत्यष्टाभिः प्रत्यृचम् ॥ १७ ॥**

दे० । हिरण्यगर्भ इत्यादिना सकलेनानुवाकेनैक एव होमो मा विज्ञायीति प्रत्यृचग्रहणम् ॥

आ० । प्रत्यृचग्रहणमनुवाकेन होमो मा भूत् । अनुवाकेनैको ऽपि होमः सावित्रवैश्वकर्मणादिषु ।

**भूः स्वाहेति महाव्याहृतिभिश्चतसृभिः ॥ १८ ॥**

ब्र० । ओँ भूः स्वाहा । ओँ भुवः स्वाहा । ओँ स्वः स्वाहा । ओँ भूर्भुवः स्वः स्वाहा ॥

**अग्न आयूंषीत्याग्निपावमानीभिश्च[2] तिसृभिः ॥ १९ ॥**

दे० । अग्निपावमानीभिरिति[3] । अग्निलिङ्गाभिः पावमानलिङ्गाभिश्च ॥

ब्र० । अग्न आयूंष्यग्निर्ऋषिरग्ने पवस्वेत्यग्निपावमान्यस्तिस्रः[3] ॥

**हुत्वा हुत्वा कन्याया मूर्धनि संपातानवनयेद्या ते पतिघ्नी तनूरपतिघ्नीं ते तां करोमि स्वाहा । या ते ऽपुत्रिया तनूः पुत्रियां ते तां करोमि स्वाहा । या ते ऽपशव्या तनूः पशव्यां ते तां करोमि स्वाहेति त्रिभिः[4] ॥ २० ॥**

दे० । आकूत्यै त्वेत्यादिभिर्मन्त्रैराज्यं हुत्वा हुत्वा कन्याया मूर्धनि

---

1. यतोद्वान्ता the Ms. 2. Of all the Mss. only D has आग्निपा०, which (see Kāṭh. XXI. 5; 43. 13) is the correct reading. 3. Thus here all. 4. In Br. this sūtra runs thus: हुत्वा हुत्वा ... ०वनयेद्याते पतिघ्नी तनूरिति; then follow the Mantras, interspersed with bhāṣya; इति त्रिभिः, at the end, not in ACT.—The sūtrâs, numbered by me 16-19 are taken by Devapāla together as a whole, with the first words of the sūtra numbered by me 20, up to अवनयेत्; Br. seems to connect 19 and 20.

संपातान्हुताऽऽज्यशेषबिन्दूनवनयेत् स्रावयेत् ।...या त इत्यादिभिश्च त्रिभिर्मन्त्रैर्हुत्वा हुत्वा कन्याया मूर्धनि संपातानवनयेदित्यनुषङ्गेण तत्र समाप्तिः ।...अत्रावसरे पूर्वनिदर्शितविधानेनाक्षतसक्तूञ्जुहुयात् ॥.

ब्र० । तासामन्न आयूंषीत्यग्नौ हुत्वा या ते पतिघ्नीत्याहुतिशेषं मूर्धन्यवनयेत् । अग्निर्ऋषिरित्यग्नौ हुत्वा या ते ऽपुत्रियेति मूर्ध्नि । अग्ने पवस्वेत्यग्नौ हुत्वा या ते ऽपशव्येति मूर्धनि संपातानवनयेत् ।...प्राक् पाणिग्रहणादग्निना रयिं प्रजापते न हि त्वदित्यक्षतसक्तुयागः[1] ॥

आ० ।...पावमानीर्हुत्वा या ते पतिघ्नीत्यवनयनं । द्वितीयं हुत्वा ( या ते ऽपुत्रिया तनूरिति । तृतीयं हुत्वा )[2] या ते ऽपशव्या तनूरिति । केचिदेतैरेव होममेतैरेवावनयनं कुर्वन्ति स्वाहापाठात्तत्र । नैषा सूत्रकारस्य शैली यत्पूर्वं विनियोगः पश्चान्मन्त्रविधानं । तस्माद्यथास्माभिर्व्याख्यातं तथा साध्वीयः । तत्र चाक्षतसक्तुहोमः ॥

**उदगग्नेर्दर्भेषु प्राचीमवस्थाप्य शुचिः पुरस्तात्प्रत्यङ्ङुपयन्ता देवस्य ते[3] सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णामीति हस्तं गृह्णाति दक्षिणमुत्तानं साङ्गुष्ठं नीचारिक्तमरिक्तेनैवं सव्यं सव्येन ॥ २१ ॥**

दे० । अग्नेरुदीच्यां दिशि दर्भास्तीर्णे देशे प्राङ्मुखीं कन्यामवस्थाप्य गुरुर्देवस्य त्वेत्यादिना मन्त्रेण कन्यायाः संबन्धिनं हस्तं ग्राहयतीत्यध्याहर्तव्यं । समानकर्तृत्वार्थं । केन प्रयुज्य ग्राहयतीत्यपेक्षायामर्थद्वारेणोपयन्त्रेति योज्यं । स चोपयन्ता गुरुणानुज्ञातस्तं गृह्णाति । कीदृशो वोढा गृह्णाति । शुचिः करग्रहणाविकृतः[4]

---

1. Cp. XXII. 2. 2. The passage enclosed in brackets is supplied by me. 3. This is the (only correct) reading, presupposed by Devapāla in his Mantrabhāṣya, ते also the Stein, Parisian, Berlin and Tuebingen ṭīkās. All the other sources (and cp. the commentaries) read त्वा. 4. ०धिकृतः A, ०विकृतिः CT.

धर्मोपयोगिनी ममेयमिति शुद्धसंकल्पः । प्रत्यङ्मुखः कन्यायाः पुरस्तादग्रे स्थितः सन् । प्राङ्मुखः सर्वकर्माणि कुर्वीतेत्यस्यापवादार्थं प्रत्यङ्मुख इति । दक्षिणं लोकप्रसिद्धमङ्गुष्ठसहितमुत्तानं नीचा दक्षिणेन ।...न्यग्भूतेनेत्यावृत्त्या[1] योज्यं । अरिक्तं साभरणं । असंभवे सुवर्णकनकादियुक्तं[2] । अतिदौर्गत्ये पुष्पफलादिसहितं । अरिक्तेनेति तद्वत् । एवमेव सव्येन सव्यम् ॥

ब्र० । तत उदगग्नेर्दर्भानास्तीर्य तेषु प्राङ्मुखीं वधूमवस्थाप्य तस्या वरः प्रत्यङ्मुखस्तिष्ठन्नेव हस्तौ गृह्णाति देवस्य त्वेति यथोक्तं सावित्रेण । सव्यं च गृहीत्वा ॥

आ० । प्राचीमवस्थाप्य कन्यां प्राङ्मुखीमित्यर्थः । तस्याः पुरस्तात्प्रत्यङ्मुख उपयन्ता वरः । उपयच्छतीत्युपयन्ता वोढा । शुचिः समाहितमनाः । देवस्य त्वेति कन्यायाः पाणिं गृह्णाति । तं विशिनष्टि । दक्षिणमुत्तानमङ्गुष्ठसहितमरिक्तं । साभरणं । दक्षिणेन हस्तेन । किंभूतेन । नीचा । न्यग्भूतेनारिक्तेन च । एवं सव्यं सव्येन । अनेनैव मन्त्रेणोत्तानं साङ्गुष्ठमरिक्तम् ॥

गृभ्णामीति[3] चतस्रो वरं वाचयति[4] गृभ्णामि ते सुप्रजास्त्वाय हस्तौ मया पत्या जरदष्टिर्यथासः[5] । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥ तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति ।

---

1. Thus D; ०त्यस्यप्रावृत्त्या CT; ०त्यस्यावृत्त्या A. 2. ०कणिका० D. 3. Thus the Bombay Ms. of Br. and the Bombay and Parisian Ṭeakas; the Mss. of Devapāla: गृह्णामीति, only TC in the Mantra itself गृभ्णा०, Ād. is indistinct. 4. The precise wording of this sūtra is uncertain: as given in the text read both the Mss. of Br. and the Stein. Bombay and Tuebingen Ṭeakas. In the Mss. of Devapāla the Sūtra proper has been omitted.—Possibly वरं must be cancelled. And perhaps the four verses in their sakalapātha formed originally not a part of the Sūtra text. 5. Thus only CD of the Mss. of Devapāla, who in his Mantrabhāṣya presupposes this reading; all the other Mss. यथासत्.

**या न ऊरू उशती विश्रयाते[1] यस्यामुशन्तः प्रहराम शेपम् ॥ सोमो ददद्गन्धर्वाय गन्धर्वो ददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयो ऽहं मनुष्यज इति ॥ २२ ॥**

दे० । गृह्णामीति चतस्रस्त्रिष्टुबनुष्टुभौ जपति ॥

ब्र० । गृभ्णामीत्याद्याश्चतस्रो जपति ॥

आ० । ततो जपति गृह्णामीति[2] चतस्रः ॥

**ततो गाथा वाचयति[3] सरस्वति प्रेदमवेत्यनुवाकम्[4] । उभावित्येके[5] ॥ २३ ॥**

दे० । गीयन्त[6] इति गाथाः । विशिष्टा एव ऋचः । अत एव कास्ता इत्यपेक्षायां सरस्वति प्रेदमवेत्यनुवाकमित्याह । अत्रानुवाके याः स्थितास्ता एवेत्यर्थः । द्यन्तस्वरयुक्तासु[7] च[7] कासुचिदृक्षु गाथाशब्दो रूढः । यथोक्तं—

छन्दोगा बह्वृचाश्चैव पौगा[8] वाजसनेयिनः ।
उच्चनीचस्वरं प्राहुः स वै गाथिक उच्यते ॥

1. Thus Br., the text of four ṛcakas; the Mss. of Devapāla TAC and first hand of D, as also a Parisian ṛcaka: विश्रयाति, D second hand: ०यति. The Bhāṣya starts from विश्रयति. 2. The akṣara ०ह्ण० is indistinct. 3. Thus Ād. and of the Mss. of Devapāla AD; Br. ins. वरं behind गाथा; CT have: सरस्वति प्रेदमवेत्यनुवाकं गाथा वरं वाचयति. 4. See Appendix IV. 5. उभा इत्येके. 6. गीयते D, गायन्त TAC. T (Ms. of Devapāla) and the Stein and Bombay ṛcakas. 7. Thus D; ०स्वरयुक्ताःसु च TC; ०युक्ताः गाथा A omitting सच ... ऋक्षु. Read perhaps (cp. Ād. on this Sūtra) द्यन्तर० instead of द्यन्त० 8. तथा A and thus also Br. in his quotation of this s'loka, Ād. with पौगा; read पैङ्गा ? Cf. with this the following s'loka as quoted by S'abara in his Mīmāṃsa bhāṣya XII. 3. 16:
छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ।

इति । अयं समुदायार्थः । ततो ऽनन्तरं सरस्वतीत्यनुवाकपरिच्छिन्ना गाथा गुरुर्वरं वाचयति भणयति । एके पुनर्मन्यन्ते । उभावपि कन्यावरौ गाथा गुरुर्वाचयतीति । किं सर्वदा[1] । नेत्याह । यदि पृथक्तन्त्रमिति । अत्रायमभिप्रायः । विवाहोद्वाहौ हि भिन्ने कर्मणी । कन्यासंस्कारो विवाहः । वरसंस्कार उद्वाहः । तत्र यदि देशकालकर्त्रैक्यात्तन्त्रेणेतिकर्तव्यता[2] तदा सकृदेकं वरमेव भणयति गाथास्वाध्यायिनं[3] गुरुः । यदि तु देशकालैक्ये ऽपि कन्यावरयोरेवाधिकृतत्वादृत्विजो दक्षिणया क्रीतत्वात्कर्तृभेदात्तन्त्रभेदः तदोभावपि वाचयितव्याविति ॥

अ० । तत ऋत्विक् सरस्वति प्रेदमवेत्यनुवाकं गाथा वरं वाचयति । वधूवरा इत्येके ॥

आ० । ततो गाथा वाचयत्यृत्विक् । वरो वाक्ति । गाथाग्रहणाद्व्यन्तरस्वरप्रापणार्थं[4] ।...उभौ दम्पती वाचयतीत्येके[5] ॥

यदि पृथक्तन्त्रं प्रदक्षिणमग्निमानीय तत्रैवोपवेश्य

---

1. Devapāla takes the opening words of the Sūtra, numbered by me 24, as belonging to *this* sentence, but also to sūtra 24. I give his comment here. 2. Thus AD only A ०मन्त्रै० instead of ०कर्त्रै०; ०क्यतन्त्रेणातिका० CT. 3. Thus D; ०वनं A, ०यिको TC. 4. ग्रहणाद्यन्तर the Ms. 5. In Br. and Devapāla now follow the verses of the Sarasvatyanuvāka, whith I do not believe to have formed part of the Sūtra. This is probable firstly on account of the designation "anuvāka" and secondly on account of the fact that Devapāla combines the words यदि पृथक्तन्त्रम् with the Sūtra numbered by me 23 and with the words following after यदि पृ०, which Devapāla regards as a separate Sūtra. If the two Sūtras 23 and 24 were separated by the extensive Sarasvatyanuvāka, Devapāla would not have been tempted to combine the words यदि पृथक्तन्त्रम् with Sūtra 23. I suppose that this Anuvāka forms a part of the Kāthaka text-collection, a kind of Mantrapraśna, cp. also LXIII. 20.—The text of this Anuvāka will be found in Appendix IV.

**संस्थापयेत् ॥ २४ ॥**

दे० । यदि पृथक्तन्त्रमिति विवृतमियता[1] । यदि पृथक्तन्त्रमित्युत्तरसूत्रेणापि संबध्यते । पृथक्तन्त्रपक्षे अग्निप्रदक्षिणं कृत्वा । वधूवरावानीय । पुनस्तत्रैवोपवेश्य यत्र पाणिग्रहणं वृत्तं । संस्थापयेत् समापयेत् । ऋतुतिथ्यादिकं भविष्यत्तन्त्रमुद्वाहसंबन्धितया । ततो विवाहसंबन्धितया भूय उद्वाहनतन्त्रं सकलं पूर्वं प्रदर्शितं विवाहसंबन्धितयोपक्रम्य वक्ष्यमाणं कुर्यादित्यर्थः ॥

ब्र० । यद्युद्वाहविवाहयोः पृथक्तन्त्रं सरस्वतीवाचनादनन्तरं वधूवरौ प्रदक्षिणमग्निमानीय यत्र पाणिग्रहणं कृतं तत्रैवोपवेश्य ऋतुतिथियागादितन्त्रं समापयेत् । पुनः परिसमूहनपरिस्तरणाद्युपक्रम्येदमर्यम्णे[2] गन्धर्वाय त्र्यम्बकायेति[3] लाजांस्तस्मिन्नेवाग्नौ संस्कृतांश्चतुरञ्जलिप्रमाणान्कल्पयेत्[4] ॥

आ० । इह द्वे कर्मणी प्रकृते विवाहश्चोद्वाहश्च । तत्रैकदेशकालकर्तृत्वात्तन्त्रेणानुष्ठानमावृत्त्या वा । तदर्थमाह । यदि पृथक्तन्त्रं विवाहोद्वाहयोर्वाचनादूर्ध्वं प्रदक्षिणमानीय वरौ तावेवोपविश्य[5] यत्र पाणिग्रहणं कृतं तत्रोद्वाहमृतुतिथ्यादि संस्थापयेत् समापयेदित्यर्थः । पुनरुपक्रम्याज्यभागान्तं यावत् । तत्र लाजा हविः ॥

**एककर्माणि तन्त्र[6] उत्तरेणाग्निं प्रत्येत्य ततो विवाहः ॥२५॥**

दे० । कर्मशब्दः प्रयोगवचनः । तन्त्रमितिकर्तव्यता विध्यन्तः[7] । सकृदनुष्ठीयमानेतिकर्तव्यतोपकारपक्षे उत्तरेणाग्निं प्रत्येत्य प्रदक्षिणमकृत्वैव । उत्तरभागेनैव कतिपयक्रमान् गत्वा प्रत्यागत्य ततो विवाहः । विवाहाङ्गतया[8] वक्ष्यमाणानामृतुतिथ्या-

---

1. See Devapāla on sutra 23. 2. Thus the Parisian Ṭeaka; ०क्रम्येदर्य० Bombay, ०क्रमेदर्य० Lahore 3. See XXV. 30, 35, 37. 4. Corrected; ०रङ्गुलिमात्रान्क० the Bombay ṭeaka, ०ञ्जलिः प्रमाणात्क० the Bombay Ms. of Br. 5. R. ०वेश्य ? 6. All the Mss. without sandhi तन्त्रे. Perhaps the Sūtrakāra intended तन्त्रे । with an interpunction. 7. ०न्ता A. 8. ०ङ्गः तया ।

दीनां प्रयोगः । तन्त्रेण[1] चोद्वाहोपकारोक्तानां वक्ष्यमाणानां च वृत्त्यानुष्ठानमित्यर्थः । एकतन्त्रे[2] कर्मणि[2] विवाहोद्वाहलक्षण इत्यपि केचित्पदयोजनं[3] कुर्वन्ति ॥

आ० । एककर्मणि तन्त्र एव प्रयोग इत्यर्थः । गाथा वाचयित्वा उत्तरेणाग्निं प्रदक्षिणमकृत्वैव प्रत्येत्य ततो विवाहो भवति ॥

**य इमे द्यावापृथिवी इत्यादय उद्वाहे होमा जयप्रभृतयश्च नैककर्माणि तन्त्रे स्विष्टकृदाज्यभागौ च ॥ २६ ॥**

दे० । उद्वाहे होमा ये जयप्रभृतयः य इमे द्यावापृथिवी इत्यादयश्च तथा स्विष्टकृत् तथाज्यभागौ एते सर्वे नैकतन्त्रे कर्मणि आवृत्त्या कर्तव्या इत्यर्थाज्ज्ञायते । तेन श्रुत्यर्थानां विधिनिषेधलक्षणमर्थद्वयं । तथासंभवमनेन[4] निदर्शितं[5] । स्विष्टकृच्छब्द उपरितनतन्त्रखण्डोपलक्षणार्थः[6] । आज्यभागशब्दोऽप्यधस्तनस्य[7] ॥

ब्र० । आज्यभागान्तं हुत्वा य इमे द्यावापृथिवी इत्यादिसंपातावनयनान्तं जुहोति ततोऽग्नये जनिविद इत्यादि येन द्यौरुग्रेत्यन्तम् ॥[8]

आ० । इदानीमेकेनैव सूत्रेणैकतन्त्रपृथक्तन्त्रयोः स्वरूपं दर्शयति । य इमे द्यावापृथिवी इत्येवमादयो ये उद्वाहे होमा वृत्ताः संपातावनयनान्ता जयप्रभृतयश्च अग्नये जनिविदे स्वाहेत्यादयो वावत्येन[9] द्यौरुग्रेत्यनेन क्रमेण सर्वे उद्वाहहोमा उक्तास्ते[10] न त्वेककर्मणि तन्त्रे भवन्ति । एककर्मणि निषेधं कुर्वन्नर्थात्पृथक्-

---

1. तन्त्रे D and the Berlin ṭīkā. 2. एककर्माणि तन्त्रे A. 3. पाद० ACT. 4. यथासं० ACT. 5. नि om. D. 6. ०तनस्य खण्डस्यो० पल० TA. 7. ०धस्तनः तस्य AT, धस्तनतस्य C. 8. According to the Berlin and a Tuebingen ṭīkā we have firstly of the eight verses meant in XXV. 17 *the last four*, then follow the Mahāvyāhṛtis (ib. 18), then the three āgnipāvmānīs ib. 19, then the three offerings with the mantras of ib. 11, then the santanīs (ib. 12) and those in ib. 13-16, and finally *the first four* of the eight verses mentioned ib. 17. 9. Corrupt! 10. The text has an interpunction after उक्तास्ते ।

तन्त्रे विदधाति । तथा स्विष्टकृदाज्यभागौ च । स्विष्टकृच्छब्देनो-परितनं तन्त्रखण्डमुपलक्ष्यते । आज्यभागशब्देनाधस्तनं । एक-तन्त्रे सर्वमेतत्प्रतिषेधति । सकृत्कृतस्य पुनः करणायोगादिति भावः पृथक्तन्त्रे पुनर्विदधाति । तच्च सुहृद्भूत्वा संकुलत्वा[1] जयादीनां पुनर्दर्शनादृतुतिथ्यादीनामावापस्थामावृत्त्या[2] शङ्कया । अक्षतसक्तूनामप्रत्यक्षत्वात्सर्वं पृथक्तन्त्रे विदधाति । नात्र सूत्रोपालम्भः कर्तव्यः । तेनैकतन्त्रे गाथा वाचयित्वा प्रदक्षिणम-ग्निमानीय तत्रैवोपविश्य[3] ऋतुतिथ्यादितन्त्रखण्डं समाप्य पुनरुपक्रम्य लाजान्संस्कृत्याज्यभागान्तं हुत्वा य इमे द्यावा-पृथिवी इत्यादि यावद्धिरण्यगर्भ इति चतस्रः ॥

**पश्चादग्नेर्दर्भेषु सा त्वमसीति वाचयति । सा त्वमस्यमो ऽहममो ऽहमस्मि सा त्वं ता एहि विवहावहै[4] पुंसे पुत्राय कर्तवे रायस्पोषाय सुप्रजास्त्वाय[5] सुवीर्यायेति ।२७**

दे० । एककर्मणि तन्त्रे उत्तरेणाग्निं प्रत्येत्य प्रत्यानीयाग्नेः पश्चाद्दर्भेषु विनिहितचरणौ वधूवरौ कृत्वा सा त्वमसीति वाचयति वरं गुरुः॥

ब्र० । तत उत्तरेणाग्निं वधूवरावानीय पश्चादग्नेर्दर्भेषूपवेश्य सा त्वम-सीति वरं वाचयति ॥

**अग्निमभिदक्षिणमानीयेष्यश्मानमिति वरं दक्षिणेन पदाश्मानमास्थापयति । एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्तु विश्वे देवा आयुष्टे शरदः शत-मिति । आतिष्ठेममिति वधूम् । आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । प्रमृणीहि दुवस्यवः सहस्व पृतन्यत**

---

1. Corrupt ? r. संकुलयित्वा ? 2. Thus the Ms. 3. r. ०वेश्य ? 4. विवाहावहै Br., the Bombay Ṭcaka and the Mss. of Devapāla in his Mantrabhāṣya. 5. सुप्रजस्त्वाय some of the Mss.

इति[1] ॥ २८ ॥

दे० । अग्निमभिदक्षिणं वधूवरावानीयाग्नेरुत्तरभागे ऽश्मानं स्थापयित्वा दक्षिणेन चरणेनास्थापयति गुरुः प्रयोजकः । वधूवरावातिष्ठतः आक्रामतः यथामन्त्रलिङ्गमाद्येन वरो ऽश्मानमाक्रामत्युत्तरेण वधूः । गुरुस्त्वाशास्ते तयोर्मन्त्रेणेष्टम् ॥

ब्र० । ततो ऽग्निं प्रदक्षिणमुभावानीय प्राङ्मुखाववस्थाप्येह्यश्मानमिति वरं दक्षिणेन पदाश्मानमास्थापयति । आतिष्ठममिति दक्षिणेनैव वधूम् ॥

आ० । ततो ऽग्निमभिदक्षिणमानीय वधूवरावेह्यश्मानमातिष्ठेति दक्षिणेन पदाश्मानं ग्रावाणमास्थापयति । आक्रामयत्यृत्विग्वरं । आतिष्ठेममिति वधूं दक्षिणेन पदेत्यनुवर्तते । मन्त्रवर्णाद्व्यवस्था ॥

**आज्यस्याञ्जलावुपस्तीर्येदं[2] हविरित्यभिमृश्याथास्यै शमीलाजानावपति भ्राता ब्रह्मचारी वा[3] ॥ २९ ॥**

दे० । आज्येनाञ्जलावुपस्तृणाति चतुरवदानेन । तत इदं हविरित्यादिना मन्त्रेण शूर्पस्थान्शमीपर्णमिश्रांल्लाजानभिमृशति वरः । अनन्तरमञ्जलावस्या वध्वा भ्राता ब्रह्मचारी भ्रातुरसंनिधाने शमीपर्णमिश्रांल्लाजानावपति ॥

ब्र० । ततो वध्वा अञ्जला ऋत्विगाज्यस्योपस्तृणाति । इदं हविरिति लाजान्वरो ऽभिमृशति । इदं हविः प्रजननमिति पूर्वं । अथास्यै

1. The original reading of this sūtra is uncertain: Devapāla gives only the Bhāṣya and Br. the words interspersed wih comments. After आनीय Br. has: उभौ प्राङ्मुखा भवस्थाप्य Devapāla does not give firstly the partīkas. It is not improbable that the original sūtra was much shorter and ran as follows: अग्निमभिदक्षिणमानायेह्यश्मानमिति दक्षिणेन पदाश्मानमास्थापयत्यातिष्ठाश्मानमिति. See especially Ād. 2. ॰लावुप॰ the Lahore Ms. of Br., and of the Mss. of Devapāla AT; so also Ād; the other Ms. ॰ला उप॰ 3. Br. (both Mss.) inserts कश्चित् after वा.

भ्राता शमीपर्णमिश्रांल्लाजानञ्जलिना प्राजापत्येन तीर्थेनाञ्जला आवपति। भ्रातरि त्वसंनिहिते ऽन्यो ब्रह्मचारी कश्चित्। भ्रातुः समावृत्तस्यापि न दोषः ॥

आ०। आज्यस्याज्येनाञ्जलावुपस्तृणाति। अपूर्वत्वाच्चतुरवत्तं विदधाति। इदं हविरित्यभिमृश्य लाजान्। वरो ऽभिमृशेल्लिङ्गात्॥

**तानविच्छिन्दती जुहोत्यर्यमणं नु देवमिति। अर्यमणं नु देवं कन्या अग्निमयक्षत। सो ऽस्मान्देवो अर्यमा[1] प्रेतो मुञ्चातु[2] मामुष्य गृहेभ्यः स्वाहा ॥ ३० ॥**

दे०। तांल्लाजानविच्छिन्दती विच्छेदमकुर्वती। एकेनैव प्रक्षेपेण। जुहोति।...अमुष्येति सामान्येन भर्तृनाम लक्ष्यते॥

ब्र०। तानृत्विगभिघारितान्वधूं संततमर्यमणं नु देवमिति वाचयित्वा हावयति। अमुष्येति वरस्य षष्ठ्यन्तं नाम गृह्णाति वधूः॥

आ०। तांल्लाजानविच्छिन्दती अविकिरन्ती। एकेनैव प्रक्षेपेण। जुहोति।....अमुष्य गृहेभ्य इत्यत्र भर्तृनाम षष्ठ्यन्तं। प्रेतो मुञ्चातु मा[3] देवशर्मणो गृहेभ्यः स्वाहेति॥

**अग्निर्मा जनिमानिति[4] वाचयति। अग्निर्मा जनिमाननया जनिमन्तं करोतु जीवपत्निर्भूयासम् ॥ ३१ ॥**

दे०। वरं भणयति गुरुरग्निर्मेत्यादिमन्त्रमित्यर्थः॥

आ०। वाचयति वरम्॥

**इयं नारीति सर्वत्रानुषजति। इयं नार्युपब्रूते तोक्मान्यावपन्तिका। दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो ममेति[5] ॥ ३२ ॥**

---

1. र्यमा the Mss. of Devapāla. 2. Thus Br., Ād. and of the Mss. of Devapāla T; मुञ्चतु ADC; the Mantrabhāṣya presupposes the same reading. 3. मे the Ms. 4. वरं ins. Br., वरः A on the margo. 5. इति given by Br., the Stein and Bombay ṭcakas and of the Mss. of Devapāla by D only.

दे० । इयं नारीत्यस्या अनुष्टुभस्त्रिष्वप्यनुषङ्गः कर्तव्यः ॥
ब्र० । हुतेष्वग्निर्मा जनिमानियं नारीति वरं वाचयति ॥
आ० । इयं नारीत्यनुष्टुभं सर्वत्र त्रिष्वनुषजति ॥

**एवं द्विरुत्तरम् ॥ ३३ ॥**

दे० । द्वौ वारौ द्विः । एवमुत्तरं कर्म द्वौ वारौ कर्तव्यम् । तदेव स्फुटं दर्शयितुमाह[1] ॥
आ० । एवं द्विरुत्तरं कर्म । द्वौ वारौ । द्विरेव कुर्यात् । एतदेव स्फुटं दर्शयति[1] ॥

**पर्ययणे पर्ययणे लाजहोमो[2] याजमानं[3] चाश्मानं[4] चास्थापयति[4] ॥ ३४ ॥**

दे० । पर्ययणमग्निपरिगमनं । याजमानानुषञ्जनं[5] । तत्र च वरः कर्ता[6] । ततोऽश्मनि[7] स्थापनं । तत्र परिस्तीर्य लाजानामावपनम् ॥
आ० । पर्ययणमग्नेः परिगमनं । ततोऽश्मास्थापनमिति । परिस्तीर्य लाजानामावपनम् ॥

**गन्धर्वं पतिवेदनमिति । गन्धर्वं पतिवेदनं कन्या अग्निमयक्षत । सोऽस्मान्देवो गन्धर्वः प्रेतो मुञ्चातु[8] मामुष्य गृहेभ्यः स्वाहा[9] ॥ ३५ ॥**

---

1. Viz in the following sūtras. 2. लाजाहोमो Br., Ad., the Stein, Parisian and Bombay lcākas. 3. याजनं CT, the others यजमानं; if याजमानं is the correct reading, this term refers to the Mantras, which the vara has to say after each homa. 4. Thus Br.; चाश्मानं च स्थाप० CT, the Parisian lcaka; चाश्मानं स्थाप० D, चाश्मानमास्थाप० A; ०मानश्चाश्मानं चास्थाप० Ad. 5. Thus CT; यज० AD. 6. Thus A and second hand of D. the others कर्तार्थम् 7. Thus A; ०श्मनः D, ऽश्मने TC. 8. मुञ्चतु the Mss. of Devapāla exc. A. 9. Here as in the following sūtras again it is uncertain, whether in Devapāla the whole mantra is firstly given, or firstly the pratīka and then the sakalapātha.

दे०। गन्धर्वमित्यादिमन्त्रेणापि होमविशेषः॥
ब्र०। गन्धर्वमिति वदन्ती वधूर्लाजाञ्जुहोति॥
आ०। इति होमविशेषः॥

**सोमो मा ज्ञातिमानिति वाचयति। सोमो मा ज्ञातिमाननय ज्ञातिमन्तं करोतु जीवपत्निर्भूयासम्॥३६॥**

दे०। सोम इत्यादिमन्त्रं गुरुर्वाचयतीत्यर्थः॥
ब्र०। सोमो मा ज्ञातिमानियं नारीति वरं वाचयति॥

**त्र्यम्बकं यजामह इति। त्र्यम्बकं यजामहे सुगन्धिं पतिपोषणम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामुष्य गृहेभ्यः स्वाहा॥३७॥**

दे० ब्र० आ०। त्र्यम्बकमित्यादि तृतीयो होमः॥

**पूषा मा पशुमानिति वाचयति। पूषा मा पशुमाननया पशुमन्तं करोतु जीवपत्निर्भूयासम्॥३८॥**

दे०। अस्यापि वाचनमेव न त्वनेन होमः॥
ब्र०। पूषा मा पशुमानियं नारीति वरं वाचयति।...तत ऋतुतिथियागादि येन रक्षांसि दाशुष इत्यन्तम्[1]॥

**शिष्टान्स्विष्टकृते[2] जुहोति शूर्पेण कर्ता[3] ॥३९॥**

दे०। लाजशब्द उभयलिङ्गः सूत्रकृता दृष्टः[4]। कन्यया ये हुतास्तेभ्यो ये शिष्टा लाजास्तान्स्विष्टकृते जुहोति। शेषान्स्विष्टकृते समवद्यतीति वचनात्[5]। कन्यया हि प्रधानहोमः कृतोऽञ्जलिना च। तन्निवृत्त्यर्थं शूर्पग्रहणं कर्तृग्रहणं च॥
ब्र०। शिष्टांल्लाजानुपस्तीर्णाभिघारितान्शूर्पेण कर्ता ऋत्विक् स्विष्टकृते जुहोति॥

---

1. Refers to XLVII. 13. 2. The Lahore Ms. of Br.: शिष्टा लाजाः स्वि०. 3. CT om. this word, but see the Bhāṣya. 4. Had Devapāla the reading शिष्टाः स्विष्ट० in view? 5. Probably a quotation from the Yajnasūtra.

आ० । शिष्टांल्लाजान्स्विष्टकृते जुहोति । सक्तनामवदानं शूर्पेणैव कर्ता- जुहोति । अञ्जलिना कन्यया प्रधानहोमः कृतः । अतः शूर्पग्रहणं कर्तृग्रहणं च ॥

**वरो दक्षिणा[1] ॥ ४० ॥**

दे० । अथ दक्षिणा केन देयेत्याह । वरो दक्षिणां । वर एव दक्षिणां विवाहकर्मणः कर्त्रे दद्यात्...न तु नारीत्यर्थः । ऋतुतिथ्यादि यावत्स्विष्टकृत् ॥

ब्र० । हुते वरो होमकर्त्रे वरं ददाति । वरे गां तु विजानीयाच्चतुर्वर्षा- मिति श्रुतिः ॥

आ० । वरो दक्षिणा । कर्त्रे स्विष्टकृदन्ते दक्षिणादानं स एव ददाति ॥

**तूष्णीं हस्तौ विमुच्य वि ते मुञ्चामीति संनहनम्[2] ॥४१॥**

दे० । सावित्रेण मन्त्रेण हस्तग्रहणं यथा तथा विमोचनं मा भूदिति तूष्णींग्रहणं । हस्तौ विमुच्य वि ते मुञ्चामीति मन्त्रेण संनहनं योक्त्रं विमुञ्चति कर्ता । मन्त्रलिङ्गात् । न तु स्वयम् ॥

ब्र० । मनो ज्योतिरिति सप्तान्ते[3] हुते तूष्णीं वरो हस्तौ विमुञ्चति । वि ते मुञ्चामीति वध्वाः संनहनम् ॥

आ० । आश्रावितान्तं[3] समाप्य । तूष्णीं हस्तौ विमुच्य मन्त्रेण गृहीतत्वान्मन्त्रेणैव विमोको मा भूत् । वि ते मुञ्चामीति संन- हनं । योक्त्रं । कर्ता न स्वयं विमुञ्चेत् । लिङ्गात् ॥

**उत्तरतोऽग्नेर्दर्भेषु प्राचीं प्रक्रामयत्येकमिषे द्वे ऊर्जे त्रीणि रायस्पोषाय चत्वारि मयोभवाय पञ्च प्रजाभ्यः षड्ऋतुभ्यो दीर्घायुत्वाय सप्तमं सखा सप्तपदा भव सुमृ-**

---

1. Devapāla reads and explains दक्षिणां, but he misinterprets these words. 2. In the (interpolated) text of Br. follows : विमुच्यमानमध्वर्युरनुमन्त्रयते (probably a quotation from the Yajnasūtra) । मन्त्रलिङ्गात् । then follows the mantra sakalapāthena. 3. CP. XLVII. 14.

**डीका सवस्वति[1] मा ते व्योम संदृशे विष्णुस्त्वान्वे-त्वित्यनुषङ्गः ॥ ४२ ॥**

दे० । अग्नेरुत्तरेणास्तीर्णेषु दर्भेषु प्राङ्मुखीं वधूं प्रकामयति कर्ता सप्त पदानि सप्तभिर्मन्त्रैः । विष्णुस्त्वान्वेत्विति सर्वत्रानुषङ्गः । एकमिषे विष्णुस्तान्वेतु ॥

ब्र० । यथा । एकमिषे सखा सप्तपदा भव सुमृडीका सरस्वति मा ते व्योम संदृशे विष्णुस्त्वान्वेतु ॥

आ० । एकमिष इत्येवमादिभिः सप्तभिः । सखा सप्तपदेत्यनुषङ्गः । केचित्तु विष्णुस्त्वान्वेत्वित्यनुषङ्गं कुर्वन्ति । दीर्घायुत्वाय सप्तमं सखा सप्तपदा भवेत्यस्यैवैतच्छेषं[2] मन्यन्ते । तदानीं मा ते व्योम संदृश इति सप्तममित्येवं सूत्रमभविष्यत् । गृह्यान्तरेषु तूभयथा दृश्यते ।

**तच्चक्षुरित्यादित्यमुपस्थापयति ॥ ४३ ॥**

दे० । तच्चक्षुरित्यादिना कन्यामादित्यमुपस्थापयति ॥

ब्र० । सप्तमं पदं नीत्वा तच्चक्षुरिति वाचयन्नादित्यमुपस्थापयति ॥

**अस्तमितेऽग्निम् ॥ ४४ ॥**

दे० । विवाहे क्रियमाणे यदि रात्रिर्भवति रात्रौ वा विवाहस्तदा तच्चक्षुरित्यनयाग्निमुपस्थापयेत् ॥

आ० । अस्तमिते चानयैवाग्निमुपस्थापयति ॥

**जीवन्तीं ध्रुवं स्वस्त्यात्रेयं दर्शयत्यरुन्धतीं च । एतेषा-मेकैकं पश्यसीत्याह पश्यामीति प्रत्याह[3] ॥ ४५ ॥**

---

1. Thus Br., and of the Mss. of Devapāla D, and four reakas; ACT: सरस्वती. In the Mantrabhāṣya the vocative is presupposed. 2. Thus hesitatingly emended. The Ms.: भवत्यस्यैवेतश्शेषं. 3. The text of this sūtra is given according to the reading of the Lahore Ms. of Br., which however, as does also the Bombay Ms., inserts एकैकं before प्रत्याह. The Mss. of Devapāla, in the main, agree with this reading. The Bombay Ms. of Br. is interpolated: between अरुन्धतीं च and एतेषां it inserts: जीवन्तं पश्यसि पश्यामि ध्रुवं पश्यसि पश्यामि स्वस्त्यात्रेयं पश्यसि पश्यामि अरुन्धतीं पश्यसि पश्यामि.

दे० । जीवन्तं……अरुन्धतीं च । जीवन्तीं कन्यामिच्छन्ध्रुवादिकं दर्शयेत् । अत्र केचिद्रात्राविल्यनुवर्तयन्ति । दिवा ध्रुवादिदर्शनाभावात् । अपरे नानुवर्तयन्ति । यतोऽग्रे पश्यसीति प्रश्ने[1] अपश्यन्त्यपि पश्यामीति प्रतिवचनमाहेत्यर्थो[2] लक्ष्यते । दर्शनमात्रविवक्षया हि पश्येप्रश्नः[3] पश्यामि न वेति चोत्तरं पश्येम[4] । एतेषामेकैकं पश्यसीत्याह । ध्रुवं पश्यसीत्याद्येकैकस्य नाम गृहीत्वा पृच्छेद्गुरुः । पश्यामीति प्रत्याह । सापि पृष्टा सती पश्यामीति प्रब्रूयात् ॥

ब्र० । ततो जीवन्त्यादीन्दर्शयति । जीवन्तीं पश्यसि पश्यामीति सर्वत्र वधूः प्रत्याह । ध्रुवं । स्वस्त्यात्रेयं । अरुन्धतीं । जीवन्तीमिति वध्वा विशेषणमित्यन्ये ॥

आ० । जीवन्तीं चेदाशास्यते जीवतीत्याशिषं[5] ध्रुवादीन्दर्शयति । केचिदस्तमित इत्यनुवर्तयन्ति । न पुनस्ते दिवा न[6] सन्ति । अपश्यन्त्यपि [7] पश्यामीति प्रत्याह । तस्माद्दिवापि । एतेषामेकैकं पश्यसीत्याह । पश्यामीत्येकैकं प्रत्याह ॥

**सुमङ्गलीरियं वधूरिमां समेत[8] पश्यत । सौभाग्यमस्यै दत्त्वायाथास्तं[9] विपरेतनेति वीक्षितानुमन्त्रयते ॥४६**

दे० । वीक्षितान्ध्रुवादीन्[10] गुरुरनुमन्त्रयते ।

---

1. Hesitatingly emended; पश्ये ACT; D. om. this word. 2. ०र्थं A. 3. ? 4. Thus D; पश्यामः CT, पश्येमः A. 5. Read perhaps जीवत्विस्याशिषं. 6. Perhaps न must be cancelled. 7. ०न्त्यधि the Ms. 8. The Bombay Ms. of Br. and of the Mss. Devapāla T only have समेत्य; this reading is also presupposed by Devapāla in his Mantrabhāṣya: समेत्य संभूय । 9. Devapāla in his Mantrabhāṣya: दत्त्वायेति क्त्वो यक् (Pānini VII. 1.47). 10. In accordance with this false interpretation (वीक्षित must be synonymous to प्रेक्षक of the Mān. gṛhs.) Devapāla interprets वि अस्तं परेतन as: अस्तं गच्छत, then he remarks: तेन दिवापि ज्ञेयं ध्रुवादिदर्शनं हि जीवनद्योतनमाहुः । तदिहावसरे अपश्यन्त्या अपि पश्यामीति प्रतिवचनं ॥

आ० । सुमङ्गलीरित्यनयानुष्टुभा वीक्षितामनुमन्त्रयते ऋत्विक् ।

उदुत्तममिति प्रागुदीचीमावसथं यतीमनुमन्त्रयते यतो वा स्यात् । उदुत्तममारोहन्ती व्यस्यन्ती[1] पृतन्यतः । मूर्धानं पत्युरारोह प्रजया च विराड्भव ॥ इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि ॥ सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव । ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥ स्नुषाणां श्वशुराणां च प्रजायाश्च[2] च धनस्य च[2] । पतीनां देवराणां[3] च सजातानां[4] विराड्भवेति[5] ॥ ४७ ॥ २५ ॥ ( ३ । १ )

दे० । उदुत्तममित्यादिनानुष्टुप्चतुष्टयेनावसथं गृहं यंतीं गच्छन्तीं प्रागुदीचीमुत्तरपूर्वदिगभिमुखीमनुमन्त्रयते । यत्र वावसथः स्यात्तदभिमुखी[6] गच्छेत् । ... अत्र भर्तृगृहे गमनावसरे मधुपर्ककाण्डिका पठ्यते । सा च स्नातकप्रकरणे व्याख्यायते[7] ॥

ब्र० । उदुत्तममिति चतसृभिर्वधूमैशानीं दिशं गृहं व्रजन्तीमनुमन्त्रयते यत्र वा स्यात्तस्मिन्पितृवेश्मनि[8] ॥ इति पृथङ्मन्त्रविधिः । एककर्मणि तन्त्रे[9] सक्तुसंस्कारकाले लाजांश्च संस्कुर्यात् ।

---

1. Thus Br. and of the Mss. of Devapāla C; व्यस्यन्तीव DA, but the Bhāṣya points to the reading without इव. 2. Thus all the Mss. of Devapāla, and in the Bhāṣya; प्रजया च धनेन च Br. and four ṛcakas, a fifth: प्रजया च धनस्य च. 3. Thus *all*, but the Bhāṣya देवृणां देवराणां छन्दस्युभयजो ह्रस्वः (Pāṇini VI. 4.5). मध्यदेशे तु दीर्घः पठ्यते. 4. Mss. of Devapāla, except A, insert च. 5. In a Tuebingen and a Parisian ṛcaka the verses except the last, are accented. 6. ०खं D, ०खीं AC. 7. Thus A; ०ख्यायिष्यते D; ०ख्यायिते C. 8. स्यात्तद्भर्तृवेश्म the Stein ṛcaka. 9. Cp. XXV. 25.

सरस्वतीवाचनानन्तरं[1] यथोक्तमुद्वाहे[2] होमतन्त्रं[2] निर्वर्त्योत्तरेणाग्निं वधूवरावानीय पश्चादग्नेर्दर्भेषु सा त्वमसीतिवाचनादि यथोक्तं संस्थापयेत् । नैककर्मणि तन्त्रे य इमे द्यावापृथिवी इत्यादयो होमा न चाग्नये जनिविद इत्यादयो हिरण्यगर्भ इति चतस्र इत्यन्ता । न चात्र पुनराज्यभागौ समवदाय शूर्पेणैव तु स्विष्टकृत् । तथा च ।[3]

पृथक्तन्त्रं यदि भवेद्गाथावाचनतः परम् ।
प्रदक्षिणाग्निमानीय आद्यं होमं समापयेत् ॥
द्वितीयमाज्यभागान्तं हुत्वा चैकादशाहुतीः ।
य इमे द्यावापृथिवी इत्यादि जुहुयात्ततः ॥
संपाताश्च यथोक्ताः स्युर्वध्वाः शिरसि ये[4] स्मृताः ।
ततोऽग्ने जनिविदे इत्याद्याश्च यथाक्रमम् ॥
जुहुयात्सप्तपञ्चाशद्येय द्यौरन्तमाहुतीः ।[5]
पश्चात्तत्राग्नेर्दर्भेषु वाचयेत्सा त्वमित्यृचम् ॥
हुत्वाग्निपावमानीभिः संपातानवनीय च ।
यागस्त्वक्षतमक्तूनां प्राक् पाणिग्रहणाद्भवेत् ॥

---

**पुण्याहे युङ्क्ते । योगे योग इति युनक्ति ॥१॥**

दे० । यदा वधूः पुण्ये दिवसे भर्तृगृहं गच्छति तथा रथशिबिकां[6] यथासंभवं युङ्क्ते । तत्र योगे योग इति मन्त्रावृत्त्याश्वादिकं युनक्ति ॥

ब्र० । योगे योग इति रथयोजनादि । स्वगृहोपस्थानं पत्न्यागमने विधानं[7] सुमृणार्थत्वान्नोक्तं । सुनक्षत्रे वध्वा सह रथमारुह्य

---

1. Thus a Parisian ṛcaka, •वाचनान्तं the Bombay Ms. of Br. 2. Thus the Lahore Ms. of Br., उद्वाहहोममन्त्रं the Bombay Ms., उद्वाहे होमं तन्त्रं the Parisian ṛcaka. 3. The following ślokas are taken apparently from a Kāṭhaka-gṛhyakārikā. 4. यत् the Bombay Ms., त the Parisian ṛcaka. 5. This line (with सप्तपञ्चदशद्येन ) only in the Parisian ṛcaka. 6. रथ om. C. 7. विधान the Ms.

श्वशुरगृहाज्जन्यवृतसंतूर्यदुन्दुभ्यादिवाद्यघोषेण सह स्वगृहं यथोक्तविधिना गच्छति[1] ॥

आ० । यदा वधूः पतिगृहं याति पुण्याहे तदा युंक्ते रथादि । योगे योग इति तत्र वहान्युनक्ति युगरश्मिभिः शिबिकादौ मनुष्यान्वा ॥

**अङ्क्न्यङ्का अभितो रथं ये ध्वान्ता वाताग्रमभि ये संपतन्ति । दूरेहेतिः पतत्रिणी वाजिनीवांस्ते नोऽग्नयः प्रप्रयः सारथान्त्विति चक्रे अनुमन्त्रयते ॥ २ ॥**

दे० । अङ्क्न्यङ्कावित्यादिकया जगत्याग्निदैवतया रथचक्रे अनुमन्त्रयते ऋत्विग्वरो वा । सकृच्च मन्त्रः प्रयोक्तव्यो द्विवचनलिङ्गात् ॥

आ० । चक्रे अनुमन्त्रयते । शिबिकादावुभयपार्श्वे । द्विवचनाभिधायित्वात्सकृन्मन्त्रः ॥

**खे रथस्य खेऽनसः खे युगस्य च[2] तर्द्मसु[3] खे अक्षस्य खे अवदधामीति युगतर्द्मसु[4] शमीशाखामवदधाति ।३।**

दे० । खे रथस्येत्यादिना युगस्य तर्त्मसु छिद्रेषु शमीशाखामवदधाति ।

आ० । खे रथस्येति युगच्छिद्रे शमीशाखामवदधाति । युग्यादौ यथासंभवम् ॥

**सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आरोह सूर्ये अमृतस्य योनिं[5] स्योनं पत्ये वहतुं कृणुष्वेत्यारोपयते[6] ॥ ४ ॥**

दे० । सुकिंशुकमित्यादिना वधूमारोहयति ॥

आ० । अनया वधूमारोपयते ॥

---

1. This is all the comment Br. gives on this whole chapter. 2. च not given by Br. (both Mss.). 3. Thus only the Parisian ṛcaka; तर्त्मसि all the others, Br. indistinct. 4. ०तर्त्मसु the Ms.. only the Parisian ṛcaka gives as above. 5. योनिं AC (this whole chapter is missing in T), the Bombay Ms. of Br.; लोकं the Lahore Ms. of Br. and D. The Mantrapāṭha starts from योनिं. 6. Thus Br., Ād.; आरोपयेत् DCA.

मा विदन्परिपन्थिनः[1] सुमङ्गलीरिति[1] च प्रवाहयते[2] ।५।

दे० । मा विदन्निति सुमङ्गलीरिति चैताभ्यां...प्रवाहयते रथम् ॥

संकाशया विवहतं ब्रह्मणा गृहैरघोरेण चक्षुषा[3] मैत्रेण । पर्याणद्धं विश्वरूपं यदस्याः स्योनं पतिभ्यः सविता कृणोतु तदिति वधूसंगमे ॥ ६ ॥

दे० । एतां जगतीं सावित्रीं वधूसंगमे जपति ॥

आ० । संकाशयेति जगतीमन्यस्या नवोढायाः संगमे जपति ॥

ये पथीनामिति चतुष्पथेषु[4] जपतीमे चत्वार इति च ।७।

दे० । सूत्रं स्फुटार्थम् ॥

आ० । ये पथीनामिति चतुष्पथे ऽनुष्टुभं जपति । इमे चत्वार इति च त्रिष्टुभम् ॥

ये श्मशानेष्विति श्मशानेषु । ये श्मशानेषु पुण्यजनाः शावास्तेषु शेरते । अत्रैव ते रमन्तां मा वधूरन्ववेक्षतेति[5] ॥ ८ ॥

दे० । जपतीत्यनुषङ्गः ॥

ये वनेष्विति महावनं महावृक्षं[6] दृष्ट्वा[7] ॥ ९ ॥

दे० । स्फुटम् ॥

आ० । ये वनेष्विति महावने वृक्षगुल्मलतादिसमवायं दृष्ट्वा महावृक्षं वा विटपिनं देवताधिष्ठितं चिरन्तनं दृष्ट्वा जपति ॥

---

1. See XXV. 5 and 46. 2. ०यति A. 3. चक्षुषाहं both the Mss. of Br. and the Parisian Ṛcaka. 4. Thus all the Mss. of Devapāla; ०पथे Br. and Ād. 5. Reading doubtful. As above, the Bombay Ms. of Br. and the Parisian Ṛcaka; the Lahore Ms.: ०न्ववेक्षेतेति; ०धूरनुवेक्षतेति C, ०धूरन्वीक्षतेति D, धूर्वेक्षतेति A. The Bhāṣya: मा वधूरवेक्षत मा द्राक्षुः 6. च in DC and the Lahore Ms. of Br., not C and the Bombay Ms. of Br. 7. The Mss. insert here जपति which probably is an interpolation.

**इह [illegible]रिति[1] क्रूरं दृष्ट्वा[2] ॥ १० ॥**

दे० । क्रूरं सिंहादिकं दृष्ट्वा जपतीत्यनुषङ्गः ॥

आ० । क्रूरं क्रूरकर्माणं हिंस्रं दृष्ट्वा जपति ॥

**नमो अस्तु सर्पेभ्य इति[3] सर्पान्[4] ॥ ११ ॥**

दे० । दृष्ट्वा जपतीत्यनुषङ्गः ॥

**ये तीर्थानीति तीर्थे ता मन्दसानेति[5] च । ता मन्द-साना[5] मनुषो दुरोण आ धत्तं रयिं सहवीरं वचस्यवे । कृतं तीर्थं सुप्रमाणं[6] शुभस्पती स्थाणुं पथेष्ठामप दुर्मतिं हतम् ॥ अयं नो मह्याः पारं स्वस्ति नेषद्वनस्पतिः[7] । सीरा नः सुतरा भव दीर्घायुत्वाय वर्चसे ॥ अश्मन्वती रीयते संरभध्वमुत्तिष्ठत प्रचरता[8] सखायः । अत्रा जहाम ये आसन्नशेवाः शिवान्वयमुत्तरेमाभि वाजानिति ॥ १२ ॥ २६ ॥ (३।२)**

दे० । तीर्थे जपति प्रत्येकमुचितान्मन्त्रानित्यर्थः ॥

आ० । ये तीर्थानीति नद्यास्तीर्थे तारे जपति । ता मन्दसानेति चापरशाखाम्नातत्वात्पठति तिस्रः ॥

---

**शं न इति नदीं तरति ॥ १ ॥**

---

1. The mantra occurs once more LIX. 3, see Br. on this sūtra. 2. Probably this last word does not belong to the text. 3. According to Dev. and Br. the verses Kāth. XVI. 15: 238. 12-17 are meant. 4. In the Bombay Ms. of Br. follows: अजगरान्वासुकान् तक्षकानिति. 5. The Mss. of Devapāla मन्दमा०, thus also his Mantrabhāṣya. 6. सुप्रपाणं the Lahore Ms. of Br. only. 7. नैष० the Mss. of Devapāla and his Bhāṣya. 8. Thus Br. and of the Mss. of Devapāla A; प्रचरत: C, प्रतराम: D and from this reading starts the Mantrabhāṣya.

दे० । गतार्थम् ॥

आ० । शं न आप इति प्रकृते नदीं तरति ॥

य ऋत इति रथाङ्गे ऽवशीर्णे[1] । य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः । संधाता सन्धिं मघवा पुरूवसुर्निष्कर्ताविहुतं[2] पुनरिति ॥ २ ॥

दे० । अविशेषाभिधानाद्यस्मिन्[3] कस्मिंश्चिद्रथाङ्गे विशीर्णे श्लथे य ऋत इत्यादिकामैन्द्रीं बृहतीं जपतीत्यर्थः ॥

आ० । य ऋत इति रथाङ्गे ऽवशीर्णे बृहती ॥

अपराह्णे ऽधिवृक्षसूर्ये गृहानुपयायोर्जं बिभ्रतीति[4] गृहान् प्रतिद्दश्य जपति । ऊर्जं बिभ्रती[5] वसुवनिः सुमेधा गृहानाग मोदमाना सुवर्चाः । अघोरेण चक्षुषाहं मैत्रेण[6] गृहाणां पश्यन्ती[7] वय उत्तिरामि ॥ गृहाणामायुः प्र वयं तिराम गृहा अस्माकं प्रतिरन्त्वायुः ॥ गृहानहं सुमनसः प्रपद्ये वीरघ्नी[8] वीरपतिः[9] सुशेवा । इरां वहतो घृतमुक्षमाणांस्तेष्वहं[10] सुमनाः संविशामि ॥ येषां मध्ये ऽधिप्रवसन्नेति सौमनसं बहु । गृहानुपह्वयामहे ते नो जानन्तु जानतः ॥ सूनृतावन्तः स्वधावन्त

1. विशीर्णे DC. * 2. To the reading अवि॰ points also the Mantrabhāṣya. 3. ॰शेषाद्यभिधा॰ DA. 4. Thus the Mss. of Devapāla, the Lahore Ms. of Br. (the Bombay: ऊर्जं बिभ्रीति) and Ād. (but in his introduction to XI. 1 he cites ऊर्जं बिभ्रदिति ।) 5. Thus again the Mss. of Devapāla, and the Bhāṣya explains this term; Br. (Bombay Ms.) बिभ्रद् (cp. Kāth. XXXVIII. 13: 115.13). 6. Instead of मैत्रेण (thus Devapāla) Br. has, as Kath. l. c. 1 शिवेन. 7. पश्यन् Br. 8. The Bhāṣya: वीरघ्नी गत्यर्थो ऽत्र हन्तिः. 9. वीरवतः the Bombay Ms. of Br. and the Parisian ṭeaka. 10. Thus Br.: ॰माणास्ते॰ the Mss. of Devapāla.

इरावन्तो ह[1] सामदाः[1] । अक्षुध्या अतृष्या गृहा मास्मद्बिभेतन ॥ उपहूता इह गाव उपहूता अजावयः । अथो अन्नस्य कीलाल उपहूतो गृहेषु मे ॥ उपहूता भूरिधनाः सखायः साधुसंमदाः[2] । अरिष्टाः सर्वपुरुषा[3] गृहा नः सन्तु सर्वदेति ॥ ३ ॥ २७ ॥ ( ३ । ३ )

दे० । अपराह्णसमये ऽधिवृक्षसूर्ये । यदा वृक्षाणामुपर्येव रविरश्मयो दृश्यन्ते नाधस्तात्तदा गृहानुपायाय[4] । गृहग्रहणेन स्वग्राम उपलक्ष्यते । स्वग्रामसमीपं गत्वा । तत्र स्वगृहान्प्रतिदृश्य ऊर्जं बिभ्रतीति जपति । वध्वा एष जपो मन्त्रलिङ्गात् ॥

आ० । ततो ग्रामं प्राप्यापराह्णे ऽस्तमयसमये अधिवृक्षसूर्ये गृहाणां[5] समीपमागत्य ऊर्जं बिभ्रतीति गृहानवलोक्य जपति कन्या सप्तैता ऋचः । कन्याया जपः । मन्त्रवर्णात् ॥

---

उलपराजीं[6] स्तृणात्या शयनीयात् ॥ १ ॥

दे० । उलपो वीरणः । प्रसूना दीर्घदर्भा इति तु प्रसिद्धिहीनं वचः । मध्यदेशादौ वीरणानामेव सिद्धं[7] । ऋत्विग्वीरणपङ्क्तिं[8] स्तृणाति रचयति । तथावतरणस्थानादारभ्य वधूशयनगृहविशेषं यावत् ॥

ब्र० । उलपास्तृणविशेषः । तैः शयनस्थानं यावद्गृहमार्गमास्तीर्य ॥

आ० । तत ऋत्विगुलपराजीं स्तृणाति । उलपा तृणविशेषः । राजी पंक्तिः । आ शयनीयात् । गृहाद्यावत् ॥

---

1. Mantrabhāṣya : हेत्यनर्थकः । सामदाः स्याम । 2. Thus D and the Bhāṣya ( सम्यक् हर्षयुक्ताः ), साधुषंमदाः Br., ॰संमदाः AC. ॰संपदः the Lahore Ms. of Br. 3. ॰पूरु॰ D and the Bhāṣya (also the Lahore Ms. of Br.). 4. Thus here the Mss. 5. वृक्षाणां the Ms. 6. Thus, correctly (cp. तया in sūtra 2) Br., the Berlin and Stein ṛcakas and of the Mss. of Devapāla T ; ॰राजी the other Mss. 7. Thus CT ; सिद्धिं A, तथा प्रसिद्धिः B. 8. पङ्क्तीः D.

तया प्रविशति ॥ २ ॥

दे० । तया राज्या प्रविशति गृहं । रथादिकादवतीर्य वधूसहितो वरः ॥

आ० । रथादवतीर्य तया राज्या प्रविशति ॥

अध्याहिताग्निं सोदकं सौषधमावसथं प्रतिपद्यते ॥३॥

दे० । अध्याहितः स्थापितो विवाहाग्निर्यत्र तं । तथा सोदकं । उदकुम्भभूषितं । सौषधं । व्रीह्याद्योषधिसनाथं । आवसथं । गृहविशेषं । प्रतिपद्यते । प्रविशति । अत ऊर्ध्वं हि पाकयज्ञेष्वधिक्रियते । वास्तुहोमानन्तरं चैष प्रवेश इष्यते । उक्तं हि सूत्रं पूर्वं[1] । अमीवहा वास्तोष्पत इति…आविशेदिति[2] ॥

आ० । कीदृशमावसथं प्रविशति । अध्याहितो ऽग्निर्यस्मिन्सो ऽध्याहिताग्निरावसथः एतदुक्तं भवति । यो ऽसौ वैवाहनो ऽग्निः स तत्र पूर्वमेवाहितः[3] । अस्मिन्नवसरे पूर्वकृतेषु गृहेषु वास्तुहोममिच्छन्ति । सोदकमिति । उदकुम्भं । सौषधं । तण्डुलादिभिरौषधीभिरधिष्ठितं । एवं विधमावसथं प्रतिपद्यते । प्रविशति ॥

रोहिण्या मूलेन वा यद्वा पुण्योक्तमपरेणाग्निमानडुहे रोहिते चर्मण्युपविश्यापि वा दर्भेष्वेव जयप्रभृतिभिर्हुत्वाग्निरैतु प्रथम इति च । अग्निरैतु प्रथमो देवतानां सो ऽस्याः प्रजां नयतु सर्वमायुः । तदयं राजा वरुणो ऽनुमन्यतां यथेयं स्त्री पौत्रमघं निरुन्ध्यात्स्वाहा[4] ॥ अग्निरिमां त्रायतां गार्हपत्यः सो ऽस्याः प्रजां मुञ्चतु मृत्युपाशात् । अरिक्तोपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियं स्वाहा ॥ मा ते गृहे निशि घोर उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । जीवपुत्रा पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा ॥ मा ते कुमारः स्तनधः प्रमायि

---

1. See XII. 1. 2. Here follow the four verses अमीवहा etc. with their Bhāṣya. 3. This refers perhaps to XLVII. 1-2. 4. न रोधत् Br., न रोधात् the Bombay, Stein, Berlin ṭeakas. न रोन्ध्यात the Parisian ṭeaka.

मा त्वं विकेश्युर आवधिष्ठाः । स्तनं[1] धयन्तं[1] सविताभिरक्षत्वा वाससः परिधानाद्बृहस्पतिर्विश्वे देवा अभिरक्षन्तु नित्यं स्वाहा ॥ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि यास्यां भृशा तनूस्तामस्या नाशय स्वाहा ॥ वायो प्रायश्चित्ते ॥ सूर्य प्रायश्चित्ते ॥ चन्द्र प्रायश्चित्ते ॥ विष्णो प्रायश्चित्ते ॥ विष्णो प्रायश्चित्ते ॥ चन्द्र प्रायश्चित्ते ॥ सूर्य प्रायश्चित्ते ॥ वायो प्रायश्चित्ते ॥ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि यास्यां भृशा तनूस्तामस्या नाशय स्वाहा[2] ॥ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषमिति[3] ॥ ४ ॥

दे० । रोहिण्या मूलेन वा नक्षत्रेण । रोहिण्या मूलेन वा युक्ते चन्द्रमसीति ज्ञेयं । यद्वा पुण्योक्ते । ज्योतिःशास्त्रे पुण्यरूपं श्रेयस्करं यद्दिनमुक्तं तत्र वा । अपरेणाग्निं प्रकृतत्वादावसथ्यं । अनडुह इदमानडुहं वार्षभं । तत्र रोहिते चर्मण्युपवेश्य वधूं वरः स्वयं चोपविश्य । केवलेष्वेव वा दर्भेषु वधूमुपवेश्य स्वयं चोपविश्य । जयहोमप्रभृतिकमाज्यभागान्तमाज्यसाधनत्वाद्[4] आज्यधर्मयुक्तमुपसमाधानादिपूर्वकं[5] हुत्वा । अग्निरैतु प्रथम इत्यादिभिश्च कर्मान्तराणि कुर्यात् । कानि तानि । पाकयज्ञानर्थत्वात् । अग्निरैतु प्रथम इति वैश्वदेव्यश्चतस्त्रस्त्रिष्टुभः । एताभिश्चतसृभिर्ऋग्भिश्चतस्र आहुतयो दातव्या वरेण स्वयं । एवमुत्तरा अप्यग्ने

---

1. Thus Br., the Berlin, and the Parisian. Ṭīkās: स्तनन्धयं ते the Mss. of Devapāla and his Bhāṣya. 2. Thus runs the text according to Br.; of the Mss. of Devapāla A gives also only the first of the prāyaścittimantras complete, and abbreviates all the others; DCT give the first five complete and abbreviate the last five. 3. Devapāla combines (wrongly, Cp. Ād. whom he cites) the last verse with the following sūtra. 4. See the opening words of the next sūtra. 5. ०मुपसाधनादि० ACT.

प्रायश्चित्त इत्यादिभिर्यजुभिरन्या दशाज्याहुतयः क्रमापक्रमाभ्यां । ...ष्णो प्रायश्चित्ते । चन्द्र प्रायश्चित्ते । सूर्य प्रायश्चित्ते । वायो प्राय श्चित्ते । अग्ने प्रायश्चित्ते । एतानि सानुषङ्गाणि पराणि पञ्च यजूंष्यपक्रमेण । तेन ऋग्भिश्चतसृभिर्यजुर्भिर्दशभिश्चतुर्दशाहुतयः संपन्नाः । त्र्यायुषमित्यनेन पञ्चदशेत्यादित्यदर्शनः[1] । स आज्यैकदेशे यो ऽनेन यजुषा वक्ष्यमाण आसेकस्तामेवाहुतिं मन्यते[2] । मन्त्रावृत्तिं[3] वा ।...स्वयंकर्तृत्वादासां क्रमेण पूर्वोक्ता आज्याहुतीर्हुत्वा त्र्यायुषमित्यादियजुषः[4] ॥

ब्र० । उद्धृतावोक्षिते ऽग्निमासाद्यापरेणाग्निमानडुहे रोहिते चर्मणि प्राङ्मूलेषु दर्भेषु वा वध्वा सहोपविश्य स्वयमिमं होममारभते । अत्राज्यं हविः । आज्यभागान्तं हुत्वाग्निरैतु प्रथम इत्याद्यैः पञ्चदश स्रुवेणाज्याहुतीर्जुहोति । त्र्यायुषमिति पञ्चदशी ॥

आ० । ततो रोहिण्या नक्षत्रेण मूलेन वा । यद्वा पुण्योक्तं ज्योतिःशास्त्रविद्भिस्तस्मिन्नेव[5] वक्ष्यमाणं कर्म कुर्यात् । कथं । अपरेणाग्निं । तमेवौपासनं । आनडुहे । अनडुह इदं । तस्मिन्नानडुहे आर्षभे रोहिते लोहिते चर्मण्युपवेश्य वधूं स्वयं चोपविश्य वरः । अपि वा दर्भेष्वेव न चर्मणि । जयप्रभृतिभिर्हुत्वा । यथोक्तमुपसमाधायेति नात्रोक्तं[6] यतः पूर्वमेवोपसमाहितो ऽग्निः । आज्यहोमत्वादाज्यसंस्कारो ऽत्रार्थाक्षिप्तः[7] । जयप्रभृतिशब्देनाज्यभागान्तं तन्त्रमुपलक्षयति । अग्निरैतु प्रथम इति चतसृभिर्ऋग्भिरग्ने प्रायश्चित्त इति क्रमोत्क्रमैर्दशभिर्यजुर्भिः साङ्गैस्त्र्यायुषमिति चैताः पञ्चदशाहुतीः स्रुवेण हुत्वा ॥

आज्यस्यैकदेशे दध्यासिच्य दधिक्राव्ण इति त्रिर्दधि भक्षयित्वा

---

1. See Âd. on this sûtra. 2. The sûtra, by me numbered 4, is given by Devapāla in three parts, the last of which begins with त्र्यायुषम् etc. and ends with sûtra 5. 3. Thus A: मन्त्रवृत्तिं the other Mss. 4. Read: °यजुषा ? 5. Emended; °स्तस्मिन्नवनि the Ms. 6. See *e.g.* XXXI. 2. 7. Thus the Ms.

माणवकायोत्सङ्ग इडामग्न इति फलानि प्रददाति ।५।२४।(३।४)

दे० । पृथक्पात्रोद्धृते घृते घृतैकदेशे दध्यासिच्य दधिक्राव्ण इत्यनया त्रीन्वारान्दधि भक्षयित्वा वरो माणवकाय वध्वा उत्सङ्गे निहिताय फलानि प्रददातीडामग्न इति मन्त्रेण ॥

ब्रा० । तत आज्यस्य किञ्चिन्मात्रं पात्रान्तरे कृत्वा तस्मिन्दध्यासिच्य तदाज्यमिश्रितमात्मना दधिक्राव्ण इति त्रिर्दधि प्राश्याचम्य । ...माणवकाय वध्वा उत्सङ्गे स्थिताय फलानि प्रददाति ।... ततो वैश्वदेव्याग्नेय्या वा प्रधानम्[1] । ऋतुतिथियागादितन्त्रसमाप्तिः । इति प्रायश्चित्तहोमः ॥

आ० । तत आज्यस्यैकदेशे आज्यं पात्रान्तरे कृत्वा तत्र दध्यासिच्य । तद्दधि दधिक्राव्ण इति त्रिर्भक्षयित्वानन्तरं माणवकायोत्सङ्गे स्थिताय वध्वा इडामग्न इति फलानि प्रददाति । एवं होमस्य कर्ता दधिभक्षयित्वा । स्यान्नः सूनुरिति[2] वध्वा उत्सङ्गे लिङ्गात् । आचमनानाम्नात्[3] । केचिद्देवता[4] अप्रज्ञायमाना[4] आग्नेय्या यजेदिति[1] चतुर्गृहीतेन यजन्ति । केचिद्देवता एव ताः प्रधानत्वान्नेच्छन्ति[5] । तत ऋतुतिथ्यादिसमापनम् ॥

---

तूष्णीमुपचरितं स्थालीपाकं श्रपयित्वा तस्याग्निमिष्ट्वा प्रजापतिं च शेषं प्राश्नीतः । अन्नमेव विवननमन्नं संवननं स्मृतम् । अन्नं पशूनां प्राणो ऽन्नं ज्येष्ठं भिषक् स्मृतम् ॥ अन्नमयेन मणिना प्राणसूत्रेण पृश्निना । सिनोमि सत्यग्रन्थिना हृदयं च मनश्च ते ॥ सह वाचा मनो अस्तु सह चित्तं सह व्रतम् । चक्रमिवानडुहः पदं मामेवान्वेतु ते मनः ॥ मां चैव पश्य सूर्यं च मा चान्येषु मनः कृथाः । चाक्रवाकं संवननं मम चामुष्याश्च भूयादिति ॥

१ ॥ २६ ॥ ( ३ । ५ )

---

1. See LXXIII. 3. 2. Kāth. XVI. 11 : 233.8. 3. R. आचमनमाम्नानात् ? 4. ०वताप्रज्ञा० the Ms. 5. ? ताः प्रधानत्वोनच्छान्ति the Ms.

दे०। तूष्णीमेव यत्रोपचारो निर्वापादिस्तं चरुं स्वरससिद्धत्वादुदकेऽश्रपयित्वा। तस्यांशेनाग्निं प्रजापतिं चेष्ट्वानाम्नैव तूष्णींग्रहणात्। हुतशेषं प्राश्नीतः वधूवरावेकत्र पात्रे सह। गृह्यान्तरेषु हि समशनमिति संज्ञा। सहाशनं समशनं प्रसिद्धं मन्त्रलिङ्गाच्च। तथैव[1] च[1] अत ऊर्ध्वं गृह्यान्तरेषु[2] ज्ञातिषु भोजनं प्रसिद्धं संवननमिति मन्त्रलिङ्गात्। अन्ये त्वत्रापि चैकपात्रे सहभोजनमिच्छन्ति। यथा हि यजमानपञ्चमा इडां प्राश्नन्ति। सपत्नीका भुञ्जत इत्यतः[3]। पञ्चसंख्या सह श्रवणेऽपीडाया गृहमेधीययोः पृथगेवाशनं तद्वदिहापि भवितव्यं। पाकयज्ञप्रतिषेधार्थं पुनस्तूष्णीमुपचरितग्रहणं। उक्तं ह्येतत्। तेष्वावृदुपचारस्तूष्णीमिति[4]। भक्षणं त्वन्नमेव विवननमित्यादिभिश्चतसृभिरनुष्टुब्भिः॥

ब्र०। तूष्णीं निरुप्तं चरुं श्रपयित्वा। इदं समशनं नात्र पाकयज्ञतन्त्रं। परिसमूह्य पर्युक्ष्य चातुष्कोष्ठैः स्तरैः परिस्तीर्य। चरुं शृतमभिघार्योदगुद्वास्य। अग्नये स्वाहा प्रजापतये स्वाहेति हस्तेनाहुतिद्वयं हुत्वा मेक्षणेन वा। अवशेषमन्नमेवेति चतसृभिरभिमन्त्र्य शालिचूर्णमण्डले सौवर्णं राजतं वा पात्रं प्रतिष्ठाप्य तस्मिन्दधिमिश्रितं प्राश्नीतः। मन्त्रो वरस्यैव न वध्वाः। मम चामुष्याश्च भूयादित्यत्र वध्वाः षष्ठ्यन्तं नाम ग्राह्यं।...भुक्त्वोच्छिष्टं वध्वै प्रदद्यादिति गोभिलः[5]। इति समशनम्[6]॥

आ०। तूष्णीमुपचरितं तेष्वावृदुपचारस्तूष्णीमित्यस्य चास्य च को विशेषः। इह तूष्णींग्रहणं पाकयज्ञतन्त्रविधानार्थं। तस्या-

---

1. तच्चैव CT. 2. गृहान्त० the Mss. 3. These are probably quotations from the Yajnasūtra, for the first cp. Āp. rs. III. 2.11. 4. See XIII. 8. 5. See Gobh. grhs. II. 3.22. 6. Immediately after this word Br. continues: समानो मन्त्रः समितिः समानी समानं सहः सह चित्तवाचां (sic) । समानो (sic) मन्त्रमभिमन्त्रये वः समानेन हविषान्नं जुहोमि (Cp. Rs. X. 191.3)। इत्यनेन मन्त्रेणान्नं भुञ्जते। संवत्सरं (etc., XXX. 1). I find no trace in the other texts of this statement. It seems not to belong to our text.

अस्य[1] मेक्षणेनैवाग्निं प्रजापतिं चेष्ट्वा शेषं प्राश्नीतः दम्पती। एकस्मिन्पात्रे समशनमिति गृह्यान्तरेषु संज्ञा। अन्नमेव विवनन-मिति चतसृभिर्ऋग्भिः प्राशनं । मम चामुष्याश्च भूयादिति वध्वा वरो नाम गृह्णाति। वरस्यैव मन्त्रो न स्त्रियः। लिङ्गात्। सहभोजनं समशनलक्षणं गृह्यान्तरेषु चात ऊर्ध्वं सहभोजन-प्रतिषेधो दृश्यते ॥

---

संवत्सरं ब्रह्मचर्यं चरतो द्वादश रात्रीः षट् तिस्र एकां वा ॥१॥

दे० । ब्रह्मचर्यममैथुनं चरित्वा गर्भाधानं कार्यमिति । तत्पौर्णमा-स्याममावस्यायां न मैथुनं कर्तव्यमिति च संकल्पः । एकैक-कर्तृको[2] ऽत्र[2] व्रतं । संवत्सरं प्रथमः कल्पः । यौवनमदस्याति-शयात्तु अनुकल्पेनापत्कालो विकल्पः । द्वादश रात्रीः षट् तिस्र एकां वेति ॥

आ०[3] । संवत्सरं ब्रह्मचर्यं चरतो । विकल्पो वयोविशेषेणोत्सुक्या-पेक्षया[4] ॥

तौ[5] संविशतः ॥ २ ॥

दे० । तौ वधूवरावेकस्मिन्शयने भवतः । विवाहोत्तरकाले प्रथम-शयने । आधाने च समानमेतद्विधानमनन्तरमन्त्रचतुष्टयजप-सहितम् ॥

आ० । तौ संविशतः । सहशयितौ भवतः ॥

अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् । इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम ॥ अपश्यं

---

1. तस्यायस्य the Ms.  2. Thus (only एकैकंक० CT) the Mss.; probably we should read: संकल्प एकैककर्तृकः। अत्र व्रतं। 3. The commentary in Br. is replaced by a mass of Kārikā verses and quotations from Purāṇas.  4. ०विशेषेणोत्सु० the Ms.  5. Thus the Mss. of Devapāla and Ad. Br. (both the Mss.), and *five* ṭeakas read (combined with the foregoing): तिस्र एकां वातः संविशतः, pointing to a (apparently better) reading: अतः संविशतः।

त्वा मनसा दीध्यानां[1] स्वायां तनू ऋद्व्ये नाधमानाम् । उप मामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे ॥ प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिः सहसा[2] न[2] इन्द्रः । विश्वैर्देवैर्यज्ञियैः संविदानः पुंसां बहूनां मातरः स्याम ॥ अहं गर्भमादधाम्योषधीष्वहं[3] विश्वेषु भुवनेष्वन्तः । अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अवरीषु[4] पुत्रानिति स्त्र्यादिव्यत्यासं जपतः ॥ ३ ॥

दे० । स्त्र्यादिव्यत्यासं कृत्वा । प्रथमां स्त्री । द्वितीयां वरः । तृतीयां स्त्री । चतुर्थीं वरः । व्यत्यासो विपर्ययः । स्त्री आदिर्यत्र व्यत्यासे स स्त्र्यादिव्यत्यासः[5] ॥

आ० । अपश्यं त्वेति चतस्रः स्त्र्यादिव्यत्यासं जपतः । प्रथमां स्त्री द्वितीयां वरः ॥

एवमेवर्तौ प्रजाकामौ संविशतः ॥ ४ ॥

दे० । गतार्थम् ॥

ब्र० । एवमेवर्तौ । तत्र त्विदमधिकम् ॥

---

1. Thus all, but the Mantrabhāṣya starts from a reading देदीप्यमानां । 2. सहमान Br., the Mss. of Devapāla, and the Bombay ṛcaka; but the Bhāṣya presupposes सहसा न (सहसा being explained as बलेन), this is also the reading of the Parisian, Stein and Berlin ṛcakas, whilst the Tuebingen ṛcaka, which gives these four verses with their accents, marks the middle syllable of सहसा with the udātta. The correct reading is: सहसान, which is a known attribute of Indra. 3. Instead of आदधामि (thus all the Mss. and three ṛcakas) the Matrabhāṣya gives and explains आदधाम् (as the Rs.). 4. अपरीषु (as Ṛksaṃhitā) Br., the Stein and Bombay ṛcakas, अपरेषु the Berlin ṛcaka. अवरीषु is explained in the Mantrabhāṣya as जठराभ्यन्तरवर्तिनीषु गर्भग्रहणीषु । 5. This explanation is false. ०व्यत्यासं is not a noun, but a gerund (absolutive).

आ० । एवमेतत्प्रथमं संवेशनं । एवमेवानेनैव विधिना ऋतौ तु काले प्रजाकाले संविशतः । संभवतः । तत्र विशेषः ॥

करदिति भसदमभिमृशति ॥ ५ ॥

दे० । करदिति यजुषा भसदं स्त्रीचिह्नं वरो ऽभिमृशति ॥

ब्र० । करदिति स्त्रीप्रजननमभिमृशति ॥

आ० । मेढ्श्चैव भसश्चैव समानार्थौ प्रकीर्तितौ । भसदं स्त्रीप्रजननमभिमृशति पुरुषः ॥

भसदित्युपरिजननम् ॥ ६ ॥

दे० । पुंचिह्नं भसदिति यजुषाभिमृशति ॥

ब्र० । भसदिति तदुपरिनिहितं शेपम् ॥

आ० । भसदित्यनेनोपरिजननं पुंप्रजननमभिमृशति ॥

बृहदिति जातम् ॥ ७ ॥

दे० । बृहदित्यनेन जातं वीर्यं प्रक्षिपति ॥

ब्र० । बृहदिति सिच्यमानं रेतः ॥

आ० । बृहदिति जातं रेतः सिञ्चतीत्यर्थः ॥

इति गर्भाधानम्[1] ॥ ८ ॥ ३० ॥ (३ । ६)

आ० । अयमसौ निषेकाख्यः संस्कारो गर्भाधानमुच्यते ॥

---

तृतीये गर्भमासे सीमन्तं कारयते ॥ १ ॥

दे० । गर्भाधानादारभ्य यस्तृतीयो मासस्तत्र शुक्लपक्षस्य पर्वणि वा[2] मुख्ये दिने सीमन्तोन्नयनसंज्ञया यौगिक्या[3] प्रसिद्धं यत्संस्कारकर्म तत्कारयते । स्वयं कुर्यादिति णिचः प्रयोगाद्दर्शितं । एतच्च पात्रस्यैव केचित्संस्कारमिच्छन्त्याधानसंस्कारादेव । गर्भस्योपकारो भविष्यति गोलकसंस्कारेणैव चक्षुष इति वदन्तः । तथा च स्मृतिः[4] ॥

---

1. Not given by Br.; A has instead of this इति बीजवापनम्. 2. om. A. 3. योगित्या A. 4. The Hārīta-dharmaśāstra, according to the Saṃskāraratnamālā, Ānandāśrama series, 39, page 822.

सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेदिति॥

अन्ये तु गर्भस्यैव संस्कारं मन्यन्ते। तत्रैव तृतीये गर्भमासे इत्यस्योपपत्तेः। पात्रमात्रसंस्कारत्वे हि किं गर्भमासस्यापेक्षया[1]। यद्वा कदाचित्सीमन्तो विधीयते। कार्यः सीमन्त इति स्मृतेरपि[2]॥

गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपसृज्यत[3] इति॥

अपरे तूभयसंस्कारमाहुः। तत्र क्षेत्रसंस्कार एवानुमततमप्रायो वेदार्थविदां सकृदनुष्ठानस्य प्रसिद्धत्वाद्वा तुल्येन[4]॥

अ०। तृतीये गर्भमासे सीमन्तकर्मेदं स्वयं कर्तव्यम्॥

आ०। गृही[illegible]र्भया तृतीये मासि सीमन्तकारणं। कारयत इति णिजुपदेशश्च स्वयं। वैवाहन एवाग्नौ सीमन्तोन्नयनमिति। यौगिकमेतत्कर्मनाम। प्रथमगर्भ एवेति केचित्। मातुः संस्कारात्पुत्रस्यसंस्कार इति स्मृतिदर्शनात्[2]। तथा गार्भैर्होमैरिति मनुः। अन्यत्राभ्युत्क्रमो दृश्यते। पूर्वं पुंसवनं पश्चात्सीमन्तोन्नयनं नम्यमात्रं[5]। इह त्वन्यदेव देवतायागलक्षणम्॥

शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चादग्नेर्दर्भेषु प्राङासीनायाः सर्वान्केशान्संप्रमुच्य प्रसाधयते[6] यं सीमन्तमिति[7]। यं सीमन्तं कङ्कतस्ते चकार यद्वा क्षुरः परिववर्ज[8] वपंस्ते। स्त्रीषु रूपमश्विनौ तं निधत्तं[9] पौंस्येनेमं

1. Thus A; ०मासाद्यपे० D, ०मासाप्यपे० C. 2. Manu II. 27. 3. प्रतिहन्यते D. The printed text of Manu: अपमृज्यते 4. No interpunction in the Mss.; on this passage follows immediately the passage given from दे० under sūtra 2. 5. Thus the Ms.! 6. ०सादयते ACT, Br. (text) the Stein ṭeaka and Ād., ०साधयते D (text) and Mantrabhāṣya and the comm. of Br. 7. It is not improbable that here ended the sūtra proper. 8. Thus D (second hand in text) and Mantrabhāṣya (periphr.: वर्जितवान्); परिवर्जे, परिवर्ज्यै, परिवज्य the others. 9. Thus all, but the Mantrabhāṣya विधत्त.

संसृजतं[1] वीर्येण ॥ इन्द्राणी चक्रे कङ्कतं स सीमन्तं विसर्पतु[2]। पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥ पुनः पत्नीमग्निर-दांदायुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतमिति ॥ २ ॥

दे० । यथोक्तमुपसमाधानं कृत्वा जयप्रभृतिभिराज्यभागान्तैर्हुत्वा प्रकृतस्यावसथ्यस्याग्नेः पश्चादग्नेर्दर्भेषु प्राङ्मुख्या उपविष्टायाः सर्वान्केशान्सम्यक् प्रकर्षेण मुक्तान्कृत्वा कङ्कतेन दारुमयोभयात्मकदिक्कभूरितरदन्तयोगिना वालस्पष्टीकरणेन प्रसाधयते[3]। स्पष्टीकरोति । वक्ष्यमाणाभिस्तिसृभिर्ऋग्भिः ।...इतिशब्दः करणप्रधानः । अनेन मन्त्रत्रयेण केशान्प्रसाधयत[4] इति पूर्वेण संबन्धः ॥

ब्र० । अत्राज्यभागान्ते ऽपरेणाग्निं दर्भेषु प्राङ्मुखीमुपवेश्य यं सीमन्तमिति तिस्र उक्त्वा कङ्कतेन संप्रमुक्तान्केशान्प्रसाधयते ॥

आ० । शुक्लपक्षस्येति व्याख्यातं[5] । आज्यभागान्तं यावत्पश्चादग्नेर्दर्भेषु प्राङ्मुख्या उपविष्टायाः सर्वान्केशान्संप्रमुच्य प्रसादयते । संस्करोति कङ्कतेन । यं सीमन्तमिति तिसृभिर्ऋग्भिः ॥

त्रिःश्येतया[6] शलल्या शमीशाखया सपलाशया वा[7] सीमन्तं विचिनोति यास्ते राक इति ॥ ३ ॥

---

1. Thus AD, Br., and three of the ṛeakas: संसृज्यतं CT and first hand of D; ०ज्यतां the Lahore Ms. of Br. and the Parisian ṛeaka. 2. Thus AT, the Mantrabhāṣya ( लोडर्थे लट्, r. लेट् ? ) and the Parisian ṛeaka: जीवातु the Bombay Ms. of Br., जीवतु the Lahore Ms. and two ṛeakas.—In the Tuebingen ṛeaka the last two mantras are accented. 3. Thus DA. ०साधते CT and first hand of D. 4. Here all thus. 5. See Ād. on XV. 2. 6. Before त्रिः all the Mss. of Devapāla have त्रीन्वारान् . 7. A. Br., and four ṛeakas insert स after वा.–We would expect वा before instead of after सपलाशया, but cp. XXV. 2.

दे० । त्रीन्वारान्[1] त्रिः श्येतया शुक्लया शलल्या । शललिः श्वावित् सेधा तस्याः शलाका शललिरुपचारात् । तया शमीशाखया सपलाशया सपत्रया । सीमन्तं विनिनोति । यास्ते राक इति त्रिष्टुभा । शलल्या ताम्रशलाकया श्येतया लोहितयेति यद्याचक्षते तन्न दृष्टानुरूपम् ॥

ब्र० । यास्ते राक इति शलल्या शमीशाखया सपर्णया वा[2] ललाटमध्यादारभ्य कृकाटिकां यावद्द्विधा केशान्करोति ॥

आ० । ततस्त्रिःश्येतया त्रिषु स्थानेषु श्येतया शुक्लया शलल्या श्वाविच्छलाकया शमीशाखया सपर्णया तथा पाटितया वा सीमन्तं विचिनोति । केशान्विशुध्यति । यास्त इत्यनया जगत्या ॥

अथास्याः पृथक्केशपक्षौ संनह्यति नीललोहितेन सूत्रेण नीललोहितं भवति कृत्यासक्तिर्व्यज्यते । एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यतामिति[3] ॥ ४ ॥

दे० । अनन्तरमस्या गर्भिण्याः कङ्कतसमीकृतानां शलल्या विभज्यमानाभिरेखापरिच्छेदेन कृतसीमन्तभागानां केशानां कृतौ पृथग्यौ पक्षौ पार्श्वद्वयगतौ संनह्यति नीललोहितसूत्रेण नीललोहितमित्यादिकयानुष्टुभा ॥

ब्र० । नीललोहितं भवतीति नीलरक्तसूत्रेण मन्त्रावृत्त्यां पृथक्पृथक् केशार्धौ संनह्यति । प्रथमं दक्षिणम् ॥

आ० ।...संनह्यति । आ अवटदेशं[4] कृकाटिकां वा द्विभक्ताः केशाः । तेषां द्वौ पक्षौ विभक्तौ पृथक्पृथक् संनह्यति नीललोहितेन प्रतिसरेण ॥

यो गुरुस्तमर्हयेत् ॥ ५ ॥

---

1. Cp. Note 6 on the previous page. Devapāla apparently takes त्रिः श्ये० as two words! 2. The Lahore Ms. of Br. om. वा. 3. The Mantra is accented in the Tuebingen ṛcaka. 4. Thus the Ms. Ho v is to be read ?

दे० । यो गुरुः सीमन्तोन्नयनस्य कर्ता ब्राह्मणस्तमर्हयेत् । यथाशक्ति मधुपर्कदानादिना पूजयेत् ॥

ब्र० । तत आज्येनाग्नेय्या वैश्वदेव्या वा प्रधानं[1] । ऋतुतिथ्यादियागादितन्त्रं समाप्य यथाश्रद्धं गुरुमर्हयेत् ॥

आ० । ततो देवताप्रज्ञायमानेति हुत्वा आग्नेय्या यजेद्वैश्वदेव्या वेति चतुर्गृहीतेन प्रधानं ।-एवंविधो ऽस्य विषयो यतः तत्र तन्त्रं कृष्यते । आवापस्थाने न किञ्चित्प्रधानं द्रव्यं देवता वा तत्राप्रज्ञायमाना देवता । यो ऽत्र कर्मणि गुरुर्होमकर्ता मातुलादिस्तमर्हयेद्दक्षिणादानेन । योनिसंबद्धं कंचिदेतत्कर्म कारयेन्न त्वृत्विङ्मात्रम् ॥

एतदेव कुमारीणां सटोद्धरणमत्रैवानुलेपनम्[2] ॥६॥३१॥ (३ । ७)

दे० । अत्रैव काले वाग्दत्तानां कुमारीणां सटोद्धरणं कर्म कर्तव्यं केशरजनाविशेषात्मकमनुलेपनं सर्वौषधिकुङ्कुमप्रभृतिभिरनुलेपनं शोभाविशेषाधायि सीमन्तस्य । अत्राग्नेय्या ये के च ज्मेत्येतया चतुर्गृहीतेन प्रधानयागः सीमन्तोन्नयनं परिपूर्णम् ॥

ब्र० । अस्मिन्नेव मास्यनवलोभनं[3] गर्भरक्षार्थमन्यगृह्योक्तं[4] कर्तव्यं । यास्ते राक इति । भुवो यज्ञस्येत्याग्नेय्या[5] ये के च ज्मेति वैश्वदेव्या[5] वा ॥

आ० । एतदेव कुमारीणां सटोद्धरणं वेणीगूहनं मन्त्रवत्कर्तव्यं । अन्यत्तूष्णीं । विशेषस्त्वत्रैवानवलोभनं[3] । अस्मिन्नेव काले सीमन्तस्य विलोभनं मोहनमनुपलब्धिं कुर्यात् ॥

---

1. See LXXIII. 3. 2. Here Devapāla differs materially from Br. and Ād., who read (as do also the Berlin, Stein, Parisian and Tuebingen Ṭcakas) :अत्रैवानवलोभनम्, see Br. and Ād. on this sūtra. The Parisian ṭcaka has : अत्रैवानवलोभनम् । कुङ्कुमकर्पूरादिना रचना कार्या. 3. Cp. note 2. 4. See *e.g.* Āśv. gṛhs. I. 13.1. 5. These are the Mantras for the pradhānahoma, cp. Br. on sūtra 5.

अथ पुंसवनम् ॥ १ ॥

दे० । अथेत्यानन्तर्ये । सीमन्तोन्नयनानन्तरं पुंसवनसंज्ञकं गर्भसंस्कारकर्म कर्तव्यमित्यादिना ॥

ब्र० । अनेकदेवतायागे एक एव चरुर्भवेत् ।
ऋते पुंसवनाद्गृह्ये लौगाक्षिवचनं यथा[1] ॥

आ० । अथ शब्दमानन्तर्यार्थं करोति । सीमन्तोन्नयनादनन्तरं पुंसवनं । पुंसवनमिति संस्कारनाम ॥

भूयिष्ठगतेषु गर्भमासेषु त्रीन्स्थालीपाकाञ्छ्रपयेदाग्नेयमैन्द्रं वैष्णवं च ॥ २ ॥

दे० । दशमे मासि सूनव इति श्रुतेर्दर्शनाच्च दश गर्भमासाः । तत्र पञ्चार्धभागः षड् भूयांसः सप्त भूयिष्ठाः[2] । भूयिष्ठः सप्तमो गतो येषु तेषु गर्भमासेषु सत्सु । अष्टमे मासि शिष्टाचारात् ॥

ब्र० । पुंसवनमन्यशाखासु तृतीये गर्भमासे पुरा गर्भस्पन्दनादुक्तं[3] । लौगाक्षिस्तु भूयिष्ठगतेष्वाह । यदा पुंसा नक्षत्रेण चन्द्रमा युज्येत तदा पुंसवनमिति गृह्यान्तरं[4] । सप्तमे ऽष्टमे वा पुंसवनमिति सदाचारः । अग्नये जुष्टमिन्द्राय जुष्टं विष्णवे जुष्टमिति स्थालीपाकानामत्र निर्वापः ॥

आ० । कदा । भूयिष्ठगतेषु गर्भमासेषु । गर्भमासास्तावद्दश[5]... । भूयिष्ठगतो येषां ते भूयिष्ठगताः । ते॰षणामितिषु[6] त्रीन्स्थालीपाकाञ्छ्रपयेत् । आग्नेयमैन्द्रं वैष्णवं च देवताविधानम् ॥

तेषां[7] यथादेवतं[8] जुहोति । अग्निस्तुविश्रवस्तममिन्द्र क्षत्रं प्र

---

1. With this śloka, taken from a Kārikā, Br. introduces this chapter. 2. Thus CT; ०ष्ठः AD. 3. See Śāṅkh. gṛhs. I. 20.1 and Yājn. I. 11. 4. See *e. g.* Āśv. gṛhs. I. 14. 2. 5. The following words are hopelessly corrupt. 6. Sic Ms.! 7. Not found in the Mss. of Devapāla, but cp. his Bhāṣya on this sūtra. 8. ०दैवतं D, Br., Ād., the Stein ṛcaka.

तद्विष्णुः । पुमानित्यभिजुहोति । पुमानग्निः पुमानिन्द्रः पुमा-न्विष्णुरजायत पुमांसं जनयेत्पुत्रं दशमे मासि सूतवे । येन जातेन विभुना जीवेम शरदः शतं पश्येम शरदः शतमिति[1] तं नो मंहस्व शतिनं सहस्रिणं गोसनिमश्वसनिं वीरं स्वाहा ॥

३ ॥ ३२ ॥ ( ३ । ८ )

दे० । तेषां मध्यादन्यतममन्यतमं गृहीत्वा यथादेवतं[2] जुहोति । यत्रैकः स्थालीपाकस्तत्र देवताभेदे ऽपि एककर्म[3] द्रव्यदेवतासंयोगस्यै-क्यात् । इह तूभयभेदात्संयोगभेदेन कर्मबहुलत्वं । अग्निस्तु-विश्रवस्तममित्यादिनाग्निं जुहोति । इन्द्र त्वत्रमित्यादिनेन्द्रं । प्र तद्विष्णुरित्यादिना विष्णुं । पुमानित्यादिनैकैकस्माद्भागमुद्धृत्य स्विष्टकृतं जुहोति ।...पुमानग्निः......तं नो मंहस्व......आभ्यां ऋग्यजुर्भ्यां स्विष्टकृत् क्रियते ॥

ब्र० आज्यभागान्तं हुत्वा । अग्निस्तु० इति स्थालीपाकस्य जुहोति । पुमानग्निरिति स्रुवेणाज्यस्याभिहोमः । इन्द्र...इति स्थालीपा-कस्य । पुमानिन्द्र इत्यभिहोमः । प्र तद्विष्णुरिति स्थालीपाकस्य । पुमान्विष्णुरित्यभिहोमः । पुमांसं जनयेत्पुत्रमित्यनुषङ्गः । तत ऋतुतिथियागादि तुल्यं । समवदाय स्विष्टकृतम् ॥

आ० । देवताभेदादेव भेदे प्राप्ते त्रिगुणमन्यत्र....[4] भवतीति विज्ञा-पयति । तथा च दर्शितं स्थालीपाकस्य जुहोति । यत्र पुनर्द्रव्य-भेदस्तत्र हविर्द्रव्यभेदो ऽपि श्रावण्यादौ । तेषां यथादैवतं जुहोति । यथा दैवतं प्राप्तं । सदुच्यते[5] । उपहोमार्थमग्निस्तु-विश्रवस्तमामिति[5] मन्त्रविधानं । पुमानित्यभिजुहोति । यथा-दैवतं विभज्य । पुमानग्निरजायत पुमांसं जनयेत्पुत्रं । पुमा-निन्द्रो अजायत पुमांसं जनयेत्पुत्रं । पुमान्विष्णुरजायतेति

---

1. इति is inserted by Br., by four Pcakas and of the Mss. of Devapāla by A. 2. °दै° D. 3. Read: एकं कर्म ? 4. Blank of eight or ten akṣaras. 5. I guess: तदुच्यते उपहोमार्थं । अ०.

ऋग्यजुर्भ्यामेकैकामाहुतिं। अभिहोमो हविषामुपरि न तु व्यवधानेन। त्रिः समवदाय स्विष्टकृतं जुहुयात् ॥

अथ सोष्यन्तीसवनम् ॥ १ ॥

दे०। अनन्तरं सोष्यन्तीसवनं नाम दृष्टार्थं कर्मोच्यते। यौगिकीयं[1] संज्ञा। सूयते ऽनेन सवनं। सुखप्रसवकं कर्म। सोष्यमाणाया आसन्नप्रसवायाः सवनं सोष्यन्तीसवनम् ॥

आ०। नायं संस्कार इत्यथशब्दार्थः। सोष्यन्त्याः सूयमानायाः सवनं[2]। सुखप्रसवायैतत्क्रियते ॥

विजनिष्यमाणाया अद्भिः पाणिं स्रवन्तं शिरस्याधाया[3] हृदयादभिमृशेद्यथायं वातः पवते यथा समुद्र एजति। एवं ते गर्भ एजतु सह जरायुणावपद्यतामिति ॥ २ ॥

दे०। भर्तात्र कर्ता। तदसंनिधावाप्तः कश्चिद्देवरादिः ॥

आ०। विजनिष्यमाणाया अद्भिरुदकेन पाणिं हस्तं स्रवन्तं कृत्वाथास्याः शिरस्याधाय यावद्धृदयदेशं स्रवता पाणिना यथायं वात इत्यनयाभिमृशेत् ॥

क्षिप्रमेव[4] प्रजायते ॥ ३ ॥ ३३ ॥ ( ३ । ८ )

दे०। तथा सति क्षिप्रमेव सुखेन प्रसूयत इति दृष्टार्थतामस्य कर्मण आह ॥

ब्र०[5]। सोष्यन्तीसवने त्रिकादिभिर्होमः। तव श्रिय इत्यादि येन रक्षसि दाशुष इत्यन्तम्[6] ॥

आ०। एवं कृते क्षिप्रं प्रजायत इति प्रयोजनवाचकम् ॥

पुत्रे जाते नाम धीयते ॥ १ ॥

---

1. ०केयं DCT. 2. सवेन the Ms. 3. Many of the Mss. read आदाय instead of आधाय. 4. Thus the Lahore Ms. of Br., the Stein reaka and of the Mss. of Devapāla DA; all the others क्षिप्रं ह्येव. 5. This is all the comment Br. gives on this kaṇḍikā. 6. Cp. LXXIII. 4--5.

दे० । पुत्रे जाते जातकर्म कृत्वा नाभिवर्धनादनन्तरं नाम धीयते । इदं[1] नाम करिष्यत इतिं केचिद्व्याकुर्वते । नामकरणं[2] ह्येकादश्यां नाम कुर्वीत पुण्ये वाहनीत्यशौचशुद्धौ स्मृतं । अन्ये त्वाहुः । जाते सत्येकादशीं[3] तदनन्तरं वा सुलग्नं नामकर्मणि नातिक्रामेदित्येवं परमेतदिति । वयं तु दूरे[4] वक्ष्यामः ॥

आ० । न दुहितरि होमः । नाम तु क्रियते । अमन्त्रकं मधुसर्पिषः प्राशनं । जाते जाते पुत्रे पुत्रे नाम तस्य धीयते स्थाप्यते चिन्त्यते वा ॥

घोषवदाद्यन्तरन्तस्थं चतुरक्षरम् ॥ २ ॥

दे० । नाम्न आदौ घोषवदक्षरं कर्तव्यं । मध्ये चान्तस्थसंज्ञकं । चत्वार्यक्षराणि यत्र तत् । अक्षराण्यचोत्रहलानामनवधारणात्[5] ॥

आ० । घोषवान्वर्ण आदिर्यस्य तद्घोषवदादि । वर्गतृतीयचतुर्थपञ्चमा यरलवाश्च घोषवन्तः । अन्तरन्तस्थं । अन्तर्मध्ये ऽन्तरस्थानां यरलवानामन्यतमो यस्य तदन्तरन्तस्थं । चतुरक्षरं । चत्वार्यक्षराणि यस्य । यथा देवदत्त इति ॥

यथोपपत्ति वा ॥ ३ ॥

दे० । यथा वा देवतालब्धत्वाद्यनुसारेण तदुपपद्यते तथा कर्तव्यम् ॥

आ० । अथवा यथोपपत्तिः । यथोपपद्यते । मासस्तु नक्षत्रदेवताकुलप्रबन्धादिनिमित्तेन[6] ॥

अग्निमत्रानीय तस्मिन्नाज्यभागान्तं हुत्वा सहिरण्यकांस्ये[7] संपातानवनयेद्धिरण्यगर्भः संवत्सरस्य प्रतिमां काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा प्रजापतये स्वाहा प्रजापते नहि त्वदन्य इति च[8] द्वाभ्याम् ॥ ४ ॥

---

1. Thus CT. इदं च A, इयं D. 2. नाभिक० ACT and first hand of D. 3. ०कादशी ATC. 4. वयं तु नत्वमदूरे A. 5. ०चोत्रहलामनव० D. 6. Read probably : मासर्तुनक्षत्र०. 7. ०कांस्ये the Mss. of Devapāla, Br., and the Berlin and Parisian ṭeakas. 8. च om. Br., the Parisian and Stein ṭeakas and from the Mss. of Devapāla A : cp. XXXVI. 1.

दे०। यत्र गृहे प्रसवस्तत्र लौकिकमग्निमाहृत्य तत्रैवाज्यभागान्तान्होमान् कृत्वा हिरण्ययुक्ते कांस्यपात्रे संपातान् हुतशेषबिन्दूनवनयेत् स्थापयेत्। हिरण्यवर्ण इत्येकाहुतिः। संवत्सरस्येति द्वितीया। काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा प्रजापतये स्वाहा इति चतस्रः। प्रजापते नहि त्वदिति च द्वाभ्यां द्वे। एवमष्टौ भवन्ति। प्रधानकर्मत्वाच्चतुर्गृहीतेनैव होम इत्याहुः॥

ब्र०। नाभ्यां छिन्नायां गेहाग्नेरग्निमुद्धृत्य सूतिकावसथ एवोद्धतावोक्षित आसादयेत्। तस्मिन्नाज्यभागान्तं हुत्वाष्टौ प्रधानाहुतीर्जुहुयात्।...एतासामष्टानामेकैकां हुत्वा सहिरण्यकांस्ये संपातानवनयेत्॥

आ०। अग्निमानीय यत्रैव गृहे जातः। लौकिकमाहृत्य तस्मिन्नाज्यभागान्तं हुत्वा सहिरण्यकंसपात्रे संपातान् हुतशेषान्बिन्दूनवनयेत्। स्थापयेत्। हिरण्यगर्भ इति वक्ष्यमाणैरष्टभिः। केचित्प्रधानत्वाच्चतुर्गृहीतेनैव जुह्वति। अत्र प्रजापते नहि त्वदिति सप्तमी विराट्। अमुष्येति[1] नामव्यतिषङ्गः पितृपुत्रयोः। जातस्य नाम प्रथमान्तमाद्यन्तयोर्मध्ये षष्ठ्यन्तं पितुर्द्विः। देवस्वामी विष्णुस्वामिनः पुत्रो विष्णुस्वामिनो देवस्वामी पुत्रः। वयं स्याम पतयो रयीणामिति॥

अग्नेरायुरसीति हिरण्येन मुखं मेध्यं कृत्वा पाणिना मुखमद्भिः संस्पृश्य प्रक्षाल्य स्तनावनुमन्त्रयते मधु वात[2] ऋतायत इति तिसृभिः प्रत्यृचमुभा उत्तमया ॥ ५ ॥

दे०। अग्नेरायुरसीत्यादिना मन्त्रेण हिरण्येन मुखं मेध्यं पवित्रं कृत्वा जलाविलेन हस्तेन मुखं स्पृष्ट्वा बालस्य मातुः स्तनावनुमन्त्रयते[3] प्रक्षाल्य बालस्य पिता। तदसंनिधौ पुरोहितः। एकैकयर्चैकै-

---

1. This refers to the Mantra Kāth. XV. 8: 216. 1-2. 2. Thus (not वाता, as Schrœder has it) runs the Verse of the Kāthaka. cp. XXIV. 11. 3. Only A स्तनानानु०.

कमन्ययोत्तमया तूभौ । तदपेक्षमेव बहुवचनं स्तनानिति[1] । मधुवात इति दक्षिणं । मधु नक्तमिति वामं । मधुमान्न इति द्वौ ॥

ब्र० । तेन हिरण्येन शिशोरग्नेरायुरसीत्यास्यं संयोज्य पाणिना मुखमद्भिः संस्पृशति । अग्नेरायुरसीत्यत्रामुष्मा आयुर्धेहीति कुमारस्य चतुर्थ्यन्तं नाम गृह्णाति । यथा । अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मै देवदत्तायुर्धेहीति । ततः सूतिकास्तनौ प्रक्षालितौ मधु वात इति तिसृभिः प्रत्यृचमनुमन्त्रयते । मधु वात इति दक्षिणं मधु नक्तमित्युत्तरं मधुमान्न इत्युभौ युगपत् ॥

हिरण्येन संपातान्संनिघृष्य मधु चेत्येके तन्मुखे कृत्वा प्रपाययत्यायुर्धय जरां धय सत्यं धय श्रियं धयोर्जं धय रायस्पोषं धय ब्रह्मवर्चसं धय ॥ ६ ॥

दे० । सुवर्णेन संपातान्संनिघृष्य बालकमुखे कृत्वा पाययति । एके पुनर्मन्यन्ते मधु च मधुयुक्तान्संपातान्संनिघृष्य पाययेदित्यर्थः । उत्सर्गेण पितृकर्मकत्वाज्जातकर्मप्रभृतीनां पिता ब्रूते । हे बालक आयुः धय पिब...॥

ब्र० । ततो हिरण्येन संपातान्संनिघृष्य...तद्धिरण्यं शिशोरास्ये कृत्वायुर्धयेति सप्तभिराज्यं स्तनौ च पाययेत् ॥

आ० ।...तद्धिरण्यं मुखे कृत्वा प्रपाययति । निघृष्टमधुसर्पिषी प्रपाययति सप्तभिर्मन्त्रैः ॥

जीव शरदः शतं पश्य शरदः शतमिति मूर्धनि निघ्राप्य स्वस्त्ययनं वाचयति[2] ॥ ७ ॥ ३४ ॥ ( ३ । १० )

---

1. But none of the Mss. of Devapāla. nor Br. nor Ād. read स्तनान् in the sūtra. 2. In the Parisian Ṭeaka, follows: सर्पिष्मदन्नं ब्राह्मणान्भोजयेत्, in the Mss. of Devapāla (see the Bhāṣya) the words: बोधश्च मेत्यनुवाकम्, thus also Ād. In Br. there is no trace of them. I am uncertain whether they belong to the sūtra text. cp. LIV. 20.

दे० । जीव...शतमिति मूर्धानं निघ्राप्य स्वस्त्ययनं वाचयति । बोधश्च मेत्यनुवाकं । स्वार्थे ऽपि णिच् वाचयतीति । शिष्टं स्पष्टम् ॥

आ० । जीव शरदः शतमिति मूर्धनि निघ्राणं । ततस्तन्त्रं समाप्य स्वस्त्ययनं वाचयति । बोधश्च मेत्यनुवाकं । पितुः स्वयं कर्तृ-कार्ण्येतानि प्राक् चूडाकरणात् । वाचयतीति स्वार्थे णिच् । यदापरः कर्ता तदा पितुरेव वाचनम् ॥

---

सर्षपान्फलीकरणमिश्रान्दर्व्या जुहोति शण्डो मर्कोपवीतस्तौण्डुलेयः[1] उलूखलश्चपलो नश्यतामितः स्वाहा ॥ अनालिखन्नवलिखन् किंवदन्त[2] उलूखलश्चपलो नश्यतामितः स्वाहा ॥ हर्यक्षणः कुम्भिः शक्रिर्हन्ता[3] चुपणीमुखश्चपलो[4] नश्यतामितः स्वाहा ॥ केशिनी श्वलोमिनी कवकेशावकाशिन्यपेतो[5] नश्यतामितः स्वाहेति ॥ १ ॥

दे० ।...जुहोति । बालकसूतिकयोरित्यर्थः । अशौचकाले अमी होमाः । अतश्च दृष्टार्था एव । फलीकरणं कम्बुकाः । तैर्मिश्रितान्सर्षपान् सञ्जूरिकामिश्रीकृत्य[6] दर्व्या दशाहं यावत्सायंप्रातर्जुहुयात् शण्ड इत्यादिचतुर्भिर्मन्त्रैः ॥

ब्र० । परिसमूह्य पर्युक्ष्य परिस्तीर्य सर्षपान्फलीकरणमिश्रान्दर्व्या दर्भैः संमृष्टया सायंप्रातः शण्डो मर्क इत्यादिभिश्चतुर्भिरशुद्धे जुहुयात् ॥

---

1. The variants are : तौण्डलेयः, तोण्डुलेयः, तोडलेयः, तण्डुलेयः, ताण्डुलेयः. 2. ०दन्तः D. ०दन्तं Br. 3. हर्ता A and the Lahore Ms. of Br. 4. चुपुणी० the Stein, Berlin and Tuebingen Ṭeakas. 5. कावकेशावकाशिनी DCT. the Stein and Berlin Ṭeakas; कचाकौचापकाशिनी A; कौवकेशान्तकामिन्य० Br. (only the Bombay Ms.): instead of अपेतो the Mss. of Devapāla ममेतो. 6. This word only given by A.

आ० । ततः सर्षपान्फलीकरणमिश्रान् सकम्बुकान्दर्व्या जुहोति सकृद्गृहीतान्स्वाहान्तैश्चतुर्भिः ॥

एवं सायंप्रातर्दशाहं जुहुयात्[1] ॥ २ । ३५ ॥ ( ३।११ )

दे० । अनेन प्रकारेण[2] मन्त्रचतुष्टयेन दशाहं जुहुयात् । अशौचकालं यावत्तावज्जुहुयादित्यर्थः ॥

आ० । एवं सायंप्रातर्दशाहं सूतिकाशौचापनिवृत्तये होमो दृष्टार्थः ॥

---

दशम्यां तस्मिन्नेवाग्नौ पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः[3] फलोत्तरैः सशिरस्कं स्नापयित्वाहतेन[3] वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति कया नश्चित्र इति द्वाभ्यां कया तच्छृण्वे प्रजापतये स्वाहा प्रजापतये नहि त्वदन्य इति च[4] द्वाभ्याम् ॥१॥

दे० । दशम्यां व्यतीतायामशौचशुद्धावेकादशेऽहनि द्वादशेऽहनि तत्र नक्षत्रादिवैगुण्ये दिनान्तरे नामधेयं दशम्यां वा द्वादश्यां वापि कारयेत् । पुण्येऽहनि मुहूर्ते वा नक्षत्रे वा गुणान्वित इति स्मरणात्[5] । औदयिक्या[6] व्यवस्थया त्रयोदशमी[7] तिथिर्गृह्यते । नन्वा न्याय्यादुत्थानादा न्याय्यायाच्च[8] संवेशनादद्यतनकाल इत्यादिकया रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिर्विभातायामपि[9]

---

1. In the Bombay Ms. of Br. (not in that of Lahore) and in the Berlin Ṭcaka follows: नात्र पक्षयागः. which do not seem to belong to the sūtra text. 2. Thus emended: प्रकारचतुष्टयेन the Mss. 3. From सर्वगन्धैः up to स्नापयित्वा fails in both the Mss. of Br., but cp. the Bhāṣya of Br. and Ad. and supra XXI. 1. 4. च given by Br. and all the Mss. of Devapāla except A (missing also in the Parisian and Bombay Ṭcakas.) 5. Cp. Manu II. 30. 6. औदयिन्या A. औपग्रदयिक्या CT and first hand of D. 7. C seems to read त्रयोदशी. 8. Corrected (cp. Kāś. on Pāṇini I. 2. 57), the Mss.: नन्वन्याय्यादुत्थानादन्याय्याच्च. 9. Cp. Ad. on this sūtra.

रजन्यामुदयात्प्राक् परिज्ञायते । अशौचानुवृत्तिदर्शनात् । तस्मिन्नेव सूतिकागारस्थे सूतिकाग्नौ पयसि स्थालीपाकं श्रपयित्वा सर्वौषधिप्रभृतिभिः सुगन्धिद्रव्यविशेषैरुपरिविनिहितमङ्गलार्थजातीफलपूगफलविशेषैः सशिरस्कं स्नापयित्वा । पुंलिङ्गनिर्देशात्स्त्रियं वर्जयति । अनुपभुक्तेन वस्त्रेण संछाद्य स्थालीपाकस्य संबन्धिभिरवदानैर्व्यत्ययेन स्थालीपाकेन जुहोति कया नश्चित्र इति पञ्चाहुतीः ॥

ब्र० । एवं दशम्यां रात्र्यामतीतायां नामधेयकरणं । तत्र यस्मिन्नेवाग्नौ जातकर्म कृतं तस्मिन्नेव पयसि स्थालीपाकं श्रपयेत् । काय प्रजापतये जुष्टं निर्वपामीति निर्वापः । आज्यभागान्ते शिशुं सर्वगन्धमिश्रोदकैर्जातीफलपूगफलादियुतैः सशिरस्कं स्नाप्याहतेन वाससा प्रच्छाद्य कया नश्चित्रः कस्त्वा सत्यः कया तच्छ्रयं प्रजापतये स्वाहा प्रजापते नह्यमा अमुष्येति षट् स्थालीपाकस्यावदाय प्रधानाहुतयः ॥

आ० । दशम्यां व्युष्टायां जननाद्या दशमी तस्यामतीतायामशौचापगम इत्यर्थः । आ न्याय्यादुत्थानादारभ्याशौचापगमनं[1] । उभयतोऽर्धरात्रमिति केचित् । तत्तु पुनरयुक्तं । रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिरिति गौतमीयस्मृतिदर्शनात्[2] । प्रभातायामपि रात्रावनुदिते सूर्ये अशौचशेषं दर्शयति । तेन चावशेषायामपि रात्रौ अशौच उत्पन्ने सा रात्रिर्भण्यते । दशमीग्रहणमशौच निवृत्त्युपलक्षणं । तस्मिन्नेवाग्नौ सूतकापगमेनासौ सूतिकाग्निः । तस्मिन्नेवाग्नौ तत्र च गृहे यावच्छिशोर्निष्क्रमणं गृहाग्न कृतं तावदन्यत्रायुक्तं । पयसि स्थालीपाकमित्यादि गतार्थं । सशिरस्कमिति पुंलिङ्गग्रहणात् स्त्रिया एतन्न भवति । कया नश्चित्र इति स्थालीपाकस्य षडाहुतीर्जुहोति । नामव्यतिषङ्ग उक्तः[3] ॥

अग्नेरायुरसीति तुल्यमा ललाटाभिमर्शनात् ॥ २ ॥

---

1. Corrected, the Ms. अन्ययादुत्तानारभ्याशौचापगमेनम् । 2. See Gaut. dhs. XIV. 7-8. 3 See Ād. on XXXIV. 4.

दे० । अग्नेरायुरसीत्यादिकमायुषेष्ट्या तुल्यमित्यतिदेशः । अवधिमाह । आललाटाभिमर्शनात् । तस्य ललाटमभिमृश्याश्विनोः प्राण इति जपतीति वक्ष्यति[1] । तदनन्तरमायुषेष्ट्या समानमित्यर्थः ॥

आ० ।...तुल्यमायुषेष्ट्या ॥

तदेव नाम धीयते ॥ ३ ॥

दे० । अत्रानुवाके असावित्यस्य स्थाने तदेव नाम धीयते । यत्तु जातकर्मणि कृतं नान्यत् ॥

आ० । अस्मिन्ननुवाके असौशब्दस्थाने तदेव नाम धीयते यज्जातकर्मणि ॥

अन्यादित्येके ॥ ४ ॥

दे० । एके पुनराहुः । अन्यद्विधीयते । द्वे हि नाम्नी ब्राह्मणस्य कर्तव्ये । तत्र यद्रहस्यं जातकर्मण्युक्तं पुत्रे जाते नाम ऽधीयते इति प्रयोजनं परैरभिचारे क्रियमाणेऽनुच्चारादप्रकटं[2] प्रकटं[2] त्वेकादशादौ व्यावहारिकं । तथा च श्रुतिः । तस्माद्ब्राह्मणो द्विनामेति[3] । किं तु तुल्यमायुषेष्ट्येत्यर्थः ॥

व्र० । तस्माद्ब्राह्मणो द्विनामार्धुक इति श्रुतिः[4] । अन्यन्नाम लोकप्रसिद्धमिह कार्यम् ॥

आ० । अन्यदिति केचिदाचार्याः । परमतमप्रतिषिद्धमनुमुतं[5] । तथा च श्रुतिः । तस्माद्ब्राह्मणो द्विनामार्धुक इति । अतोऽन्यदेव । किं तु तुल्यम् ॥

---

1. See XXXVI. 10 and the remark on this sūtra. 2. Thus D, second hand; D first hand and CT : ०च्चारादिप्रकटं, A : ०च्चारादिकं प्रकटं (omitting the following प्रकटं). 3. See the next note. 4. See Kāth. XXVI. I : 120.17. Could this quotation of the śruti have formed part of the sūtra text ? 5. The Ms. ०षेन्द्र०, but the whole is corrupt. Cf. Vātsyāyana Bhāṣya on Nyāya sūtra I. 1.4 परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः । Also cf. Kautalya Arth. : XV. 1. परवाक्यमप्रतिषिद्धमनुमतम् .

**प्राक् स्विष्टकृतः कांसे [1]पूतमाज्यमासिच्य हिरण्यं चाबन्धनीयमग्नेरायुरित्यवधाय[2] तस्य जुहोतीन्द्रस्य प्राण इति पञ्चभिः॥५॥**

दे० । स्विष्टकृतः पूर्वं पूतं घृतं कंसपात्रे[3] प्रक्षिप्य तत्र च हिरण्यं प्रक्षिप्याग्नेरायुरसीत्यादिना मन्त्रेण । कीदृशं सुवर्णं । यदाबन्धनीयं । बालस्य कण्ठादौ बन्धनार्हं । तस्य जुहोति । इन्द्रस्य प्राण इत्यादिभिः पञ्चभिर्मन्त्रैः ॥

ब्र० । तत ऋतुतिथियागादि परि ते दूडभो रथ इत्यन्तं[4] हुत्वा बाहिस्तन्त्रकेण[5] विधिनाज्यं संस्कृत्य कंसपात्र आसिच्य तत्र कण्ठाभरणयोग्यं हिरण्यमग्नेरायुरित्यबद्धाति । अमुष्मा आयुर्धेहीत्यत्र चतुर्थ्यन्तं शिशुनाम पूर्ववत् । ततः कंसस्थस्याज्यस्येन्द्रस्य प्राण इति पञ्चभिः स्वाहाकारान्तैः पञ्चाहुतीः स्रुवेण जुहोति ॥

आ० । प्राक् स्विष्टकृतः कांस्ये[6] पूतमाज्यमासिच्य । आज्यधान्या पूतं । तदवसिच्य । तत्राज्ये हिरण्यं चाबन्धनीयमग्नेरायुरित्यवधाय । अत्रामुष्मा इति द्वितीयस्य नाम्नः प्रयोगः । तस्य कंसस्थस्याज्यस्य जुहोति । इन्द्रस्य प्राण इति पञ्चभिः स्वाहाकारान्तैः॥

**प्राक् संस्थितयजुषो ब्रह्मा घृते हिरण्यमवपद्यते सर्वे च[7] ऋत्विजो[7] यदसर्प इति ॥ ६ ॥**

दे० । संस्थितयजुर्होमात्पूर्वं ब्रह्मा घृते हिरण्यमवपद्यते । अवघ्नाति । यत्तद्बालगलादिबन्धनार्थं घृते निहितं सर्वे चर्त्विजस्तदवघ्नन्ति । यदसर्प इत्यादिमन्त्रैः ॥

ब्र० । ततः स्विष्टकृदादि मनो ज्योतिरिति समान्ते हुते[8] ब्रह्मणोऽन्ये-

---

1. Thus A & the Stein ṭeaka: कांसे DTC, Br.: कंस्ये Ad. 2. ०ग्नेरायुरसीत्य A only and the Stein ṭeaka. 3. Thus ACT: कांस D. 4. Cp. XLVII. 12-13. 5. Thus the Bombay Ms. of Br., the Lahore Ms.: ०हितान्त्रिकेण. 6. First hand कंस्ये, second hand कंस्ये. 7. Thus the Mss. of Devapāla. चार्त्विजो Br. 8. Cp. XLVII. 11.

षां चर्त्विजां गृह्यकर्मण्यनुपयोगित्वात् कर्तैव यदसर्प इत्यैरय-
दित्यन्तेन कंसे घृतस्थं हिरण्यमवष्टभ्नाति ॥

आ० । ततः स्विष्टकृदादि कृत्वा प्राक् संस्थितयजुषो ब्रह्मा घृते
हिरण्यमवपद्यते । हस्तेनावष्टभ्नाति । इह ब्रह्मण ऋत्विजां
चाभावात्कर्तावपद्यते ॥

**पावमानेनेत्युद्धृत्य देवा आयुष्मन्त इति[1] यजमानाय प्रयच्छति ।७।**

दे० । आज्यात्सुवर्णं पावमानेनेत्युद्धृत्य यजमानाय प्रयच्छति देवा
आयुष्मन्त इत्यादिमन्त्रैः ॥

ब्र० । पावमानेन त्वा बृहता त्वाग्निस्त्वा मात्रयेति त्रिभिरसा इत्यन्तैरु-
द्धरति । अत्रासौशब्दस्थाने शिशोरामन्त्रितप्रथमान्तं नाम ग्राह्यं ।
यथा । उपांशोर्वीर्येणोद्धरामि देवस्वामिन् । शुक्रस्य वीर्येणोत्सृजामि
यज्ञमित्र । जीवनस्यायै सोमशर्मन् ॥ देवा आयुष्मन्त इति षड्भिर्य-
जमानाय[2] प्रयच्छति । अत्रासौशब्दस्थाने शिशोः प्रथमान्तं नाम
ग्राह्यम् ॥

आ० । पावमानेनेति त्रिभिरुद्धृत्यासौशब्दस्थाने संबुद्ध्यन्तं शिशोर्नां-
मानुदात्तत्वादसौशब्दस्य । केचिद्धिरण्यस्य नाम गृह्णन्ति तदभि-
धानत्वात् । तदयुक्तं । इदानीं हिरण्यशब्द एव पठ्येत[3] । किं सर्व-
नाम्ना हिरण्यं तु यजमानेनाध्यास्यते[4] । यथा वध्यमुद्धरत्युत्सृज-
त्युन्नयत्येवमेवैनमेतदुद्धरत्युत्सृजत्युन्नयतीति[5] । एनमिति पुंलिङ्गेन
यजमानमन्वादिशति । देवा आयुष्मन्त इति षड्भिर्यजमानाय
प्रयच्छति हिरण्यं । अत्रोदात्तत्वादसौशब्दस्थाने[6] प्रथमान्तं नाम ॥

**तत्पिबति निरवधयेद्धिरण्याद् घृतम्[7] ॥ ८ ॥**

---

1. The Stein, Berlin and Parisian Ṭeakas insert षड्भिः । 2. शिशवे instead of यजमानाय the Lahore Ms. 3 : पठ्यते the Ms. 4. Read: ०ध्यस्यते ? 5. See Kāṭh. XI. 8 : 154. 20-21. 6. Thus corrected : ०सौशब्दस्य the Ms. 7. According to Devapāla this sūtra should end with निरवधयेत्, he connects the last two words with the next sūtra. Br. seems to take this passage in the same way, but he connects प्रक्षाल्य

दे०। तत्सुवर्णविस्रावमाज्यं बालकः पिबति। तच्च निःशेषेणावधयेत् पिबेत्॥

ब्र०। ततस्तद्धिरण्याद्घृतं प्रक्षाल्य तूष्णीं पाययति कंसस्थशेषं च॥

आ०। हिरण्याद्घृतं माणवकः पिबति। निरवधयेन्निष्पिबेदिति[1]॥

**प्रक्षाल्येममग्न इति हिरण्यमाबध्नाति[2] ॥९॥**

दे०। हिरण्यलग्नं घृतं प्रक्षाल्यैतद्धिरण्यं बध्नाति बालस्य गलादौ। इममग्न इत्यादिना॥

ब्र०। प्रक्षाल्य हिरण्यमिममग्न इति शिशोः कण्ठे आबध्य॥

आ०। प्रक्षाल्य घृतमिमग्न इति माणवकस्य कण्ठादौ बध्नाति॥

**तस्य ललाटमभिमृश्याश्विनोः प्राण इति जपति॥१०॥[3]**

दे०। तस्य ललाटतटं हस्तेन स्पृष्ट्वा जपत्यश्विनोः प्राण इत्यादिकम्॥

ब्र०। अश्विनोः प्राण इति त्रिभिर्ललाटमभिमृश्य जपति॥

---

*also* with the next sūtra. It is clear that the wording of this sūtra, with the optative besides the indicative, rests on a misunderstanding of the Kāṭhaka text (XI. 8: 155. 2): *tat pibaty: āyur eva tat pibati; yad eva tasya tan nir iva dhayed dhiraṇyād ghṛtam–tejo vai hiraṇyam, āyur ghṛtam–tejasa evādhy āyur ātman dhatte.* The Sūtrakāra has read: निरवधयेद्. That, after all, this faulty reading is proper to our sūtra, appears from the passage cited by L. v. Schroeder, "Die Tuebinger Katha-handschriften" page 29, where we find also निरवधयेद्.

1. निवेधयेन्नि० the Ms. 2. Thus the Lahore Ms. of Br. (the Bombay one is incomplete here) and the Parisian, Bombay and Berlin reakas. The Mss. of Devapāla have not preserved the sūtra proper. 3. Remark on sūtras 5-10. It is probable, that these sūtras are taken unaltered from the Kaṭha-yajñasūtra (cp. Kāṭh. XI. 8 and W. Caland. Altindische Zauberei, die Wunschopfer, no. 169), and that originally they formed not a part of the Gṛhyasūtra.

**अङ्गादङ्गात्संभवासि हृदयादभि[1] जायसे । आत्मा वै पुत्रनामासि जीव शरदः शतं पश्य शरदः शतमिति मूर्धनि निघ्राप्य[2] स्वस्त्ययनं वाचयति ॥११॥**

दे० । अङ्गादङ्गादित्यादिना बालस्य शिङ्घनं कृत्वा स्वस्त्ययनं वक्ति । क्वचिन्निघ्राप्येति पाठः[3] । तत्र स्वार्थे णिच् । पित्रसंनिधौ वा मातरं प्रयुज्येति केचित् । ऋत्विग्वा पितुः प्रयोजको विवक्षितः ॥

ब्र० । एतदग्नेरायुरसीति हिरण्यावधानादेललाटाभिमर्शनादनन्तरमङ्गादङ्गादिति पितरं मूर्धनि निघ्राप्य[4] संस्थितयजुर्हुत्वा । बोधश्चेति स्वस्त्ययनं । बहु सर्पिष्मदन्नं ब्राह्मणान्भोजयेत्[5] ॥

आ० । एतत्तुल्यमा ललाटाभिमर्शनात्[6] । ततः संस्थितयजुः । अङ्गादङ्गादिति पंक्तया मूर्धनि निघ्राय[7] गन्धमुपादाय स्वस्त्ययनं वाचयति । ये निघ्राप्येति पठन्ति माणवकस्य पितरं निघ्रापयन्ति । तमेव स्वस्त्ययनं वाचयन्ति ॥

**एवमत ऊर्ध्वं विप्रोष्यैवं मासि मासि स्थालीपाकस्येष्ट्वा जातकर्मणा वाज्यस्यैवं संवत्सरम् ॥ १२ ॥**

दे० । अतो नामकारणादूर्ध्वं यदा प्रवासादायाति पिता तदानेनैव प्रकारेण मूर्धन्यभिनिघ्राणं कुर्यात् । एवमेव जन्मदिने स्थालीपाकेन जातकर्मविधिवदाज्येनेष्ट्वा निघ्राणं मूर्धनि कुर्यात् । एवं संवत्सरं । प्रतिमासमिमां कर्तव्यतां संवत्सरं यावत्कुर्यात् ॥

ब्र० । एवमत ऊर्ध्वं प्रवासादागत्या मौञ्जीबन्धनात्पिताङ्गादङ्गादिति मूर्धन्यवघ्राय स्वस्त्ययनं कुर्यात् । एवं प्रतिमासं यावदब्दं नाम-

---

1. Thus (instead of the correct अधि, which is found only in the Bombay Ms. of Br.) all the Mss. of Devapāla (also in his Mantrabhāṣya), the Lahore Ms. of Br., and four ṭeakas. 2. Thus all, but the Bhāṣya acknowledges also a reading **निघ्राय ।** 3. Devapāla starts apparently from a reading **निघ्राय ।** 4. **०घ्रास्य** the Bombay Ms. 5. Cp. sūtra 14. 6. Cp. sūtra 2. 7. **निघ्रापय** the Ms.

धेयविधिना पयसि स्थालीपाकस्येष्ट्वावघ्राणं स्वस्त्ययनं ब्राह्मणभोजनं च जातकर्मविधिना वाज्यस्य प्रतिमासं होमः । विप्रोष्य न तु होमः ॥

आ० । एवमत ऊर्ध्वं विप्रोष्य प्रवासादागत्य मूर्धनि निजिघ्रति अनेनैव मन्त्रेण । एवं मासि मासि स्थालीपाकस्येष्ट्वा निघ्राय स्वस्त्ययनं वाचयति । स्थालीपाकग्रहणात्पयस्यन्द[1] नादरः । जातकर्मविधिनावाज्यस्येष्ट्वा निघ्राय वाचयति । आज्यग्रहणं स्थालीपाकस्य प्रकृतत्वात् । जातकरणहोमो नामकरणहोमो वा मासि मासि यावत्संवत्सरम् ॥

**मांसं तु नाश्नीतः ॥ १३ ॥**

दे० । मांसं तु बालस्य माता पिता च संवत्सरं यावन्नाश्नीतः ॥
ब्र० । संवत्सरं तु दम्पत्योर्मांसाशननिषेधः ॥

**समाप्ते संवत्सरेऽजाविभ्यां वाग्निधान्वन्तरी इष्ट्वा सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् ॥ १४ ॥ ३६ ॥ ( ३ । १२ )**

दे० । प्रथमे संवत्सरे समाप्ते अजेनाग्निमविना धान्वन्तरिमिष्ट्वा । वाशब्दादाज्येन स्थालीपाकेन वा । सर्पिषा प्रचुरेण युक्तमन्येन च पवित्रेण दधिप्रभृतिनान्नं ब्राह्मणान्भोजयेत् । तैः सुप्रीतैः स्वस्त्ययनाशीःप्रभृतिभिरभिनयेदेनम् ॥

ब्र० । समाप्ते संवत्सरे बालस्य जन्मदिने जातकर्मविधिनाज्यस्य नामधेयवत्पयसि स्थालीपाकस्य वा यजेताथवा छागेनाग्निं मेषेण धान्वन्तरिमिज्यात् ॥

आ० । समाप्ते संवत्सरे जन्मनक्षत्रे अजाविभ्यामग्निधान्वन्तरी इष्ट्वा । सत्यपि समासे द्रव्यदेवताविभागः । अजेनाग्निमविना धान्वन्तरिं विभागश्च सूत्रितत्वान्नादुपपन्नः[2] । वाशब्दो हविर्विकल्पार्थः । तेनाजाविभ्यां वा स्थालीपाकेन वा आज्येन वा । सर्पिर्विपक्वं । सर्पिष्मत् संयाधोदिः[3] ॥

---

1. Corrupt ! 2. ०न्वान्ना० must be corrupt. 3. Thus or संयाबादिः the Ms.

दे० । एवं गर्भाधानादि नामकरणान्तं व्याख्यातं । अनन्तरं चूडाकर्म सूत्रकारेणोक्तं[1] । स्मृतिषु हि निष्क्रमणान्नप्राशने नामकरणानन्तरमुक्ते ।

तृतीये मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।
षष्ठे मास्यन्नप्राशनं कर्तव्यमित्यादीनि ।

तेन ते अप्यवश्यकर्तव्ये । चन्द्रदर्शनं चातो गृह्यान्तराद्यनुसारेणेहापि दर्शयति ॥

तृतीयेऽर्धमासे दर्शनामादित्यस्य ॥ १ ॥

दे० । जन्मनः प्रभृति मासद्वये व्यतीते तृतीयस्य मासस्य प्रथमार्धे व्यतीते आदित्यस्य दर्शनं बालः कारयितव्यः । तत्रेयमितिकर्तव्यता ॥

ब्र०[2] । निष्क्रमणान्नप्राशनविधिमाचार्यो नाह । श्रोत्रियास्तु पारंपर्येण पठन्ति ।

तृतीये मासि कर्तव्यं शिशोः सूर्यस्य दर्शनम् ।
चतुर्थे मासि कर्तव्यं तथा चन्द्रस्य दर्शनम् ॥

आ०[3] । निष्क्रमणान्नप्राशनं च स्मृतिषु कर्तव्यतयोपदिष्टं । इह तु विशेषहोमो नास्ति । तेन नानादेशहोमस्त्रिकादिभिरत्र । अन्यदाचारप्रसिद्धं कर्तव्यम्[4] ॥

पुण्याहे पर्वणि वोदिते[5] त्वादित्ये रथचक्रमात्रं स्थण्डिलमुपलिप्य

---

1. Thus we get the impression that the ādityadarśana and the annaprāśana were originally not treated in this sūtra, but are borrowed from another sūtra. See also Devapāla's further remarks, and Br. and Ād. on this sūtra. It is highly remarkable that Ād. gives no comment on the Kaṇḍikās 37-39. However, his text can be deficient, see his Kaṇḍikā figures (note 4) It is noteworthy that Hemādri in his Pariśiṣṭakhaṇḍa page 739 cites sūtra 1 as belonging to the Laugākṣisūtra. 2. Immediately after the whole text part. 3. Immediately after Kaṇḍikā 36. 4. Then the figure 39. 5. The three words पुण्याहे पर्वणि वा only in Devapāla, not in Br. nor in any of the ṛcakas consulted by me.

तस्मिन्यथोक्तमुपसमाधाय[1] जयप्रभृतिभिर्हुत्वा[1] तरणिर्दिवो रुक्म उदुत्यं चित्रं देवानामित्याज्यस्य जुहोति ॥ २ ॥

दे० । पुण्ये दिने ज्योतिः शास्त्रपरिशुद्धे पर्वणि वा सुनक्षत्रादियोगिनि दर्शनं कारयितव्यः इत्येकस्यैव पर्वण इतरतिथिसमुदायेन सह विकल्पदर्शनादुत्कर्षातिशयः प्रतीयते । उदिते त्वादित्ये रथचक्रपरिमाणं स्थण्डिलमुपलिप्य गेहाङ्गने आदित्यरश्म्यलंकृते । तत्रोपलिप्ते प्रतिष्ठाप्य लौकिकमग्निं यथोक्तमुपसमाधानमुद्धतावोक्षणपरिसमूहनपर्युक्षणपरिस्तरणपवित्रकरणाज्यविलयनाज्यवीक्षणाग्न्युपस्थानरूपं कृत्वा । ततो जयप्रभृतिभिर्जयाकारंराघारााद्याज्यभागान्तैर्हुत्वा तरणिर्विश्वदर्शत इति दिवो रुक्म इत्युदु त्यमिति चित्रं देवानामिति चतसृभिराज्यस्य जुहोति ॥

ब्र० । रथचक्रमात्रं सावित्रवदष्टाचत्वारिंशदङ्गुलमालिख्योदिते त्वादित्ये तमभ्यर्चयेत् । मित्राय जुष्टं निर्वपामीति निर्वापः । आज्यभागान्तं हुत्वा तरणिः···इति चतस्रः स्रुवेणाज्याहुतीर्जुहुयात् ॥

मित्रो जनान्प्र स मित्रेति[2] स्थालापीकस्य ॥३॥

दे० । जुहोतीत्यनुपज्यते । मित्रो जनान्प्र स मित्रेति च द्वाभ्यां स्थालीपाकस्य जुहोति ॥

अभ्यावर्तस्वेति कुमारमभ्युदानयन्ति ॥ ४ ॥

दे० । अभ्यावर्तस्वेत्यादिना मन्त्रेण कुमारमभिमुखं कृत्वोन्नमय्य[3] नयति[3] पिता गुरुर्वा ॥

ब्र० । अभ्यावर्तस्वेति सुमृष्टम ॥

द्रष्ट्रे नम इत्युपस्थानमादित्यस्यादृश्रन्नस्येति[4] च[5] । ५ ॥

---

1. The passage तस्मिन्...हुत्वा is found only is Devapāla.
2. मित्र इति the Mss. in the text.
3. कृत्वा । नयति A.
4. Without अस्य the Mss. of Devapāla.
5. 'च om. CDT.

दे० । द्रष्ट्रे नम उपद्रष्ट्रे नम इत्यादिना बालस्य पितादित्यस्योपस्थानं करोति । बालं संमुखं कृत्वोत्सङ्गे ॥

ब्र० । द्रष्ट्रे नम इत्युपस्थानमदश्रन्नित्यनेन च ॥

सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् ॥ ६ ॥ ३७ ॥ (३।१३)

दे० । बहुघृतदध्यादियुक्तं च हविष्मदन्नं ब्राह्मणान्भोजयेत् ॥

---

एवं चन्द्रदर्शनम् ॥ १ ॥

दे० । एवंशब्देन रथचक्रपरिमाणस्थण्डिलोपलेपनान्तस्यातिदेशः । विशेषमाह ॥

मक्षू धाता[1] भूयो जात इति द्वाभ्यामाज्येन चतुर्गृहीतेनाज्यभागान्ते जुहोति[2] ॥२॥

आप्यायस्व[3] सं ते पयांसीति द्वाभ्यां स्थालीपाकस्य[4] ॥३॥

ब्र० । आज्यभागान्त आप्यायस्व सं ते पयांसीति चरोः प्रधानद्वयं हुत्वा । केषांचिन्मते । अभ्यावर्तस्वेति बालमभ्युदानयेत् ॥

नवो नव इत्युपस्थानम्[5] ॥४॥

दे० । नवो नव इत्यनेन मन्त्रेण चन्द्रमस उपस्थानं कर्तव्यम् ॥

ब्र० । यथादित्यं नवो नव इति द्वाभ्यामुपस्थानम् ॥

---

1. The Mss. of Devapāla मक्षू धाता मातरिश्वा । 2. This sūtra, on which Devapāla gives no special commentary, is not found in the Bombay text of Br., in the Lahore Ms. there is a rest of it. Br. mentions neither the Mantras (which are taken from the Ekacakram, see Versl. en Meded der Kon. Akad. v. Wet. te Amsterdam, Afd. Lett. Ve. Reeks, 4e. deel, page 489). The sūtra is missing also in four of the ṛcakas consulted by me. 3. o स्वेति the Mss. of Devapāla. Br. has only आप्यायस्वेति द्वाभ्यां स्था० 4. The Mss. of Devapāla insert जुहोति । 5. Here is a real difference between Br. and Devapāla. According to the first the sūtra runs: यथादित्यं नवो नव इत्यु० । Nearly all the Mss. (except the Berlin and Stein ṛcakas) insert चन्द्रमसः after उपस्थानम् ।

प्रकाशो दक्षिणा[1] ॥ ५ ॥ ३८ ॥ (३।१४)

दे० । प्रकाश आदर्शो दक्षिणा दातव्या ॥

ब्र० । अधीवास उत्तरं वासो दक्षिणा । ऋतुतिथियागादितन्त्रसमाप्तिः ॥

---

षष्ठे मासे[2]ऽन्नप्राशनं[3] दन्तेषु वा जातेषु ॥ १ ॥

दे० । प्रसवादारभ्य षष्ठे मासे बालस्यान्नप्राशनं कर्तव्यं दन्तेषु वा जातेषु ॥

सर्वाणि हविष्यान्नानि[3] संयूय । आयुर्दा देव घृतप्रतीक इति[4] हुत्वान्नपते अन्नस्येत्येतयैव[5] कुमारमन्नं प्राशयेत् ॥२॥३९॥(३।१५)

ब्र० । संयूय साधयित्वा ।......अन्नपतये जुष्टं निर्वपामीत्यत्रान्नप्राशने निर्वापः । आज्यभागान्ते आयुर्दा इति स्रुवेणाज्यस्य जुहोत्यन्नपत इति स्थालीपाकस्य । तत ऋतुतिथ्याद्याश्राविताान्तं संस्थाप्य सर्वान् रसान्सर्वमन्नं चैकत उद्धृत्यान्नपत इत्यनयैव कुमारमन्नं प्राशयेत् ॥

---

तृतीयस्य वर्षस्य भूयिष्ठगते[6] चूडाः कारयते ॥१॥

दे० । जन्मनः प्रभृति यस्तृतीयो वर्षस्तस्य भूयिष्ठभागे गते सति चूडाकर्म कर्तव्यं । अर्धमवधिं कृत्वा सप्तमो मासो भूयानष्टमस्तु भूयिष्ठः । तस्मिन्गते नवमे मासि कर्तव्यं । दक्षिणास्नानादिकमपि[7] । न स्वयं

---

1. Again Br. differs from Devapāla: he has. अधि (or अधी० ) वासो दक्षिणा, and thus also the Tuebingen. Stein. and Berlin ṛeakas. 2. The Mss. of Devapāla: मास्यन्न०, but cp. his Bhāṣya.—This sūtra is quoted by Hemādri (Pariśiṣṭa. page 710) as one of Laugakṣi. 3. Thus A and the second hand of a Tuebingen ṛeaka; हविषान्नानि the other Mss. of Devapāla; सर्वाण्यन्नानि the other Mss. 4. Br. and two of the ṛeakas ins. स्रुवेणाज्याहुतीर्; the Parisian ṛeaka only स्रुवेण. 5. Thus Br. and the Stein ṛeaka; ०स्येति मन्त्रेण the Mss. of Devapāla. 6. भूयिष्ठगतेषु the Bombay Ms. of Br. (the Lahore one: भूयिष्ठे गते ), Ād., the Parisian and Stein ṛeakas. 7. ? Thus DA; ०स्नानाद्विदपि CD first hand, but with a sign of deletion above दा. R. स्नानविदापि ? cp. Ād.

पित्रा कर्तव्यमिति णिचोक्तम् ॥

ब्र० । तृतीये वर्षे चूडाः पञ्चमे वेति शङ्खलिखितौ । तृतीयस्य वर्षस्य मासाष्टकेऽतीते भूयिष्ठमित्याहुः ॥

आ० । जन्मप्रभृति तृतीयस्य वर्षस्य भूयिष्ठेऽष्टममासि[1] गते चूडाः शिखाः कारयते । विद्वानपि पिता अन्येन कर्त्रा विदुषा ॥

**दक्षिणतः कपुजा[2] वसिष्ठानाम् ॥ २ ॥**

दे० । कपुजा चूडा । सा वसिष्ठगोत्रसंभूतानां दक्षिणे शिरसो भागे कर्तव्या ॥

आ० । तावदुच्यते यादृशीः शिखाः । दक्षिणतः शिरसो दक्षिणे भागे एका कपुजा शिखा वसिष्ठानां । येषां वसिष्ठप्रवरस्तद्गोत्राः सर्वे एव वसिष्ठाः । चतसृषु पक्षिकास्वाधीताः[3] ॥

**उभयतोऽत्रिकश्यपानाम् ॥ ३ ॥**

दे० । उभयोः शिरसो दक्षिणोत्तरभागयोरत्रिगोत्रे कश्यपगोत्रे च जातानां शिखा कर्तव्या ॥

आ० । शिरस उभयतः पार्श्वतोऽत्रिप्रवराणां कश्यपप्रवराणां च ॥

**मुण्डा भृगवः ॥ ४ ॥**

दे० । भृगुगोत्रजाः मुण्डा निःशिखाः कर्तव्याः ॥

आ० । सर्वे शिर अशिखाः । समस्वपि पक्षिकासु ॥

**पञ्चचूडा अङ्गिरसः[4] ॥ ५ ॥**

दे० । आङ्गिरसगोत्रे ये जातास्ते पञ्चचूडाः कर्तव्याः ॥

आ० । पञ्चशिखा अङ्गिरसः पञ्चदशविधा अपि ॥

---

1. °यिष्ठेष्टमासि the Ms. 2. Thus Br (Bombay Ms.), Ād., of the Mss. of Devapāla A and the Stein and Berlin ṛcakas; कपोजा the Lahore Ms. of Br., the Parisian ṛcaka and of the Mss. of Devapāla CT and first hand of D; cp. Saṃskārakaustubha fol. 111. a. Gṛhyāsaṃgraha II. 40. Madanapārijāta page 361. 3. Cp. Ād. on sūtra 4. 4. आङ्गि° the Mss. of Devapāla exc. D first hand (अङ्गि°); °चूडाङ्गिर° the Bombay Ms. of Br.

वाजिमेके ॥ ६ ॥

दे० । वाजिमेके इच्छन्त्याङ्गिरसानां । वाजिः केशपंक्तिः ॥

आ० । वाजिमेके मन्यन्ते । केशपंक्तिमङ्गिरसां चूडापंक्तिं वा ॥

मङ्गलार्थं शिखिनोऽन्ये ॥ ७ ॥

दे० । ये कथितास्तेभ्या ऽन्ये ऽगस्त्यविश्वामित्रादिगोत्रजास्ते शिखिनो भवन्ति । किमर्थं । मङ्गलार्थं । निःशिखत्वं त्वमङ्गलधर्मोऽरिष्टहेतुः[1] । तथा[1] च पठन्ति । अमेध्यमेतच्छिरोऽशिखं । यत्र बाणाः संपतन्ति कुमारा विशिखा इवेति[2] निन्दावादः । यन्मूलं शिखाकर्मस्मरणम् ॥

आ० । सशिखा अपि भवन्त्युक्तव्यतिरिक्ता विश्वामित्रागस्त्याः । मङ्गलं धर्मस्तदर्थं । यतः पठ्यते । अमेध्यं वा एतच्छिरो यदशिखम् ॥

यथाकुलधर्मं वा ॥ ८ ॥

दे० । कुलधर्मानतिक्रमेण वा एकशिखत्वादि कर्तव्यं । कुलाचाराणामपि धर्मत्वेन स्मरणात्—

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यति[3] ॥

शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा । आयमगात्सविता क्षुरेणोष्णेन वाय उदकेन एहि । आदित्या रुद्रा वसवः सचेतसः सोमस्य राज्ञो वपत प्रचेतस इत्युष्णा अपो ऽभिमन्त्रयते ॥ ९ ॥

ब्र० । अत्राज्यं हविः । आज्यभागान्तं हुत्वा आयमगादित्युष्णा अपोऽभिमन्त्रयेत् ॥

आ० । शुद्धपक्षस्येति व्याख्यातं[4] । आज्यभागान्तं हुत्वा आय०···ऽभिमन्त्रयते ॥

उष्णाश्च शीताश्च समेत्य सर्वा बृहस्पतिः सविता सत्यधर्मा तद्-

1. ०धर्मः अरिष्टहेतुस्तथा the Mss. 2. Rs. VI. 75. 17. 3. Manu IV. 178. 4. See on XV. 2.

नुमन्यताम् ॥ आर्द्रदानव इत्यभ्युन्देत्[1] । आर्द्रदानवः स्थ जीवदानवः स्थोन्दतीरिहैनमवताप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस इति ॥ १० ॥

दे० । उष्णाश्चेत्यादिना वर्चस इत्यन्तेनाभ्युन्देत् । उन्दीक्लेदने[2] । माणवकस्य शिरोऽभिमन्त्रिताभिरद्भिः प्रक्षालयेदित्यर्थः ॥

ब्र० । उष्णाश्च शीताश्चार्द्रदानव इति च वर्चस इत्यन्तानुमन्त्रितोदकेन कुमारस्य केशान् क्लेदयेत् । उन्दन्तीरिहैनमवतेत्येव प्रयोगः ॥

आ० । उष्णाश्च शीताश्चेत्यादिना दीर्घायुत्वाय वर्चस इत्यन्तेनाभ्युन्देच्छिरो माणवकस्य ॥

दक्षिणे केशान्त[3] ओषधे त्रायस्वेति दर्भमन्तर्धाय स्वधित इति[4] क्षुरेणाभिनिधाय येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो[5] वपतेदमद्यायुष्माञ्जरदष्टिर्यथासदयमसौ ॥ येन धाता बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत् । तेनास्यायुषे वप[6] सुश्लोक्याय स्वस्तये[7] ॥ येन पूषा प्रजापतेरग्नेः सूर्यस्य चायुषेऽवपत् । तेनास्यायुषे वप[6] सुश्लोक्याय स्वस्तये[7] ॥ येन भूयश्च

1. This is the redaction of the sūtra as given by Br. (who, however, inserts, as do the Stein and Berlin ṛcakas, after अभ्युन्देत् दक्षिणे केशान्ते । By Devapāla the Mantra आर्द्र० is given directly in full and followed by इत्युन्देत् । without अभि, but see his Bhāṣya. The Mantra, occuring in the Kāṭhaka (II. 1 ; 8. 5-6) is given sakalapāṭhena because of the ūha. 2. Dhātupāṭha XXIX. 20. 3. केशान्ते all. 4. It is noteworthy that all the Mss. of Devapāla omit इति. reading, however, the sandhi form स्वधित । 5. Thus the Berlin, Tuebingen and Parisian ṛcakas. ब्राह्मणा, ब्राह्मणो, ब्रह्मणो the other Mss. 6. वपत् Br., and the Stein, Tuebingen, Berlin ṛcakas. 7. Br., the Stein and the Tuebingen ṛcakas add to these Mantras also अयमसौ ।

रात्री[1] ज्योक्पश्या च सूर्यम् । तेनास्यायुषे वप[2] सुश्लोक्याय स्वस्तय[3] इति प्रदक्षिणां प्रतिदिशं प्रतिमन्त्रं दर्भक्षुरकर्म ॥११॥

दे० । शिरसो दक्षिणभाग ओषधे त्रायस्वैनमिति मन्त्रेण दर्भमन्तर्धाय स्वधिते मैनं हिंसीरित्यनेन क्षुरेणाभिनिधायावष्टभ्य सदर्भान् केशान्येनावपदित्यादिभिश्चतसृभिरनुष्टुब्भिर्दक्षिणभागादारभ्य प्रदक्षिणं यथा भवति तथा प्रतिदिशं प्रतिमन्त्रं दर्भक्षुरकर्म कर्तव्यमृत्विजा । आद्यया दक्षिणभागे द्वितीयया पश्चिमभागे तृतीययोत्तरस्मिंश्चतुर्थ्या त्वग्रे ॥

ब्र० । ततो दक्षिणतः शिरसि प्रागग्रं दर्भं केशान्तर्हितमोषधे त्रायस्वैनमिति निदधाति । स्वधित इति केशेषूपरि क्षुरं प्रागग्रमेव । येनावपदिति किंचिन्मात्रं वपति । असौशब्दस्थाने कुमारस्य प्रथमान्तं नाम । यथा । जरदष्टिर्यथासदयं विष्णुशर्मा । प्रपततो मा ते केशाननुगादिति सुहृत् परिगृह्णाति । ततः पश्चार्धे एवमेव दर्भक्षुरावुदगग्रौ निधाय येन धातेति वपेत् । उत्तरतश्चैवं[4] प्रागग्रौ[4] दर्भक्षुरौ निधाय येन पूषेति वपेत् । पूर्वार्धे एवमेवोदग्रौ निधाय येन भूयश्चेति क्षुरकर्म ॥

आ० । दक्षिणे केशान्ते दक्षिणतः केशमूले । ओषधे त्रायस्वैनमिति दर्भमन्तर्धाय विविच्य केशान् । स्वधित इति क्षुरेणाभिनिधाय दर्भे । येनावपदिति त्रिष्टुभा नामान्तया[5] वपति सदर्भान्केशान् । प्रथमान्तं माणवकस्य नाम । ततः पश्चार्धे शिरस ओषधे त्रायस्वैनमिति दर्भेणान्तर्धानं । स्वधित इति क्षुरेणाभिनिधानं । येन धाता बृहस्पतेरिति वपनं । एवमुत्तरतः । येन पूषेति तु वपनं । एवं पुरस्ताद्दर्भक्षुरकर्म येन भूयश्चेत्यनुष्टुभा वपनं । तदेताश्चतस्र ऋचः पठिताः ॥

यत्क्षुरेण वर्तयता सुपेशसा वप्तर्वपसि केशान् । शुन्धि शिरो

---

1. रात्रीं Br., and the Stein and Berlin Teakas. 2. Cp. previous page note 6. 3. Cp. previous page note 7. 4. ॰श्चैवमेवोदगग्रौ the Bombay Ms. 5. Emended. नामन्त–या the Ms.

मास्यायुः प्रमोषीरिति लौहायसं[1] क्षुरं केशवापाय प्रयच्छति ॥१२॥

दे० । यत्क्षुरेणेत्यादियजुषा नापिताय क्षुरं ददाति । लोहायसमिति शस्त्रान्तरजातिविशेषस्य संज्ञा नापितः प्रसिद्धः । अन्ये तु क्षुरग्रहणेनैव लोहत्वस्य सिद्धत्वात्स्तुत्यर्थं लोहग्रहणं चेत्याहुः । अतितैक्ष्ण्यादिगुणभाजा प्रशस्ततमेनेत्यर्थः ॥

आ० । एवमृत्विङ्मन्त्रवत्कृत्वा नापिताय क्षुरं प्रयच्छति यत्क्षुरेणेति यजुषा । लौहायसं न ताम्रायसम्[2] ॥

मा ते केशाननुगात्तेज एतत्तथा धाता दधातु ते । तुभ्यमिन्द्रो बृहस्पतिः सविता वर्च आदधुरिति प्रपततो ऽनुमन्त्रयते ॥१३॥

दे० । अनया पुरस्ताद्बृहत्या केशान्पततः अनुमन्त्रयते ॥

ब्र० । मा ते केशानिति प्रपततः केशान् कुमारमीक्षमाणो जपति ॥

सुहृत्परिग्राह्यानुप्यमानान्हरितगोमये समवचिनोति ॥१४॥

दे० । सुहृदेव पतन्तः केशा ग्राह्या इति नियमः । तानुप्यमानान्मुण्डमानान्पततः हरितगोमयेन संमिश्रीकृत्य पिण्डीकरोति क्वचिदाचारः ॥

ब्र० । सुहृत्तानार्द्रगोमये एकीकृत्य स्थापयति ॥

आ० । उप्त्वानुप्यमानं[3] प्रपततः सुहृद्गृह्णाति । एवं सुहृत्परिग्राह्या भवन्ति । स च सुहृद्धरितगोमये । आर्द्रगोमये । समवचिनोति । मिश्रयित्वा पिण्डं करोति ॥

उप्त्वाय राज्ञो वरुणस्य केशान्सोमो धाता सविता विष्णुरग्निः । तेभ्यो निधानं बहुधान्वविन्दन्नन्तरा द्यावापृथिवी अवस्युरिति प्रागुदीचीं ह्रियमाणाननुमन्त्रयते ॥१५॥

दे० । अनया वैश्वदेव्या त्रिष्टुभा मित्रेण प्रागुदीच्यां दिशि नीयमानान्केशाननुमन्त्रयते कर्ता ॥

ब्र० । वपने समाप्ते उप्त्वाय राज्ञ इति प्रागुदीचीं दिशं सुहृदा नीयमानाननुमन्त्रयते ॥

1. लोहा० the Mss of Devapāla 2. Emended, नताप्रायसं the Ms 3 R. : उप्त्वा उप्यमानान् ?

अरिक्ते पर्याश्लेषयत इति श्रुतिः ॥ १६ ॥

दे० । अरिक्ते दूर्वालतावनस्पतिप्रभृतौ शीतप्रदेशे समाश्लेषयते केशान्मित्रमिति श्रुत्या प्रतिपादितं । श्रुतिमूलमेतत्कर्मेति प्रदर्शितं । यत्र बाणा निष्पतन्ति कुमारा विशिखा इवेत्यादिना[1] ॥

ब्र० । तानूषरे लतादिबहुले शुचौ देशे वलित्वा सुहृत्स्थापयति । आज्येनाग्नेय्या वैश्वदेव्या वा प्रधानम्[2] ॥

आ० । अरिक्ते पर्याश्लेषयते । सुहृदोऽयमुपदेशो यदरिक्तसमाश्लेषणं ॥ इह चाङ्गानां दर्शनात्प्रधानस्य चादर्शनाद्देवताप्रज्ञायमाना आग्नेय्या यजेद्वैश्वदेव्या वा[2] । सत्यपि विकल्पे वैश्वदेव्या युक्तं धातृप्रभृतीनां देवतानां प्रदर्शनात् । एवविधानात्[3] स्विष्टकृदाज्येनापि भवत्युभयार्थत्वात् ॥

कर्त्रे वरं ददाति ॥ १७ ॥

दे० । ऋत्विजे वरं दक्षिणा यथाशक्ति ददाति यजमानः । चतुर्वर्षा गौर्दक्षिणात्रेत्याहुः ॥

ब्र० । स्विष्टकृति हुते होमकर्त्रे वरदानम् ॥

आ० । पष्ठौही चतुर्वर्षा गौर्वर इत्युच्यते ॥

पक्ष्मगुणं तिलपेशलं[4] केशवापाय प्रयच्छति ॥ १८ ॥

दे० । सूक्ष्मैरूर्णीगुणैर्वेष्टितं तिलपात्रं नापिताय ददाति ॥

ब्र० । संस्थिते केशग्रथनयोग्यं नीललोहितादिसूत्रं कौमारं तिलमाषकृसरं च नापिताय प्रयच्छति ॥

आ० । पक्ष्मगुणमौर्णगुणवेष्टितं तिलपूर्णं शरावं च केशवापाय नापिताय प्रयच्छतीत्याख्यातनिर्देशः । नतुलिध्यौलिङ्गी[5] । तस्मान्नायं ददाति

---

1. Cp. Devapāla on XL. 7. 2. Cp. LXXIII. 3. 3. R, एवंवि० ? 4. ०पेशलं Br. and of the Mss. of Devapāla T, and the Stein Ḷcaka: ०पिशलं ACD. the Parisian, Berlin and Tuebingen Ḷcakas. * 5. Reading uncertain, perhaps नत्त or नर्त instead of नतु, लिङ्गी could be read perhaps also लिटी or लिङ ।

वत्स्यः[1] । तेनात्राप्यपूर्वं दानं न भवति । ददातिसाद्दश्यात्पात्राय. चतुर्थी ॥

सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् ॥ १९॥४०॥ ( ३।१६ ).

दे० । गतार्थम् ॥

ब्र० । घृतबहुलं ब्राह्मणानाशयेत्[2] ॥

दे० । चूडाकरणे ऽङ्गनिर्देशात्प्रधानानभिधानाप्रधानमाज्येनाग्नेय्या वैश्वदेव्या वा[3] कर्तव्यमित्याहुः । यद्धोपसमाधायेत्यनेनाज्यभागान्तरमुक्तं[4] तदेव प्रधानं । येषां त्वग्निसंस्कारमात्रमुपसमाधानं तेषां पूर्वं प्रधानम् ॥

आ० । केचिद्यथोक्तमुपसमाधायेत्येतदाज्यभागान्तं व्याचक्षते । जयप्रभृतिभिर्जुहोति पुनर्जयादिहोमः । जयादीनेव प्रधानं मन्यन्ते । ते प्रष्टव्याः । उपसमाधानशब्देनाज्यभागान्तत्वं सिद्धं । तैर्देवताप्रज्ञायमानेत्यस्य विषयो वक्तव्यः । दक्षिणाग्नेरेकोल्मुकमुपसमाधायेत्याज्यभागान्तं प्राप्नोति । तस्मादुपसमाधानशब्देनाग्नेर्योग्यताकरणमुच्यते । समाधानं तावत्स्थापनं तत्समीपे । अन्यच्च होमसाधनसंस्कं क्रियते । इत्युपशब्दार्थः । यथोक्तशब्देन सेतिकर्तव्यता कंसमन्त्रकमुच्यते । अग्नेर्लक्षणसमाधानमारभ्य यावदाज्येनेक्षणमुपसमाधानं । जयप्रभृतिभिर्हुत्वेत्यनेन तन्त्रमुपलक्षयति । प्रभृतिशब्दो ह्यधस्तमुपलक्षयति गुरु सूत्रकरणात् । तस्माद्यथैवास्माभिर्व्याख्यातं तथैव साधीयः ॥

## इति लौगाक्षिसूत्रे गृह्यपञ्चिकायां तृतीयोऽध्यायः ॥

---

सप्तमे वर्षे ब्राह्मणस्योपायनम् ॥ १ ॥

दे० । जन्मनः प्रभृति सप्तमे वर्षे गर्भाष्टमे ब्राह्मणस्योपायनमाचार्यसमीपगमनमेखलाबन्धनसंस्कारः प्रधानभूतः । तस्मिन्हि सति श्रुतिस्मृत्यधिकारी भवत्यत एव द्वितीयं जन्म स्मर्यते —

---

1. or वन्द्यः ? 2. Under XXXVI. 4. 3. वा inserted by me. 4. R. ०गान्तमुक्तं ?

प्रथमं मातृतो जन्म द्वितीयं मौञ्जिबन्धनात् ।
अत्रास्य[1] माता सावित्री पिता त्वाचार्य उच्यत इति[2] ॥

आ० । सप्तरो वर्षे ब्राह्मणस्योपायनं जन्मावधि कृत्वा । उपायनमुपनयनं मौञ्जीबन्धनं बटुकरणं व्रतबन्ध इत्यनर्थान्तरं[3] । ब्राह्मस्येति प्रागप्युपयनाद्ब्राह्मणोऽसौ शूद्रेण हि समस्तादित्ययमर्थवाद[4] एव ब्रह्मभिर्व्याहारप्रतिषेधापरम् ॥

नवमे राजन्यस्य ॥ २ ॥

दे० । आवेष्ट्यधिकरणनयेन राजा क्षत्रियः । तस्यापत्यं राजन्यः क्षत्रियदारकः । तस्य जन्मप्रभृति नवमे गर्भाद्दशमे उपायनम् ॥

एकादशे वैश्यस्य ॥ ३ ॥

दे० । समानं पूर्वेण ॥

आ षोडशाद्ब्राह्मणस्यानतिक्रम आ द्वाविंशाद्राजन्यस्या चतुर्विंशाद्वैश्यस्य ॥ ४ ॥

दे० । सर्वत्राभिविधावाङ् । ब्राह्मणस्य षोडशवर्षान्तं यावदुपायनकालानतिक्रमः । एवं द्वाविंशान्तं यावत्क्षत्रियस्य । आ चतुर्विंशाद्वैश्यस्य ॥

आ० । सप्तमाद्वर्षादारभ्य यावत् षोडशस्तावदुपनयनकाल इत्यर्थः ॥ केवलं प्रथमकल्पानुकल्पापकल्पकृतो विशेषः । न च प्राक् षोडशाद्वर्षात्क्रियमाणे किञ्चित्प्रायश्चित्तं । आ[5] इत्यभिविधौ[5] व्याप्तिन्यायात्[5] । द्व्यधिका वैश्यस्येति गौतमवचनाद्[6] द्वाविंशतिर्द्व्यधिका पूर्णा चतुर्विंशतिर्भवति । तेन यावच्चतुर्विंशतिस्तावद्वैश्यस्यानतिक्रमः[7] । उपनयनकालोऽस्या षोडशादुपनयनकालो ब्राह्मणस्य नातिक्रामति । सप्तदशे प्राप्ते त्वतिक्रमः । एवमा द्वाविंशादा चतुर्विंशाद्राजन्य-

---

1. अस्य supplied by by me. 2. Cp. Manu II. 169, 170. Viṣṇusmṛti 28. 36, 37: the last line is taken from Vasiṣṭhadhs. II. 3. 3. R. इत्यर्थान्तरं ? 4. समस्ताद् must be corrupt: I. perhaps सम । 5. Thus, hesitatingly, emended: आदित्यभिर्विधौव्याप्तिन्र्थायात् the Ms. 6. Gaut. dhs. I. 14 (Var. read.) 7. ०विंशतिभिस्ताव० the Ms.

वैश्ययोः । अत ऊर्ध्वमतिक्रमः । अतिक्रमे सति प्रायश्चित्तं । येषां द्विजानां सावित्री नानूच्यते यथाविधि । तांश्चरयित्वा त्रीन्कृच्छ्राण्यथाविध्युपनाययेत् ॥

स्नातोप्तकेशे यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा रेवतीस्त्वा व्यक्ष्णन्कृत्तिकाश्चक्रतुस्त्वापसस्त्वा व्यतन्वत धियो ऽवयन्नव ग्रा अमृजन् । सहस्रमन्ताँ[1] अभितो ऽदद‍न्ताशीतीर्मध्यमवयन्नु[2] नारीरित्यहतं वासो ऽभिमन्त्रयते ॥ ५ ॥

दे० । स्नातश्चासावुप्तकेशो मुण्डितशिरास्तस्मिन्माणवके उपस्थिते सति । यथाविध्युपसमाधानं वह्निसंस्कारमुद्धतसिक्तोपलिप्तभूविशेषे स्थापनं परिसंवहनं[3] पर्युक्षणं परिस्तरणं च कृत्वाज्यं चोपनिधाय विलाप्य संवीक्ष्य दण्डमेखलादीं यथोपयोगमानीयोपनेता जयप्रभृतिभिर्ऋतुनक्षत्राद्यन्तैः हुत्वा रेवतीस्त्वेत्यादिकया ऋचायाहतमभुक्तं[4] नवं वासो हस्ते निधायाभिमन्त्रयते ॥

ब्र० । शुक्लपक्षस्य पुण्याहे कुमारं कृतकेशवपनमाप्लावितमलंकृतमाचार्य आत्मनो दक्षिणत उदङ्मुखं प्राङ्मुखं वोपवेश्य यथोक्तमुपसमाधाय

1. Thus the Berlin and Tuebingen Śeakas, अन्तां the Lahore Ms. of Br., and the Mss. of Devapāla, अन्ताम् the Bombay Ms. of Br.　2. Thus ( ददन्ता° ) C and first hand of D, the Lahore Ms. of Br. and the Stein Śeaka; ददन्तामशो° DA ; दधन्ताशी° the Bombay Ms. of Br. The Mantrabhāṣya of Devapāla deviates from this reading; it starts from अभितोतयच्छन् (cp. the Mantrapātha ed. Winternitz, page 33) and interprets : उतेति निपातः । अयच्छन् बबन्धुः । The source of this verse is apparently the Paippalāda Saṃhitā (book XV), where it runs : रेवतीस्त्वा व्यक्षणं कृत्तिका चक्रतुस्त्वा अभिशस्त्वा पृतन्यतु । धियो वयन्नवा ग्रा आयुर्वत्तम् । सहस्रमन्ता अभितो रदन्ताशीतिर्मध्यमभयंतु नारीः ॥ Instead of चक्रतुः read चकृतुः and अशीतिः instead of अशीतीः ॥　3. R. °समूहनं.　4. Emended. अद्भुतं instead of अभुक्तं the Mss.

परिसमूह्य पर्युक्ष्य परिस्तीर्य वसनादिकं संनिधाप्य पात्राणि प्रयुञ्ज्यात् । प्रोक्षणीः साधयित्वा तानि प्रोक्ष्याज्यं संस्कृत्य चतुर्गृहीतमुद्धृत्याघारादाज्यभागान्तं हुत्वा रेवतीस्त्वेत्यहतमधोवासो ऽभिमन्त्रयते ॥

आ० । एवं कालं विधाय शुद्धपक्षादौ स्नातोप्तकेशे माणवके । अत्र क्रमस्याविवक्षा । तेन पूर्वमुप्तकेशः पश्चात्स्नातः स्नातोप्तकेशे । आचार्यस्य दक्षिणमूरुं प्रत्युपविष्टे यथोक्तमुपसमाधाय । उद्धतावोक्षितेऽग्निं समाधाय । परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यं निरुप्याधिश्रित्यावेक्ष्य वासो दृष्यश्ममेखलाजिनपूर्वमुपसंनिधाय जयप्रभृतिभिर्हुत्वा । आघारादाज्यभागान्तं हुत्वेत्यर्थः । रेवतीस्त्वा व्यक्षणन्नित्यनया शाकर्याहतमनध्युषितं[1] वासो ऽनुमन्त्रयेत् ॥

देवीर्देवाय परिधे[2] सवित्रे परिधत्त वर्चस इमं[3] शतायुषं कृणुत[4] जीवसे कमिति परिधापयति[5] ॥ ६ ॥

दे० । अनेन यजुषा वासः परिधापयति । एष मन्त्रस्त्रयाणां वर्णानां परिधापने साधारणो ऽधोवाससः । उत्तरीयं वक्ष्यते ऽजिनम ॥

ब्र० । देवीर्देवायेति प्राङ्मुखं परिधापयति । मन्त्रमाहाध्वर्युः परिधत्ते माणवकः ॥

आ० । देवीर्देवायेत्यनेन यजुषा कमित्यन्तेन परिधापयत्याचार्यः । परिधत्ते माणवकः । कृष्णाजिनमुत्तरीयं भविष्यति तेनैतद्वस्त्रपरिधानं । अर्थे वासो न प्रतिषिध्यते । आशिष्टप्रतिषिद्धं तत् ॥

---

1 ०तुध्युषितं the Ms 2 In his Bhāṣya Devapāla presupposes परिधत्त । 3 D on the marge नयेमं शतायुषमित्यपि पाठः (the intention is probably to read वर्चस इमं नय शता०), and to this reading the Bhāṣya refers 4 कृणोतु Br. and the Stein Ṭeaka: the beginning of this Mantra runs according to the Paippalāda Saṃhitā (Book XV) देवीर्देवाय परिदे सवित्रे । 5 ०यते the Mss of Devapāla 6 Or आशि० ?

जरां[1] गच्छ परिधत्स्व वासो ऽभूरापीवानभिशस्तिपावा[2] । शते च जीव शरदः पुरूची रायंश्च पोषमुपसंव्ययस्व ॥ परीमं सोमं तेजसे महे श्रोत्राय दध्मसि । यथैनं जरसं नयज्ज्योक्छ्रोत्राय जागरज्ज्योक्छ्रोत्रे ऽधि जागरदिति ब्राह्मणस्य । परीममिन्द्रमोजसे महे क्षत्राय दध्मसि । यथैनं जरसं नयज्ज्योक् क्षत्राय जागरज्ज्योक् क्षत्रे ऽधि जागरदिति राजन्यस्य । परीमं मनुमायुषे महे पोषाय दध्मसि । यथैनं जरसं नयज्ज्योक् पोषाय जागरज्ज्योक् पोषे ऽधि जागरदिति वैश्यस्य । परीदं वासोऽधिथाः[3] स्वस्तये भवापीवानभिशस्तिपावा । शतं च[4] जीव शरदः सुवीरो वसूनि चोग्रो विभजस्व जीवन्निति परिहितवाससमनुमन्त्रयते योगे योगे युवा सुवासा इति चैताभ्याम् ॥७॥

दे० । जरां गच्छेत्यादिभिः परिहितवाससमनुमन्त्रयते इत्यादित्यदर्शनः[5]। न त्वेवमाचारः आचार्याणां नापि मन्त्रलिङ्गमेवमिति योऽन्यथा

1. This sūtra is given according to Br., as the Mss. of Devapāla give only its Bhāṣya and then the Mantras separately. Moreover, Devapāla connects the last words, which follow after अनुमन्त्रयते, with the next sūtra. In the Parisian Ṭeaka we find only: जरां गच्छेति पञ्चभिः परिहितवाससमनुमन्त्रयते, then the Mantras and again परिहित० । 2. Thus Devapāla (and his Bhāṣya: आपीवा भूः । आपीवा प्रवृद्धो भवेति ); Br. and the Berlin, Tuebingen and Parisian Ṭeakas: भूर्वापीवान० (and thus also the Paipp. S., book XV), but in the fifth Mantra they read all as given above. 3. धिथाः DA, and accordingly the Bhāṣya: पर्यधिथाः पर्यध्यधाः आधिक्येनोत्कर्षेण परिहितवानसि । 4. च given by the Tuebingen and Stein Ṭeakas only. 5. It is not clear which view of Ādityadarśana is disapproved by Devapāla. But perhaps instead of इत्यादिभिः it was his intention to say इति पञ्चभिः ।

कार्या[1] । एकैकस्यासाधारण इत्येकैकस्य वाससः परिधापने मन्त्र-त्रयं। तत्र देवोर्देवायेत्येको वर्णत्रयसाधारणः। जरां गच्छेति द्वितीयः साधारणः परिधापने । परीममित्यादीनां त्रयाणां यथाक्रममेकैकस्य साधारण इत्येकैकस्य त्रयः परिधापने मन्त्राः ॥

ब्र० । जरां गच्छ परीमं सोमं परीदं वासो योगे योगे युवा सुवासा इति पञ्चभिः परिहितवाससं ब्रह्मचारिणमनुमन्त्रयते । परीमं सोममित्यस्याः स्थाने परीममिन्द्रमिति राजन्यस्य । परीमं मनुमिति वैश्यस्य ॥

आ० । ततो जरां गच्छेति पञ्चभिः परिहितवाससमनुमन्त्रयते माणवकं। अनुमन्त्रणं नाम तच्चक्षुस्तन्मना मन्त्रं ब्रवीति । द्वितीया वर्णव्यवस्थायाः प्रयोगः । परीमं सोममिति ब्राह्मणस्य द्वितीया । परीममिन्द्रमिति राजन्यस्य। परीमं मनुमिति वैश्यस्य । तृतीयाद्याः[2] सर्वेषाम् ॥

अग्निमभिदक्षिणमानीयेह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतमिति दक्षिणेन पदाश्मानमास्थापयति ॥ ८ ॥

दे० । योगे योगे इत्यनेन युवा सुवासा इत्यनेन मन्त्रेण[3] अग्निं लक्षणीकृत्य प्रदक्षिणं यथा भवति तथा माणवकमानीय एह्यश्मानमातिष्ठेति मन्त्रेणाश्मानं दक्षिणेन पदा आस्थापयति अधिष्ठापयत्याचार्यः ॥

ब्र० । ततो वाससः परिधाननिमित्तमाचमनं ब्रह्मचारिणं कारयित्वा यज्ञोपवीतं परमं पवित्रमिति ब्रह्मसूत्रं परिधापयति । यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः[4] । आचार्य एवैतं मन्त्रमाह । यज्ञस्योप-

---

1. These words are incomprehensible to me. 2 ०द्यः the Ms. The verses परीदं वासो ऽधिथाः, योगे योगे and युवा सुवासाः are meant. 3. Cp. note 1 on page 163. 4 This Mantra belongs to the Katha text, probably the Āraṇyaka, cp. Schroeder, Die Tuebingen Katha-handschriften, page 23.

वीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामीति यदा स्वयं परिदध्यात् । ततः कृताचमनं पवित्रपाणिमग्निमभिदक्षिणमानीयेह्यश्मानमिति प्राङ्मुखं दक्षिणेन पदाश्मानमास्थापयति ॥

आ० । ततः परिहितवाससमनुमन्त्रितं यज्ञोपवीतिनमग्निमभिदक्षिणमानीय यज्ञोपवीतं परिधापयति । मैत्रायणीयके । उप्तकेशः स्नातोऽलंकृतो यज्ञोपवीत्याचार्यसमीप उपविशति । तत्र प्रागपि वासःपरिधानाद्यज्ञोपवीती[1] । एह्यश्मानमातिष्ठेत्यश्मानमाक्रमयति दक्षिणेन पदा ॥

मम व्रते हृदयं ते ददामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यमिति नाभिदेशादूर्ध्वं पाणिनोन्मार्ष्टि ॥ ९ ॥

दे० । मम व्रत इत्यादिना मन्त्रेण नाभेरारभ्य शिखान्तं यावद्ब्रह्मचारिण आचार्य उन्मार्ष्टि ॥

ब्र० । मम व्रत इति पाणिनोर्ध्वाङ्गुलिना नाभिदेशादारभ्योर्ध्वमा शिरस उन्मार्ष्टि ॥

आ० । मम व्रत इत्यनया त्रिष्टुभा.. तमाचार्य उन्मार्ष्टि शोधयति ॥

दधिक्राव्ण इति त्रिर्दधि भक्षयित्वा[2] ब्रह्मचर्यमागामुप मा नयस्वों भूर्भुवः स्वरिति वाचयति ॥ १० ॥

दे० । ब्रह्मचारी वक्ति तमाचार्यो वाचयति ब्रह्मचर्यमित्यादि[3] स्वरित्यन्तं । किं कृत्वा । आचान्तो ब्रह्मचर्यमित्यादि ब्रह्मचारी पठति गुरुपाठितः सन्निति तात्पर्यम् ॥

---

1. The Maitrayaniyaka here referred to is probably the Mānavagṛhyasūtra cp. this text I 22 2 The words are not quoted, but this authority is cited to indicate the moment of the yajnopavītadhārana. 2. Br. the Parisian, Berlin and Tuebingen Leakas insert here ततः कृताचमनं; in Ād. there is no trace of them, but Devapāla seems to allude to them. 3. ०मित्याह the Mss.

ब्र० । दधिक्राव्ण इति त्रिर्दधि प्राशयित्वा । ततः कृताचमनं ब्रह्मचर्य-
मागामुप मा नयस्वेति वाचयित्वर्षादिकं स्मृत्वा कृतपादोप-
संग्रहणं प्रत्यङ्मुखं पश्चादग्नेर्दर्भेष्वासीनं प्रणवं व्याहृतीश्चाध्यापयति ॥

आ० । दधिक्राव्ण इत्यनया त्रिर्दधि भक्षयति । ब्रह्मचर्यमागामिति व्या-
हृत्यन्तं वाचयति । अध्यापयतीत्यर्थः ॥

इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती म आगात् । प्राणा-
पानाभ्यां बलमाभजन्ती सुखा[1] देवी सुभगा मेखलेयम् ॥ ऋत-
स्य गोप्त्री तपस्तरुत्री घ्नती रक्षः सहमाना अरातिम् । सा नः
समन्तमनुपरेहि भद्रे भर्तारस्ते मेखले मा रिषाम ॥ श्रद्धाया
दुहिता तपसोऽधि जाता स्वसर्षीणां मन्त्रकृतां बभूव । सा
मा मेखले परिरेरिहस्व मयि धेहि[2] तप इन्द्रियं चेति वाच-
यन्मेखलाबध्नीते[3] ॥ ११ ॥

दे० । इयं दुरुक्तादित्यादिकौ[4] त्रिष्टुभौ[4] वाचयन्नाचार्यो मेखलामाबध्नीत ।
ब्रह्मचारी वक्ति गुरुर्वाचयति ॥

ब्र० । तत इयं दुरुक्तात्परिबाधमानेति वाचयन्मेखलां त्रिः प्रदक्षिणमा-
बध्य[5] ॥

आ० । तत इयं दुरुक्तादिति तिस्रस्त्रिष्टुभो माणवको वक्ति । आचार्यो
वाचयन्मेखलामाबध्नीते ॥

मौञ्जीं त्रिवृतं[6] ब्राह्मणाय प्रयच्छति मौर्वीं धनुर्ज्यां राजन्याय
सौत्रीं वैश्याय ॥ १२ ॥

---

1. Devapāla reads and explains सखा, but see also the Mekhalābrāhmaṇa in Versl. en Meded., page 195. 2. Thus the Lahore Ms. of Br., the Parisian ṛcaka and Devapāla in his Mantrabhāṣya; all the others देहि । 3. Thus the Lahore Ms. of Br., the Berlin and Stein ṛcakas, cp. Ād. on sūtra 12; आबध्नीति the Bombay Ms. of Br. and the Parisian ṛcaka. The Mss. of Devapāla: आबध्नीत. 4. Sic! 5. त्रिः परिहृत्य the Bombay Ms. 6. त्रिवृतां all, exc. Ād.

दे० । मौञ्जीं सप्तमुञ्जनिर्मितां त्रिवृतां त्रिगुणवेष्टितां बिभ्रद्द्विजस्तु नवकं[1] । तत्र त्रिवृता यूपं परिवीयेत्यादौ[2] रज्जोस्त्रिगुणायां त्रिवृच्छन्दः[3] त्रिवृत्स्तोम इत्यादौ त्रिवृच्छब्दो नवके । इहापि रज्जोस्त्रिगुणायां त्रिवृच्छब्दः । तथा सदाचारात् तेन भ्रान्त्या केचिन्नवगुणां मेखलां व्याचक्षते । मूर्वा नाम तृणविशेषः । तस्य विकारो मौर्वी । तां धनुर्ज्यां धनुषः प्रसार्य गुणं राजन्याय प्रयच्छति । सौत्रीं वैश्यस्य । सामान्याभिधानेऽपि स्मृत्यनुसारेण कर्पाससूत्रमयीमादौ प्रयच्छति ततो बध्नीयादिति क्रमो बोद्धव्यः ॥

आ० । किंभूतां । मौञ्जीं सप्तमुञ्जां त्रिवृतां त्रिगुणां त्रिः परिवृतां च ब्राह्मणाय प्रयच्छति । पूर्वं ददाति पश्चात्तु वाचयन्नाबध्नीते । त्रिवृच्छब्दो नवके सर्वत्र वेदे । शुष्कमीमांसकास्तु स्तोमविषयं नवकमिच्छन्ति । ते ऽनधीतवेदत्वात्पदार्थानभिज्ञत्वाच्चावधीरणीयाः । यतो मेखलामधिकृत्य श्रुतिः । त्रिवृद्भवति त्रिवृता वै स्तोमेनेति[4] मेखलां गतं त्रिवृत्त्वं[5] स्तोमे नवकेन स्तूयते । तथा नवाश्रिमभिचरणीयां कुर्यान्त्रिवृद्वज्र इति[6] । मौर्वी मूर्वा गुच्छविशेषः श्रीपर्वतादौ प्रसिद्धः । तत्कृत्या ज्या धनुर्गुणः राजन्याय धनुषः अपनीय । सौत्रीं वैश्यस्य सत्यपि विशेषे शणसूत्रकृताम् ॥

**चित्तस्य समोऽसि दैव्यो ग्रन्थिरसि मा विस्रंस इति[7] ग्रन्थिं कृत्वा मित्रस्य चक्षुर्धरुणं बलाय तेजो यशस्वि स्थविरं समृद्धम् । अनाहनस्यं वसनं चरिष्णु परीदं वाज्यजिनं दधे ऽयमिति वाच-**

---

1. Part of a Śloka ? 2. Thus emended (cp. Kāṭh. XXVI. 6: 128. 167. परिचेये० the Mss.: the passage is probably cited from the yajnasūtra. 3. त्रिवृच्छब्दः ATD. 4. See Kāṭh. XXIII. 4: 78.10. 5. Reading (partly effaced) uncertain. 6. See Kāṭh. XIX. 6: 7.16. 7. After इति the Bombay Ms. of Br. ins. त्रिगुणं प्रवरसंख्यया वा, they are found also in the Stein —, not in the Parisian ṭeakas nor in the Lahore Ms. of Br.

**यन्नैणेयं चर्म ब्राह्मणाय प्रयच्छति वैयाघ्रं राजन्याय रौरवं वैश्याय ॥ १३ ॥**

दे० । चित्तस्य समो ऽसीत्यनेन मन्त्रेण मेखलाग्रन्थिं कृत्वा । शिखावद्यथाकुलप्रसिद्धि । त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वेत्यादिस्मरणात्[1] । मित्रस्येत्यादि वाचयन्नैणेयं कृष्णमृगस्य संबन्धि चर्म ब्राह्मणाय प्रयच्छति राजन्याय व्याघ्रचर्म रुरुचर्म वैश्याय । मेखलग्रन्थौ चर्मदाने च त्रयाणां साधारणौ मन्त्रौ ॥

ब्र० । चित्तस्य समोऽसीति त्रिगुणं प्रवरसंख्यया वा ग्रन्थिं करोति । द्विप्रवरादीनां मन्त्रावृत्तिः[2] । मित्रस्य चक्षुरिति वाचयन्नजिनं परिधाप्य ॥

आ० । चित्तस्य समोऽसीति ग्रन्थिं कृत्वाचार्यः त्रिवृतं । अनेकमपि प्रवरव्यवस्थायाः । स्मृते[3] तथा च मनुः—

> मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
> त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा[4] ॥

मित्रस्य चक्षुरित्येतां त्रिष्टुभं वाचयन्नैणेयं चर्म ब्राह्मणाय प्रयच्छति। एणी कृष्णशारी । तस्याश्चर्मैणेयं । रौरवं रुरुचर्म वैश्याय । तदुत्तरीयम् ॥

**तच्चक्षुरित्यादित्यमुपस्थापयति ॥ १४ ॥**

ब्र० । तच्चक्षुरिति वाचयित्वादित्यमुपस्थापयति ॥
आ० । उपस्थापयति । माणवक उपतिष्ठते ॥

**को नामासीत्युक्तेऽभिवादने प्रोक्तेऽसा[5] अहं भो इति प्रत्याह॥१५**

दे० । गुरुराह को नामासीति । क इति प्रजापतिनाम । तथा च

1. See Manu II. 43. 2. मन्त्रवृत्तिः the Ms. 3. Read perhaps स्मृतेः (belonging to the preceding passage). 4. Manu II. 42 and 43. 5. Thus DCT (without the avagraha); असा Br., the Stein Parisian and a Bombay rcaka ; असाव् A.

ब्राह्मणं[1] । को नामासीति प्रजापतिर्वै को नामेति । वेदग्रहणाभिमुखत्वात्प्रजापतिरिवासीति स्तुतिच्छलकेन । साक्षाद्धि प्रश्नोऽयं प्रतिवचनविधानात् । गुरुणा पृष्टः शिष्योऽभिवादयते । स्वनामोच्चारणेन असावित्युक्ते नाम प्रतीयात् । विष्णुमित्रोऽहमभिवादये भो इति ब्रह्मचारिणाभिवादितो गुरुः प्रत्यभिवादनमाह । प्लुतान्तप्रतिवादे प्रश्न इति स्मृतेः । आयुष्मानेधि सोम्य विष्णुमित्रा इति स्मृतेरपि । आयुष्मानेधि सोम्येति वक्तव्योऽन्त्याक्षरे प्लुत इति ॥

ब्र० । ततः को नामासीत्याचार्येणोक्तः पदावुपसंगृह्याभिवादये देवशर्माहं भोः इत्येवं प्रत्याह । आयुष्मान्भव सोम्य देवशर्मा३नित्येवं[2] प्रत्यभिवादनम् ॥

आ० । को नामासीत्याचार्येणोक्ते अभिवादने प्रोक्ते । अभिवादय इत्युक्ते असावित्यत्र[3] स्वनामोक्त्वा । अहं भो इति प्रत्याह । को नामासीत्याचार्यः पृच्छति । माणवकः अभिवादये यज्ञशर्मा अहं भो इति प्रतिवक्ति । अत्राचार्यः प्रत्यभिवादयेदिति स्मृतेः । आयुष्मान्भव सोम्य देवशर्मा३न् ॥

**देवस्य ते सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसा उपनयेऽसौ । सविता ते हस्तमग्रहीदग्निराचार्यस्तव । कस्त्वा कमुपनयेऽसौ काय त्वा परिददामि । कस्य ब्रह्मचार्यसि[4] । प्राणस्य ब्रह्मचार्यसीति प्रत्याह ॥ १६ ॥**

दे० । आचार्यो ब्रह्मचारिणो दक्षिणं हस्तं दक्षिणेन हस्तेन विवाहोक्तविधिना[5] गृह्णाति । देवस्य त इत्यादिना हे ब्रह्मचारिन् विष्णुमित्र अहमाचार्यो हरिशर्माभिधानस्त्वामुपनये इति शिष्यं स्वनाम्ना संबोध्य स्वनामोच्चार्य गृहीतहस्तो गुरुर्ब्रवीति । एकोऽसाविति शब्दः शिष्यसंबोधनं द्वितीय आचार्यनामोपलक्षणार्थः । सविता...... परिदधामि[6] । गृहीतहस्त एवाचार्य आह । कस्य...प्रत्याह । कस्य

1. Viz. the Upanayana brāhmaṇa, see Versl. en Meded. Kon. Ak. v. W. Afd. Lett. Ve. R., IVe. dl. (1920), page 490.
2. This is written o शर्मन् । with ३ above the last akṣara.
3. oत्यत्रा the Ms.
4. Has an इति fallen out ?
5. See XXV. 21.
6. Devapāla reads constantly thus instead of ०ददामि ।

प्रजापतेर्ब्रह्मचार्यसीति भङ्गिप्रश्ने आचार्येण कृते सति शिष्यः प्रत्याह प्राणस्य ब्रह्मचारी असि भवामीत्युपगम्य भङ्ग्यैव प्रत्युत्तरं । प्राणो हि प्रजापतिरेव जगत्सूत्रभूतः । तथा च श्रुतिः–हिरण्यगर्भः पुरुषो महांस्त्वं प्राणो जगत्सूत्रमनादिरिन्द्रः । बोधः शुचिर्धर्मतद्न्तरात्मा तथा विधाता जगतोऽस्य[1] देवेति[2] ॥

ब्र०। ततः प्रत्याभिवादनादनन्तरं देवस्य त इति दक्षिणेन नीचा हस्तेनोत्तानं दक्षिणं साङ्गुष्ठं ब्रह्मचारिहस्तं गृह्णाति । अत्रासौशब्दस्थाने संबुद्ध्यन्तं नाम सर्वत्र ब्रह्मचारिणो ग्राह्यं । यथा । देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णामि देवस्वामिन् । उपनये देवस्वामिन् । अत्रासौशब्दे स्वं नामाचार्यो गृह्णातीति केचिद्वदन्ति[3] । मीमांसकास्तु नैतन्मन्यन्ते । ततः सविता ते हस्तमग्रहीदित्यादिगृहीतहस्त एवाचार्यो वक्ति । कस्त्वा कमुपनये देवदत्त इत्येव प्रयोगः ।

आ० । देवस्य ते सवितुः प्रसव इति माणवकस्य हस्तं गृह्णाति दक्षिणेन दक्षिणं परिभाषातः । असावुपनये इत्यत्राचार्यः स्वकं नाम गृह्णाति ततो माणवकस्य संबुद्ध्यन्तं । यथा । हस्तं गृह्णामि मैत्र उपनये मैत्र । गृहीतहस्त एवाचार्यो वक्ति सविता ते हस्तमग्रहीदिति । ततः काय त्वा परिदधामि कस्य ब्रह्मचार्यसीत्याचार्येणोक्ते प्राणस्य ब्रह्मचार्यस्मीति प्रतिवक्ति ॥

प्रजापतये त्वा परिददामि[4] । देवाय त्वा सवित्रे परिददामि । बृहस्पतये त्वा परिददाम्यसौ । देव सवितरेष ते ब्रह्मचारी तं गोपायस्व दीर्घायुः स मा मृत । अग्निपुत्रैष ते[5] । वायुपुत्रैष ते । सूर्यपुत्रैष ते । विष्णुपुत्रैष ते । ब्रह्मपुत्रैष ते ब्रह्मचारी तं गोपायस्व

1. ACT and first hand of D सि । 2. This verse is not known from any Saṃhitā. 3. Thus Ād. and Devapāla who follows *him*. 4. ०दधामि each time Devapāla (and Ād.). 5. Thus Br. and of the Mss. of Devapāla A: the other Mss. of Devapāla om. here and in the following pratīkas एष ते ।

दीर्घायुः स मा मृत[1] । ब्रह्मचार्यसि । अपो ऽशान । कर्म कुरु । दिवा मा सुषुप्सीः । वाचं यच्छ[2] ॥१७॥

दे० । असावित्याचार्यनाम प्रदर्शनार्थं ।...इदानीं गृहीतहस्तमेनमनुशास्ति । ब्रह्मचार्यसि...यच्छ । गुरुराह ॥

ब्र० । प्रजापतये त्वा परिददामीति नवभिः सानुषङ्गैर्गृहीतहस्त एव देवताभ्यः परिददाति । प्रजापतये त्वा देवाय त्वा बृहस्पतये त्वेति त्रयः । बृहस्पतये त्वा परिददामि विष्णुदत्तेत्येवं प्रयोगः । देव सवितरेष ते ऽग्निपुत्र वायुपुत्र सूर्यपुत्र विष्णुपुत्र ब्रह्मपुत्रेति षट् । ततो ब्रह्मचार्यसीति पञ्चभिरनुशास्ति । बाढमिति प्रत्याह ॥

आ० । ततः प्रजापतये त्वा परिदधामीति नवभिः सानुषङ्गैः परिददाति देवताभ्यः । गृहीतहस्त[3] एव यतो हस्ते गृहीत्वा लोके रक्षार्थं परिधीयते[4] । असौशब्दस्थाने सर्वत्र माणवकस्य नाम संबुद्ध्यन्तं । अग्निपुत्र वायुपुत्र सूर्यपुत्र विष्णुपुत्र ब्रह्मपुत्र इतेलोषङ्गानुषङ्गाः[5] आद्यास्त्रयः' । ततः पञ्चभिरनुशास्ति । ब्रह्मचार्यसि ।..इदानीं ब्रह्मचारी भवसि देवदत्त । प्रागुपनयनात्कामाचारवादभक्ष आसीः । अद्यप्रभृति नियमवान्भवसीत्यर्थः । तदुक्तं । उपनयनप्रभृति व्रतचारी स्यादिति[6] । अपो ऽशान । अद्यप्रभृति उपस्पर्शनं कुरु । नित्यं शुचिर्भव । कर्म कुरु । नैत्यकं शुश्रूषामध्ययनमग्नीन्धनभैक्षचरणादि च । दिवा मा सुषुप्सीरिति दिवास्वप्ननिषेधः । वाचं यच्छेति । अनृतामपि प्रियां चारुषतीं वाचं मा वोचः । अत्र प्रत्येकं बाढमित्युपगमः ॥

मेधां मह्यमिति[7] वाचयति । मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो ददुः[8] । मेधामग्निश्च वायुश्च मेधां धाता ददातु[9] मे ॥ मेधां मे

1. Something seems to be missing : इत्याह or इति परिददाति । 2. Perhaps supply : इत्येनमनुशास्ति । 3. परिगृहीत० the Ms. 4. R: ०दीयते । 5. Corrupt ! 6. See I. 1. 7. Cp. remark on IV. 9. Perhaps all what follows after वाचयति does not belong originally to the sūtra text. 8. दधुः Br. and the Stein, Tuebingen and Parisian Ṛcakas. 9. दधातु ACT and Br., ददातु D here and T at IV. 19.

वरुणो राजा मेधामग्निर्ददातु[1] मे । मेधामिन्द्रश्च सूर्यश्च मेधां देवी सरस्वती ॥ या मेधा अप्सरःसु गन्धर्वेषु च यन्मनः । दैवी मनुष्ये या मेधा सा मामाविशतादिह ॥ शरीरं मे विचक्षणं वाङ्मे मधुमद्दुहे । निशामितं निशामये मयि श्रुतम् ॥ यन्मेऽनूक्तं तद्रमतां शकेयं यदनुब्रुवे । प्रियाः[2] श्रुतस्य भूयास्म[3] मेधया संविधीमहि[4] ॥ अवृधमहमवृधस्त्वमसौ सोम्य[5] प्राणस्त्वं[6] मे गोपाय ब्रह्मण आणी[7] स्थ[7] श्रुतं मे मा प्रहासीदिति ।१८।

दे० । मेधां मह्यमित्यादिकाः पञ्चर्चः षष्ठं यजुः शिष्यो वक्ति गुरुर्वाचयति । अत्र चतुर्थी उष्णिक् शिष्टा अनुष्टुभः । अवृधमहमित्यादि षष्ठं यजुः[?]॥

ब्र० । अनुशासनादनन्तरं मेधां मह्यमिति पञ्चावृधमहमिति यजुर्युक्ता वाचयति ॥

आ० । एवमनुशिष्टं मेधां मह्यमिति षड्ऋग्यजुषाणि वाचयति ॥

एताभिरेव चैतसृभिरनुप्रवचनीयाञ्जुहुयाद्यजुषोत्तमां[8] छन्दोभ्यः स्वाहेति क्रतुनामधेयेन यथोपाचरितः क्रतुर्भवत्येवं सर्वाणि वेदोक्तानि ॥ १९ ॥

दे० । अनुप्रवचनं प्रयोजनं येषां ते अनुप्रवचनीया होमा इत्यन्वर्थसंज्ञा । अनु उत्तरकालं हि सावित्र्याः प्रवचनं ब्रह्मचारी कारयिष्यते गुरुणा । अनुप्रवचनमर्हन्तीत्यनुप्रवचनीयाः । अत्र हि मन्त्रानुपा-

---

1. दधातु Br. and A: all at IV 19. 2. प्रियः Br. and CT and A at IV. 19. the Tuebingen and Berlin ṛcakas. 3. भूयासं Br., A, DCT भूयास्स or भूयास्म, also at IV. 19. 4. As Devapāla in his Mantrabhāṣya explains: संबध्येमहि, perhaps the original reading was संविदीमहि । 5. सौम्य Br. only. 6. The correct reading is प्राण स्त्वं, cp. the Mantrapātha ed. Winternitz, page 38. 7. The Lahore Ms. of Br. and the Stein ṛcaka आणीः स्थ; the correct reading is आणी स्थः । 8. Thus all; perhaps we ought to read यजुषोत्तमाञ्छ०, taking यजुषोत्तमान् as a kind of Bahuvrīhi.

ध्यायो वक्ति शिष्यो ऽनुप्रवक्ति । अनुप्रवचनीयसंज्ञकान्होमानेताभिरेव प्रकृताभिश्चतसृभिर्ऋग्भिः कपिञ्जलाधिकरणन्यायेनाद्याभिर्जुहुयात् । तेन चत्वारो होमाः । पञ्चममाह । यजुषोत्तमामवृध-मित्यादिना[1] यजुषोत्तमामाहुतिं पञ्चमीं जुहुयादिति केचित् । अन्ये त्वाहुः । अत्र पक्षे पञ्चमस्या ऋचो विनियोगभावं[2] प्राप्नोति । उत्तमामिति स्त्रीलिङ्गनिर्देशो न युज्यते । प्रकृतस्यानुप्रवचनीयस्य पुंस्त्वात् । तदपेक्षयोत्तममिति[3] प्रसङ्गात् । न चाहुतिशब्दः प्रकृतो ऽस्ति । तस्मादुत्तमामृचं यजुषा सह संयोज्य पञ्चममनुप्रवचनीयं जुहुयादित्यर्थः[4] । षष्ठमनुप्रवचनीयहोममाह । छन्दोभ्यः स्वाहेति । क्रतुनामधेयेन...वेदोक्तानि । क्रतुरिह कर्म । कर्मनामधेयेन जुहुयात् । एष सप्तमो ऽनुप्रवचनीयहोमः । कथं क्रतुनामधेयेन होतव्यं । यथोपाचरितः क्रतुर्भवति । येन प्रकारेण प्रकृतं कर्मोपाचरितमिष्टं भवति तथा होतव्यं । चतुर्थीयोगेन स्वाहाकारेण चाभिधानशक्तियोगिना कर्मनामधेयेन । उपायनाय स्वाहेति । एवं सर्वाणि वेदोक्तानि । अनेनैव प्रकारेण सर्वाणि वेदोक्तानि कर्माणि स्वनामधेयेन छन्दोभ्यः स्वाहेति हुत्वा होतव्यानि । त्रैविद्यकाय स्वाहेत्यादिप्रकारेण[5] ॥

ब्र० । तत एताभिरेवाज्येन पञ्च प्रधानाहुतीर्जुहुयात् । यन्मे ऽनूक्तमिति पञ्चमीमवृधमहमिति यजुषा संधाय । छन्दोभ्यः स्वाहेति षष्ठी । उपायनाय स्वाहेति सप्तमी । ये के च ज्मेत्यष्टमी[6] ॥

आ० । अनुप्रवचनयोजनान्होमान्वाचयित्वा जुहुयादित्यर्थः । यजुषोत्तमाम् । उत्तमामृचं यजुषा सह संधाय जुहुयात् । अत्र पञ्च ऋचः षष्ठं यजुः । तत्र चतसृभिर्ऋग्भिश्चतुरो होमान्कृत्वा पञ्चमीमृचं यजुषा संधाय पञ्चमं होमं जुहुयादित्यर्थः । ये यजुषोत्तमामाहुतिं व्याचक्षते स्त्रीलिङ्गनिर्देशात्ते पञ्चमीमृचमुत्सृजन्ति । न चाहुतिशब्दः प्रकृतः यः स्त्रीलिङ्गेनोपस्थाप्यते । चतसृभिरित्यृचः प्रकृताः ।

---

1. यजुषोत्तमानवृ० A only. 2. ०भावः A only (the better reading ?). 3. ? ०मामिति ACT and first hand of D. 4. Cp. Br. and Ād. 5. Refers to Kaṇḍikā XLII. 6. Cp. LXXIII. 3.

तस्मादुत्तमामृचं यजुषा सहेत्येष एवार्थः यजुषेति सहार्थे तृतीया । एवकारः कर्मोपसंग्रहार्थीयः । एता एव वाचयेद्देताभिरेव होमः । सूत्रकारः सर्वत्र द्वितीये प्रयोगे एवकारं करोति । यथा । एतयैवाभिजुहोतीति । अत्र चतुर्थ्युष्णिक् । पंश्चम्यानुष्टुभा यन्मे ऽनूक्तमित्यनया मेधया संवृधीमह्यवृधमिति[1] यजुः संधीयते । एवं पञ्च हुत्वा छन्दोभ्यः स्वाहेति षष्ठो होमः । क्रतुनामधेयेनेति च सप्तमः। क्रतुः कर्म । कर्मनामधेयेन । यथोपाचरितः । येनैव नाम्ना क्रतुरुपाचरित उक्तः तेनैव नाम्ना जुहोति । उपायनाय स्वाहेति । उपायनशब्देनोपाचरितः । सप्तमे वर्षे ब्राह्मणस्योपायनमिति । अत्र देवताप्रज्ञायमाना द्रव्यदेवतानभिधानात्[2] तस्माद्वैश्वदेव्याष्टमो होमः ।...एवं सर्वाणि वेदोक्तानि । होमद्वयमेवातिदिश्यते । छन्दोभ्यः स्वाहेत्येकः क्रतुनामधेयेन च । वेदोक्तानि । यथा । चातुर्होतृकाय प्रवर्ग्यव्रताय चेत्यादि । सर्वातिदेशे सर्वं प्राप्नोति दधिभक्षसंस्थापनंमार्जनपरिदानवाचनादीनि केन वार्यन्ते भवन्तु चेत् । इति व्रतं पुनरुपनयनप्रसङ्गादिति प्रसङ्गः । ब्रह्मचर्यमागामुप मा नयस्वेति च केन वार्यते । तस्माद्धोमद्वयमेवातिदिश्यत इति माधवरातपादा[3] मन्यन्ते । मेखलादीनि यथा व्रतेषु प्रवन्ति[4] तथा तत्रैव दर्शयिष्यामः ॥

पश्चादग्नेर्दर्भेषु प्राङासीनः प्रत्यङ्ङासीनाय तत्सवितुरिति सावित्रीं त्रिरन्वाह पच्छो ऽर्धर्चशः सर्वामन्ततो यश्च मेधाकामः स्यात्[5] ॥ २० ॥

दे० । पश्चादग्नेर्दर्भेषूपविष्टः प्राङ्मुखो गुरुः प्रत्यङ्मुखायाचार्यसंमुखोप-

---

1. Note the variant instead of संविधीमहि । 2. ०देवतानाभिधा० the Ms. 3. Is Mādhavarāta the name of a commentator ? 4. R. perhaps प्रचरन्ति । 5. Without the least doubt these last words ( यश्च . . . स्यात् ) belong to the next sentence cp. *e.g.* Mān. gṛhs. I. 22. 17. but as the commentators are unanimous in connecting them with *this* Sūtra, I have not deviated from their view.

विप्राय शिष्याय सावित्रीं सवितृदेवतां तत्सवितुरित्यादिकां गायत्रीं त्रीन्वारानन्वाह । ब्राह्मणायेति ज्ञेयं । उपलक्षणमेतत् । राजन्यवैश्ययोर्हि साविञ्यावन्ये[1] स्मृति सदाचाराभ्यां बोद्धव्ये । अदब्धेभिः सवितरिति[2] राजन्यस्य । विश्वा रूपाणीति वैश्यस्य[2] कथमन्वाह । पच्छः । पादं पादं पच्छः । प्रथमोच्चारणे पादशो ब्रूयात् । द्वितीयानूच्चारणेऽर्धर्चशः । अर्धमृचोऽर्धर्चशः । अन्ते अन्ततः सर्वां । तृतीयोच्चारणे यथाशक्त्यनुसारं सर्वामृचमनुब्रूयात् । यश्च मेधां शिष्यस्य कामयते ऽसौ पच्छो ऽर्धर्चशः सर्वामन्ततो ऽनुब्रूयात् । तत्सवितुरिति व्याख्यातं । अदब्धेभिः ... ईशत ॥ विश्वा रूपाणि ... विराजति ॥ एते यथासंख्यं राजन्यवैश्ययोरनुब्रूयात् ॥

ब्र० । ततः पश्चादग्नेर्दर्भेषु प्रागग्रेष्वार्षादिकमनुस्मृत्य यथोक्तं सावित्र्यनुवचनं । तां सकृत्समस्योत्तमतोऽन्वाहेति[3] ब्राह्मणदर्शनादन्ततोऽर्धर्चेऽनुवाचनादौ[4] पादेनार्धेन चाध्यस्येत् । विश्वामित्र ऋषिः । गायत्रं छन्दः । सविता देवता । उपनयने विनियोगः । ओँ तत्सवितुः । तां सवितुरिति[5] त्रिष्टुभा राजन्यमुपनयेत् । विश्वा रूपाणीति जगत्या विश्यमिति गृह्यान्तरम्[6] ॥

आ० । पश्चादग्नेर्दर्भेष्वन्वाह । एतत्प्रवचनं यदर्थमनुप्रवचनीया होमा उच्यन्ते । पश्चादग्नेर्दर्भेषु प्राङासीनः प्राङ्मुख उपविष्टः प्रत्यङ्मुखायासीनायाचार्याभिमुखाय ब्रह्मचारिणे सावित्रीं तत्सवितुरिति

---

1. Conjectural reading. साविञ्यावर्हे D. साविञ्यवन्त्य CT, साविञ्यावने A. 2. The verses are Kāṭh IV. 10: 35. 18, XVI. 8: 229. 3. I am in some doubt as to the question, if the text of our Sūtra had not also a passage running somewhat like this त्रिष्टुभं राजन्याय जगतीं वैश्याय, but see the Bhāṣya of Br. (end). However, Ād. makes not the slightest allusion to them. 3. This is indeed a Brāhmaṇa of the Kaṭha texts. (Versl. en Meded. l. c. page 492). 4. Uncertain; the Bombay Ms.: ॰न्ततोवर्धर्चेनूवाचनादौ, the Lahore Ms.: ॰नन्तरतो वर्चोवस्येत् । 5. Kāṭh. XVIII. 4: 269. 1. 6. See *e.g.* Mān. gṛhs. I. 22. 13.

प्राक्प्रदर्शितां त्रीन्वारानन्वाह निगदतीत्यर्थः । प्रणवव्याहृतयः पूर्वा एवानूक्ताः । कथं त्रिरन्वाह । पच्छः पादशः पूर्वं पादं पादं विभज्य । ततोऽर्धर्चशः । सर्वां संहितामन्ततः तृतीये रूपे । यश्चान्तोऽपि मेधाकामः । प्रज्ञामिच्छन् । स्यात्सोऽप्येव[1] स्वाध्यायकाले । निष्कामस्तु प्रकृत्या ॥

पालाशमेकसरं दण्डं[2] नवनीतेनाभ्यज्य तस्य छायायां वाचयति सुश्रवः सुश्रवा असि यथा त्वं सुश्रवा अस्येवं मा सुश्रवः सौश्रवसं कुरु । यथा त्वं सुश्रवो देवानां वेदस्य निधिगोपोऽस्येवमहं ब्राह्मणानां ब्रह्मणो[3] वेदस्य निधिगोपो भूयासमिति ॥२१॥

दे० । पलाशस्यायं पालाशः । तद्दण्डमेकसरमवान्तरशाखारहितमृजुं सत्वचमव्रणं नवनीतेनाभ्यज्य स्वहस्तेन गृहीत्वा गुरुस्तस्य दण्डस्य संबन्धिन्यां छायायां शिष्यं व्यवस्थाप्य सुश्रव इत्यादि पाठयति ॥

ब्र० । सावित्र्युपदेशादनन्तरं नवनीतेनाग्रादारभ्य दण्डं सर्वतोऽभ्यज्य तच्छायोपविष्टाय सुश्रवः सुश्रवा असीति वाचयित्वा प्रयच्छति[4] ॥

आ० । पालाशं पर्णं दण्डमेकसरं[5] विशाखं सत्वक्कमृजुमव्रणं[6] नवतीतेनाञ्जयित्वा सूक्षयित्वा[7] यूपवदर्वाचीनमाचार्योऽभ्यज्य तस्य दण्डस्य छायायां स्थितं ब्रह्मचारिणं वाचयति सुश्रवः सुश्रवा असीत्यादि निधिगोपो भूयासमित्यन्तम् ॥

पालाशं दण्डं ब्राह्मणाय प्रयच्छत्याश्वत्थं राजन्याय नैयग्रोधं वैश्याय २२

दे० । एवं प्रकृतं दण्डं पालाशं ब्राह्मणाय ब्रह्मचारिणोऽनुवचनान्ते प्रयच्छत्याचार्यः । अश्वत्थो वटः । वैश्याय न्यग्रोधसंबन्धिनं प्रयच्छति ॥

---

1. Read ऽप्येवं ? 2. This word not in the Mss. of Devapāla, nor in the Lahore Ms. of Br., but cp. the commentaries; it must have been alien to the original text, which was: पलाशमेकसरं नव० । 3. Thus the Berlin and Parisian Lcakas; ब्राह्मणो the other Mss., but Devapāla in his Mantrabhāṣya starts from ब्रह्मणो । 4. Br. seems to combine Sūtras 21 and 22. 5. A पर्णदण्ड० ? 6. ०मृजुमन्व्रणं । अब्रह्मणं the Ms. 7. Sic !

आ० । ततः पालाशं दण्डं ब्राह्मणाय प्रयच्छति तमेवं संस्कृतं । पुनः पालाशग्रहणात्क्षत्रियवैश्ययोः पालाशच्छायायामेव स्थितयोः न तु प्रातिस्विकदण्डच्छायागतयोः क्षत्रियवैश्ययोः पालाशच्छायागतयोर्वचने मन्त्रगतो ब्राह्मणशब्दो[1] न विरुध्यते । ब्रह्मरूपत्वाद्ब्रह्मचारिणः । यथा[2] । अथ[2] यत्कृष्णाजिनी दण्डी मेखल्युपवीती च भवति तद्ब्रह्मणो रूपमिति[3] । क्षत्रियवैश्याभ्यामाश्वत्थनैयग्रोधावेव दीयेते[4] । वाचनमात्रं तयोः पलाशे[5] । तदेतदुक्तं पालाशं दण्डं ब्राह्मणाय प्रयच्छत्याश्वत्थं राजन्याय नैयग्रोधं वैश्यायेति ॥

स्मृतं च म इति वाचयति । स्मृतं च मे ऽस्मृतं च मे तन्मे उभयव्रतम् । निन्दा च मे अनिन्दा च मे तन्मे उभयव्रतम् । विद्या च मे अविद्या च मे तन्मे उभयव्रतम् । श्रद्धा च मे अश्रद्धा च मे तन्मे उभयव्रतम् । सत्यं च मे अनृतं च मे तन्मे उभयव्रतम् । मृतं च मे अमृतं च मे तन्मे उभयव्रतम् । श्रुतं च मे अश्रुतं च मे तन्मे उभयव्रतम् । व्रतं च मे अव्रतं च मे तन्मे उभयव्रतम् ॥ यद्ब्राह्मणस्य ब्रह्मणि व्रतं यदग्नेः सेन्द्रस्य सप्रजापतिकस्य सर्षिकस्य सपितृकस्य समनुष्यस्य समनुष्यराजन्यस्य सगन्धर्वाप्सरोजनस्कस्य ससर्पेतरजनस्कस्य सौषधिवनस्पतिकस्य सह ग्राम्यैः[6] पशुभिरारण्यैश्च साकाशस्य सप्रकाशस्य सातीकाशस्य सानूकाशस्य सह यन्म आत्मन आत्मनि व्रतं तन्मे सर्वव्रतम् ॥ इदमहमग्नौ समिधमभ्यादधाम्यग्ने सर्वव्रतो भवामि[7] ॥ २३ ॥

दे० । ··· मन्त्रलिङ्गादहमित्यनेन समिधमग्नौ प्रक्षिपति ॥

ब्र० । ततो गृहीतदण्डं स्मृतं च म इत्यादि सर्वव्रतो भवामीत्यन्तं प्रत्य-

---

1. Refers to the reading ब्राह्मणो ( instead of ब्रह्मणो ) in the Mantra of Sūtra 21. 2. यथाथ । the Ms. 3. Probably a quotation from the Yajnasūtra (Vrātyastoma). 4. दीयते the Ms. 5. R. पालाशे ? 6. Thus the Mss. of Devapāla and the Lahore Ms. of Br.; the Bombay Ms: ग्राम्यैश्च । 7. The last yajus also II. 1.

श्चरमेव वाचयति । अस्मिन्नवसरे भैक्षं चरतीत्युपाध्यायाः । स्वस्ति-
वाच्य भिक्षादानसंपूर्वमप्रत्याख्यायिन्यग्रे भिक्षेताप्रत्याख्यायिनीं वा[1]।
तत ऋतुतिथियागादि संस्थापयेत् ॥

आ० । ततो गृहीतदण्डं स्मृतं च मे इति वाचयत्यग्ने सर्वव्रतो भवामी-
त्यन्तं । अत्र समिद्दानं मन्त्रवर्णाद्ये कुर्वन्ति ते न्यायानभिज्ञाः ।
यस्मान्मन्त्रगतो भावशब्दो न विनियोजक इति युक्तमेतत् ॥

अधीते हैतेषां वेदानामेकं द्वौ त्रीन्सर्वान्वा यमेवं विद्वानुपनयत
इति श्रुतिः[2] ॥ २४ ॥

दे० । अधीत हेत्यादिकमुपनेतृस्तुत्यर्थं[3] । य एवं विद्वान्मन्त्रब्राह्मणज्ञः
सन्नुपनयते स एवोपनेतृत्वेऽधिकृतो नान्यः। स हि यमुपनयते स
एतेषां प्रसिद्धानां वेदानामनन्तशाखायुक्तानां मध्ये यथेच्छमेकं द्वौ
त्रीन्वा अधीते सर्वशाखाखचितान्। हशब्द इतिहासे । अतोऽनेन
संस्तुतत्वात् श्रौतमुपनयनं[4] संस्कारान्तरवत्स्मार्तं । अत एवोपनयन-
समर्थं अवश्यं कुर्वन्तीति केचित् । तदसत् । स्मार्तस्यापि अनु-
मितश्रुतिमूलत्वादप्रत्यक्षं तत्र विधिरिति केचित् । अर्थवादे ऽपि
समानता । यदपि भणति मन्त्रगतो न विधायक आख्यातशब्द इति
कृत्वा नेदमहमिति[5] एतेन समित्प्रक्षेपः कर्तव्य इति तदप्यमीमांसक-
भणितं । आख्यातस्याविधायकत्वे ऽपि लिङ्गात्प्रक्षेपासिद्धः[6] ॥

आ० । अधीते हैतेषामित्यर्थवादोपन्यासः । विद्वत्कर्तृस्तुत्यर्थः । एतद्ब्रा-
ह्मणार्थविदुषोपनयनं कर्तव्यं न तु कर्मपद्धतिपरिज्ञानमात्रेण । यमेवं
विद्वानुपनयते सो ऽवश्यं वेदाध्यायी भवतीति श्रुतेः ॥

कर्त्रे वरं ददाति ॥ २५ ॥

दे० । उपनेत्रे दक्षिणां ददाति ब्रह्मचारिणः स्वामी पिता तदभावे ज्येष्ठ-
भ्रात्रादिः ॥

---

1. Cp. Āśv. gṛhs. I. 22. 6-7. 2. This is a quotation from the Upanayanabrāhmaṇa. see Versl. en. Meded. etc. page 491. 3. ०मुपनयनस्तु० A. 4. C insert न. 5. This refers to the last yajus of sūtra 23.—Devapāla takes 23 and 24 together. 6. R. प्रक्षेपः सिद्धः.

ब्र० । स्विष्टकृति हुते वास आचार्याय वरं ददाति ॥

आ० । ब्रह्मचारिपिता[1] तावदि स्वामी कर्तव्यः ॥

अहःशेषं स्थापयेत् ॥ २६ ॥

दे० । नोपवेशयेत् । नापि संचारयेत् ॥

ब्र० । अहःशेषं ब्रह्मचारी नोपविशेत् । अन्यत्र भोजनाचमनावश्यकेभ्यः ॥

आ० । दिनशेषं नोपविशेदित्यर्थः । अर्थविरुद्धेषु कालेषु ॥

व्याख्यातं ब्रह्मचर्यम् ॥ २७ ॥ ४१ ॥ ( ४।१ )

दे० । ब्रह्मचर्यमुपक्रम एवोपनयनप्रभृति व्रतचारी स्यादित्यादिनोक्तं[2] । अतो न भूय उच्यते ॥

ब्र० । उपनयनप्रभृति व्रतचारी स्यादित्यग्नीन्धनान्तेन[3] व्याख्यातं ब्रह्मचर्यम् ॥

आ० । मार्गवासाः संहतकेश इत्यारभ्याग्नीन्धनान्तं । तदुक्तमुपनयनप्रभृति व्रतचारी स्यात् ॥ [4]श्रुतिग्रहणादुपनयनस्य प्राधान्यं दर्शयति । तेनान्येषां संस्काराणामभावे एतदवश्यं कर्तव्यं । तथा च गौतमः[5] । यस्य खलु संस्काराणामेकदेशोऽप्यस्ति स ब्रह्मणः सायुज्यं गच्छतीति ॥

---

त्रैविद्यकम् ॥ १ ॥

दे० । तिसृषु विद्यासु वेदत्रयात्मिकासु भवं ग्रहणं प्रयोजनं वा व्रतं तत् त्रैविद्यकं । वक्ष्याम इति शेषः ॥

आ० । तिसृषु विद्यासु भवं त्रैविद्यकं वेदत्रयार्थमित्यर्थः । व्याख्यास्याम इति शेषः । तदेव व्याख्यातं ब्रह्मचर्यं[6] । तत् त्रैविद्यकं वेदत्रयाध्ययनार्थम् ॥

आचार्यस्य विधिः ॥ २ ॥

दे० । यं प्रति कथ्यते[7] सो ऽप्रबुद्धो ब्रह्मचारी तेन व्यर्थ उपदेश इत्या-

---

1. ब्रह्मचारीपिता the Ms.   2. Cp. I. 1.   3. ०नान्ते the Mss.   4. The following passage refers apparently to sūtra 24.   5. Gaut. dhś. VIII. 25 (var. read.).   6. R. व्याख्यात-ब्रह्मचर्यं ?   7. कत्थते C.

शंक्याह । आचार्यस्य विधिः । आचार्येणानुष्ठितव्य इत्यर्थः ॥

आ० । तच्चाचार्यस्य विधिः आचार्येणानुष्ठापयितव्यं[1] । तथा चोक्तं[2]-

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यं च सन्ध्योपासनमेव च ॥

अष्टवर्षं ब्राह्मणमुपनयेतेत्याचार्यकरणकामो[3] ब्रह्मलोकावाप्तये आत्मनः शिष्यानुपनीयाध्यापयेत् । अत आचार्याधीनस्य त्रैविद्यकब्रह्मचर्यम् ॥

**यो वेदमधीते[4] पुरस्ताच्चोपरिष्टाच्चांहोमुग्भिः समिधो ऽभ्यादध्यात् ॥ ३ ॥**

दे० । अध्ययनस्यारम्भे समाप्तौ चांहोमुग्भिस्तिस्रः समिधोऽग्नावभ्यादध्यात् । स्वाहाकारशून्यं प्रक्षेपमात्रं कुर्यादित्यर्थः । अन्यथा जुहुयादिति ब्रूयात् । अंहसः पापाद्विमोचयन्तीत्यंहोमुचो मन्त्राः[5] ॥

ब्र० । त्रैविद्यकमाज्यं हविः । यथोक्तमुपसमाधायाज्यभागान्तं हुत्वा दक्षिणत उपविष्टस्य ब्रह्मचारिणो वसनमेखलाचर्मदण्डान् मन्त्रानावर्तयेत् । यद्देवा देवहेडनं यदि दिवा यदि जाग्रदित्यंहोमुचो वाचयन्समिदाधानं कारयित्वाग्ने व्रतपते वायो व्रतपते सूर्य व्रतपत इत्युपस्थापयति । अग्ने व्रतपते व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासं । वायो ··· । सूर्य ··· तेनर्ध्यासं । ततो ये के च ज्मेति वैश्वदेव्या । छन्दोभ्यः स्वाहा । त्रैविद्यकाय स्वाहेति प्रधानाहुतित्रयं हुत्वा[6] । पश्चादग्नेर्दर्भेषु प्राङासीनः प्रत्यङ्ङासीनायो भूर्भुवः स्वः सावित्रीमनूच्यार्षादिकं स्मृत्वेषे त्वेति त्रीननुवाकानन्वाह[7] ऋक्संहिताद्यं सूक्तं सामसंहिताद्यं साम । ऋचं वाचयित्वा नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह ॥ तत ऋतुतिथियागादि समापयेत् ॥

---

1. The akṣara प supplied by me. 2. Manu II. 69. 3. Uncertain. ०नेयेतेत्वाचार्य० the Ms. 4. These three words, given by Br., the Stein. the Parisian and two Bombay ṛcakas, are not found in Devapāla. Ād. comments upon them. In the Stein ṛcaka they are combined with the preceding sūtra. 5. The three verses Kāth. XXXVIII. 5 : 106. 6-11 are intended 6. See XLI. 19. 7. See IX. 4.

आ० । यो वेदमधीते ब्रह्मचारी स समिधो ऽभ्यादध्यात् । नाध्यापकः । आचार्यस्य विधिरिति वचनात्प्राप्तः । एते त्वाज्येन व्रतहोमाः । यस्मात्प्रवर्ग्यव्रतादौ स्थालीपाकेन होम इति वक्तव्ये यत्स्थालीपाकेन व्रतहोमा इत्युच्यते ततो ज्ञायते सर्वेषु वेदव्रतेषु व्रतहोमैर्भवितव्यमिति । तत्र स्थालीपाकेनेति वचनादिहाज्येन ते भवन्ति । चातुर्होतृके जयप्रभृतिग्रहणात्[1] तस्य चास्य च त्रैविद्यकस्यान्येषां चारण्यानां शुक्रियादीनां वेदव्रतस्य समानत्वादेकयोगक्षेमत्वात्सर्वाणि व्रतानि तन्त्रवन्त्येवेति । नात्र तन्त्रवत्त्वाशङ्कात्र कार्या । सर्वव्रतानां स्वाधर्म्यानुमापकेन व्रतहोमग्रहणेनैव तन्त्रवत्त्वे सिद्धे चातुर्होतृके जयप्रभृतिवचनं तेजोऽन्नाद्यवीर्यकल्पहविःष्वपि तन्त्रवत्त्वाय । एतेनैव न्यायेनानुक्तहोमेऽपि विहितसमिदाधानमात्रेतिकर्तव्यता के[2] त्रैविद्यके तन्त्रवत्त्वं सिद्धं । अन्ये तु । एवं सर्वाणि वेदोक्तानि[3] व्रतानीति वचनादविरुद्धोपनयनधर्मातिदेशात् मुख्यत्रैविद्यकाख्यवेदव्रतग्रहणोपक्रमहोमस्य तद्वत्तन्त्रं वा मेखलाजिनदण्डानां च मन्त्रावृत्तिः सिद्धा । समिद्दानं त्विह विशेषचोदितं व्रतोपायनादि चातिदेशात् उक्तं व्रतोपायनविमोचनमित्येव वर्णयन्ति । तथापि किं न छिन्नं सर्वथा तावत् त्रैविद्यकोपक्रमस्य तन्त्रवत्त्ववादिनो निरस्ताः । त्रैविद्यके तन्त्रं प्रदर्श्यते । आचार्यो यथोक्तमुपसमाधायाज्यभागान्तं कृत्वा दक्षिणमूरुं प्रत्युपविष्टस्य ब्रह्मचारिणो वासोमेखलाचर्मदण्डानां मन्त्रानावर्त्याहोमुग्भिः यद्देवा देवहेडनमिति तिसृभिः समिध आधापयित्वा । कृच्छ्रोक्तं व्रतोपायनमग्ने व्रतपते······तेनर्ध्यासमित्यनुषङ्गान्तं कारयित्वा । तत आज्येन त्रिकादिभिर्होमांश्चतुर्गृहीतैर्यथोक्तान्हुत्वा छन्दोभ्यः स्वाहा त्रैविद्यकाय स्वाहेति चतुर्गृहीतं हुत्वा । ततः पश्चादग्नेः प्राङासीनः प्रत्यङ्ङासीनाय मार्गवासा भवेत्याद्यग्नीन्धनान्तं ब्रह्मचर्यमादिश्यार्षस्मरणपूर्वमिषे त्वेत्यादित्रयीमन्त्रानाहादितस्त्रीननुवाकान्यजुर्वेदात् कस्त्वा युनक्तीति चानुवाकार्धं[4] । तत ऋतुतिथ्याद्याश्रावितान्तं

1. See XLIII. 3.   2. Thus the Ms.!   3. See XLI. 19.   4. Cp. IX. 4.

संस्थापयेत् । अनन्तरमुपाकृत्य[1] ग्राम्यमध्ययनं[2] यावदुत्सर्गः[3] । एतद्धोमकर्मसमिद्दानयुक्तं[4] वेदाध्ययनस्य पुरस्तादुपरिष्टाच्च समवन्ते[5] । तत्र व्रतविमोचनं विशेषः । मन्त्रे[6] प्रवर्ग्यव्रतं चरिष्यन्मेखलाजिनदण्डेषु मन्त्रानावर्तयेदिति वचनाद्ध्रियमाणानां वसनादीनां मन्त्रावृत्तिरेव सर्वव्रतेषु । तथा च मनुः[7]—

यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तत्तस्य व्रतेष्वपि ॥

इहापि पितृचरणवृद्धाः[8] स्मरन्ति—

वसनं मेखलां चर्म दण्डं समिधमेव च ।
व्रतालम्भं प्रधानं च कुर्यात्सर्वत्र तेष्वपि ॥

**उक्तं व्रतोपायनविमोचनम् ॥ ४ ॥ ४२ ॥ (४।२)**

दे० । व्रतस्योपायनं ग्रहणं मोचनं च परित्यागः । तद्द्वयमपि दर्शपौर्णमासयोरुक्तं । तथा च तत्रत्यं सूत्रं । पाणी प्रक्षाल्य दक्षिणेऽग्नेस्तिष्ठन्ब्रूयादग्ने व्रतपते वायो व्रतपते सूर्य व्रतपत इति ॥

आ० । उक्तं व्रतोपायनं व्रतोपालम्भो दर्शपूर्णमासकृच्छ्रादिषु[9] समाप्तौ च विमोचनम् ॥

---

**अथातश्चातुर्हौतृकम्[10] ॥ १ ॥**

दे० । चित्तिः स्रुगित्यादयो मन्त्राश्चतुर्होतार उच्यन्ते । तेषु भावं चातुर्हौतृकम् ॥

---

1. Emended (cp. IX. 1). ०रमपाकृत्य the Ms. 2. ग्राममध्य० the Ms. 3. Cp. IX. 10. 4. ०समिन्दान० the Ms. 5. How is it to be restored? 6. Read probably विशेषो मन्त्रः । प्रव० । 7. II. 174. 8. Apparently an authority for Adityadarśana. His father? 9. Is the text complete? 10. Thus constantly Br., Ād. and five ṛcakas; Devapāla alone: ०र्हौतृकं । In the text of Devapāla the sūtra proper is intermixed with the commentary. After ०र्हौतृकं he reads व्रतं, but it is impossible to decide if this word belongs to the text Dev. had before him.

ब्र० । चातुर्हौतृकमन्यत्राधीतमिह[1] श्रोत्रियाः पठन्ति ॥

आ० । चातुर्हौतृकमन्यत्रोक्तमिह[1] प्रयोगप्रस्तावाय श्रोत्रियाः पठन्ति । अथातश्चातुर्हौतृकं व्रतमुपक्रम्यते । अथशब्देन चातुर्हौतृकं व्रतमुपक्रम्यते । अङ्गफलाधिकारार्थश्चाथशब्दः । अतः शब्दो हेत्वर्थे ॥

**ब्रह्मचारिकल्पेन व्रतमुपैति ॥ २ ॥**

दे० । तद्ब्रह्मचारिकल्पेन व्रतचारिधर्मोपदेशिना वेदव्रतभागेन चोदितमुपेयात् ॥

आ० । ब्रह्मचारिकल्पेन मार्गवासाः संहतकेश इत्यादिना व्रतमुपैति । समिद्दानादिना व्रतोपायनं करोति । व्रतमध्यवस्यतीत्यर्थः । चातुर्हौतृकस्य ग्राम्यत्वमेव नारण्यत्वं । अविशेषेण च वेदव्रतत्वं सर्वेषां । तथा च संस्कारपंक्तौ गौतमः प्राह । चत्वारि वेदव्रतानि चतुर्होतारः शुक्रियोपनिषद्रुणानीति[2] ॥

**संवत्सरमष्टौ मासांश्चतुरो मासान्वा[3] ॥ ३ ॥**

दे० । संवत्सरमेतद्व्रतमुपेयादिति मुख्यः कल्पः । अष्टौ चतुरो मासान्वेत्यनुकल्पः ॥

आ० । भूयस्त्वाल्पत्वापेक्षः कालविकल्पः ॥

**शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पूर्वेणाग्निं दर्भस्तम्भं[4] निहत्य ब्राह्मणं[5] दक्षिणत उपवेश्य हिरण्यवर्णा इति चतसृभिः[6] समिधो ऽभ्यादध्यात् ॥ ४ ॥**

दे०।हुत्वेत्यन्तं व्याख्यातं। अग्नेर्यः पूर्वदेशस्तत्र दर्भस्तम्भं निहत्याधीतवेदमन्यं

---

1. Does this mean, that this rite has already been treated before (in the yajnasūtra)? This is also the case with the Mānavas. 2. But the printed text of Gautama (VIII. 15.) gives the first two words only. 3. मासान् om. A. 4. Thus (not ०स्तम्ब० ) all, without any exception. The Ms. Ch of the printed Kāṭhaka text presents the same reading. 5. ब्रह्माणं D and the Stein Ṛcaka (cp. also Br., who presupposes the same reading), but see Kāth. IX. 16: 119.19. 6. Cp. Br. at the end of his explanation of this sutra.

ब्रह्मचारिणमग्नेर्दक्षिणभाग उपवेश्याग्नेः पश्चार्धे व्यवस्थितः स हिरण्यवर्णा इत्यादिभिश्चतसृभिश्चतस्रः[1] समिधोऽभ्यादध्यात् ॥

ब्र०। चतुर्होतृभ्यश्छन्दोभ्यश्चातुर्होतृकाय[2] जुष्टं निर्वपामीति यावकान्नाद्यपायसानाम्[3] एकतमस्य निर्वापः। आज्यभागान्ते पूर्वेणाग्निं सलोष्टगोमये षट्पञ्चाशद्दर्भांकुरैर्ब्रह्मप्रकृतिं[4] दर्भस्तम्भं निहत्य ब्रह्माणं[5] दक्षिणत उपवेश्याभ्यर्च्यान्यांश्च विप्रान्संनिधाय वसनमेखलाचर्मदण्डेषु मन्त्रानावर्त्य हिरण्यवर्णा इति चतसृभिः समिधोऽभ्यादध्यात्। हिरण्यवर्णाः शुचयः पावकाः। यासां देवाः। यासां राजा। शिवेन मा[6] ॥

आ०। शुद्धापेक्षो ऽत्रोपक्रमकालः। जयप्रभृतिभिर्हुत्वेत्याज्यभागान्तं तन्त्रं दर्शयति। सिद्धेऽपि व्रतहोमसंभावात्स्थालीपाकत्वात्तन्त्रवत्त्वे तेजोवीर्यकल्पे। हविषोऽत्र तन्त्रत्वं[7] मा भूदिति। एवमाज्यभागान्तं हुत्वाचार्यो वासोमेखलाजिनदण्डमन्त्रानावर्त्य। पूर्वेणाग्निं दर्भस्तम्भं निहत्य[5] दक्षिणतो ऽग्नेरासनलम्भेन सहोपनिषदाद्यान्वाधानं[8] कुर्यात्। कथं। ब्रह्मचारिणं हिरण्यवर्णा इति चतसृभिश्चतस्रः समिधो दापयित्वा ॥

नित्ये व्रतोपायने ब्राह्मणा व्रतपतय इति चतुर्थम् ॥५॥

दे०। यदेतत्प्रस्तुतं ब्रह्मचारिणो नित्यमवश्यकर्तव्यं व्रतग्रहणं तत्र ब्राह्मणा व्रतपतयो व्रतमालभे तद्वः प्रब्रवीमि तच्छकेयं तेनर्ध्यासमिति चतुर्थं मन्त्रं कुर्यात्। त्रयस्तु पूर्वं व्याख्याता एवात्रापि स्थिताः। अग्ने व्रतपते। वायो व्रतपते। सूर्य व्रतपत इति ॥

आ०। अत्र नित्ये प्राकृते व्रतोपायने स्थितं आवापभूतं ब्राह्मणा व्रतपतय इति व्रतमालभेत। तद्वः प्रब्रवीमि तच्छकेयं तेनर्ध्यासमिति चतुर्थं मन्त्रमावपेत् ॥

अथ व्रतहोमांश्चतुर्गृहीतैश्चतुर्होतृभिराज्येन तेजस्कामो यावकेन पशुकामो ऽन्नाद्येन वीर्यकामः पयसि स्थालीपाकं श्रपयित्वा ब्रह्मवर्चसकामः ॥ ६ ॥

दे०। अथ व्रतहोमान्वक्ष्याम इति शेषः ॥

---

1. Thus A ; ०तसृभिरभितः D, ०तसृभिश्चाभितः ADC. 2. चातुर्हो the Bombay, चातुर्हो the Lahore Ms. 3. Cp. sūtra 6. 4. So Br. starts from the reading ब्रह्माणं. 5. ब्राह्मणं the Mss. 6. See XVI. 5. 7. ? the Ms.; हविषोततन्त्रयत्वं। 8. Thus the Ms.

ब्र० । ततश्चित्तिः स्रुक् । पृथिवी होता । अग्निर्होता । वाग्घोता । महाहविर्होता[1] । छन्दोभ्यः स्वाहा[2] । चातुर्होतृकाय स्वाहेति[2] सप्त प्रधानाहुतयः ॥

आ० । अथ चतुर्गृहीतैरावापस्थानत्वादेव चतुर्गृहीतासिद्धः[3] कचित्स्रवा[3] अपि भवन्ति व्रतहोमाः । युक्तं च तदुभयाम्नायसंस्कारत्वादस्य चातुर्होतृकव्रतस्य । तत्रामी गुणफलाधिकाराः । आज्येन तेजस्कामः । यावकेन यवमयेन पशुकामः । सिद्धवदन्नाद्यनिर्देशः । अन्नाद्येन तण्डुलेन वीर्यकामः । पयसि स्थालीपाकं श्रपयित्वा ब्रह्मवर्चसकामो जुहुयात् । पयोऽत्र श्रपणार्थीयं । तस्मिन् श्रुतेन स्थालीपाकेन ब्रह्मवर्चसंवृत्तस्वाध्यायसंपत्तिं[4] यः कामयते स जुहुयात् चतुर्गृहीतैश्चतुर्भिर्होतृभिः[5] । पञ्चहोत्रनन्तरमत्र षड्ढोत्रा होमः ॥

मनसैकैकं हुतमनुमन्त्रयते ॥ ७ ॥

दे० । श्रपयित्वैकैकं चतुर्होतारं हुतं मन्त्रं मनसानुमन्त्रयते । मन्त्रागममनुसंदधीत मन्त्रद्वारेणेत्यर्थः ॥

ब्र० । मनसा त्वत्र मन्त्रोच्चरणं । एकैकामाहुतिं हुत्वैतैरेव मन्त्रैरनुमन्त्रयते ॥

आ० । मनसै०...मन्त्रयत इति याजमानमुक्तं[6] । तश्चैतैरेव चतुर्होतृभिर्यथा हुतं । ते च ब्रह्मचारिणा संस्कार्येण न तावदधीताः । तस्मादाचार्येण क्रियमाणेऽनुमन्त्रणे ब्रह्मचारिणा मनोनिर्वेशमात्रं कर्तव्यं । तदर्थत्वात्संस्कारकरण इति भावः । ततश्छन्दोभ्यः स्वाहा चातुर्होतृकाय स्वहेत्याहुतीर्हुत्वा ॥

यद्वेदव्रतं तदत्र व्रतम् ॥ ८ ॥

दे० । यद्वेदविहितं व्रतं तत्परिपूर्णमस्त्वित्यत्र[7] मम व्रतमिति वाचयेत् ॥

ब्र० । ततः प्रत्यङ्ङासीनं ब्रह्मचार्यसीति पञ्चभिरनुशास्य । ब्रह्म-

---

1. See Kāth. IX. 8 (· 110. 12, 14, 18), IX. 9 (111. 21). The yajus वाग्घोता must have been contained in the Kaṭha-āraṇyaka. It is nearly identical with Taitt. ār. III. 6. 1 and III. 4. 2. 2. Cp. XLI. 19. 3. Thus the Ms.! 4. R. ०वर्चः संवृत्त० ? 5. ०तुर्गृहीतांश्चतु० the Ms. 6. यजमा० the Ms. 7. अत्र om. DTC ( ०स्त्विति ).

चार्यसि। अपोऽशान। कर्म कुरु। दिवा मा सुषुप्सीः। वाचं यच्छ॥

आ०। यद्वेदव्रतं त्रैविद्यकव्रतादेशनं तदत्रापि कर्तव्यं। मार्गवासा भव संहृतकेशो भव भैक्षेणाचार्याधीनवृत्तिरित्यग्नीन्धनान्तं व्रतादेशनं विधाय॥

विकाराननुक्रमिष्यामो न चतुर्भिः सहासीत न चतुर्णां समक्षं भुञ्जीत न चतुर्भिः सह भुञ्जीतैकतमो वा[1] ॥९॥

आ०। न चतुर्भिः सह भोक्तव्यं। नैकतमेनाप्यासितुं युक्तं न वा भोक्तव्यमित्येवमनुशास्य चतुर्होतॄननूच्य। ऋतुतिथ्याद्याश्रावितान्तं संस्थाप्य ततो यावद्व्रतं चतुर्होतृमन्त्रब्राह्मणसमाम्नायमुभयत्राधीतमध्यापयेत्॥

एवमपवर्गे ॥ १० ॥

दे०। अपवर्गः समाप्तिः[2] ॥

ब्र०। तत्र तु प्रधानादनन्तरं समिदाधानं व्रतविमोकश्च। नात्र व्रतादेशो न चतुर्होतृमन्त्रवचनं। अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मे प्रब्रमस्तन्नो गोपाय। वायो व्रतपते। सूर्य व्रतपते। ब्राह्मणा व्रतपतयो व्रतमचारिषं तदशकं तन्मे[3] प्रब्रमस्तन्नो गोपाय[3]। एवमत्रोहः॥

आ०। अध्ययनग्रहणान्ते एतद्धोमकर्म पूर्वोक्तमपि कुर्यात्। किंतु तत्रायं विशेषः। न व्रतालम्भः। वासोमेखलाजिनदण्डमन्त्रान्वाचयित्वा दर्भस्तम्भं पूर्वतो निधाय गोमये लोष्टे पदपश्चाशद्भर्भाङ्कुरैर्ब्रह्मप्रकृतिं कुर्यात्[4]। ब्राह्मणं दक्षिणत उपवेश्य। चतुर्गृहीतैश्चतुर्होतृहोमं कृत्वानुमन्त्रणं। छन्दोभ्यश्चातुर्होतृकायेति च हुत्वा। न व्रतादेशनं। न प्रवचनं। अपवर्गे स्थितः पूर्ववद्धि-

1. Cp. Kāth. IX. 15: 117. 11, Mān. śrs. V. 2. 14. 21.
2. In Devapāla now follows the text with Bhāṣya of the Caturhotṛ formulae and of the Pravargyamantras, the last intermixed with sūtras, taken apparently from the yajnasūtra.
3. R: तद्धो and गोपायत ? 4. Cp. Br. on sūtra 4.

रण्यवर्णा इति चतसृभिः समिधो दापयित्वाग्ने व्रतपते व्रतमचारिषमित्यादिना ब्राह्मणा व्रतपतय इति चतुर्थेन व्रतं विमुच्य ॥

वास आचार्याय ददाति वरं दक्षिणत आसीनाय ॥ ११ ॥
॥ ४३ ॥ ( ४ । ३ ) ॥

ब्र० । स्विष्टकृति हुते वास आचार्याय ददाति वरं दक्षिणतोऽग्नेरासीनाय ॥

आ० । तत ऋतुतिथ्यादि । स्विष्टकृदन्ते वास आचार्याय वरं दक्षिणत आसीनाय दद्यात् । आश्रावितान्तं ततः संस्थापयेत् ॥

---

षोडशे वर्षे गोदानमग्नौ वा समाप्ते ॥ १ ॥

दे० । जन्मनः प्रभृति षोडशे वर्षे वर्तमाने ब्रह्मचारिणा गोदानसंज्ञं व्रतं कर्तव्यं । यस्त्वरितं दारस्वीकारार्थी अस्मादूर्ध्वं स्नात्वा दारकर्मोच्यते । यस्तु सर्वकालं वेदमधीत्य विवाहं चिकीर्षति तस्योपनयनादारभ्य षोडशे वर्षे गोदानं । त्रिवेद्यां ह्यष्टाचत्वारिंशद्वर्षाणि ब्रह्मचर्यं चरणीयमिति पक्षः । तदेकवेदग्रहणे षोडश संवत्सरा भवन्ति त्रिभागेन । यस्य त्वापत्कल्पे[1] न षोडशवर्षे भवत्युपनयनं तस्याग्नौ समाप्ते गोदानव्रतमग्न्यध्ययने समाप्त इत्यर्थः । योऽपि वेदैकदेशमधीत्य सिस्नासति तस्याप्येष पक्षोऽग्नौ समाप्त इति ॥

आ० । षोडशे वर्षे गोदानं नाम संस्कारः । अग्नौ वा समाप्ते । बह्विष्टके हिरण्यगर्भान्ते पठित इत्यर्थः[2] । नैतद्वेदव्रतं केशवापनमेवास्मिन्काले विधीयते । गोदानशब्देन च शिरसश्चत्वारो भागा उच्यन्ते गृह्यान्तरेषु । तथा च । दक्षिणे गोदान एतत्कर्मेति । गवि भूमौ दीयत इति गोदानं स्वपतः शिरोभागम्[3] ॥

तद्व्याख्यातं जातकर्मणा ॥ २ ॥

दे० । तच्चैतत्केशान्तिकापरपर्यायं गोदानव्रतं जातकर्मणा व्याख्यातं ।

---

1. ०त्काले D. 2. बह्विष्टक is apparently a designation of the agnicayana part of the Yajurueda (Kāṭh XIX. 1. sqq.). According to Ād. this part ends with Kaṭh. XXII. 14: 70. 19. 3. Meaning?

शिखाकर्मणेत्यर्थः। अत्रापि ह्युपसमाधानादिक्षुरकर्मान्तं[1] समम्॥

आ० । आयमगादित्यारभ्य यावद्रिक्थे पर्यशेरय[2] इत्यन्तम्[2] ॥

दर्भेष्वासीनं दर्भानध्यधिकृत्य हिरण्यं चाभिषिञ्चत्याग्निकीभिर्वा राजसूयिकीभिर्वा या आपो दिव्या इति द्वाभ्याम् ॥ ३ ॥

दे० । कृतशौचार्थस्नानमग्नेः पश्चात्प्राङ्मुखं दर्भेषूपविष्टं ब्रह्मचारिणं या आपो दिव्या इति द्वाभ्यामभिषिञ्चति । आग्निकीभिरद्भिर्यदिवा राजसूयिकीभिः[3] । तत्राग्नेय्यो वहन्त्यानद्यादिप्रभवा[4] मन्त्रलिङ्गात् । सूर्यतेजः प्रबन्धाश्च सरस्वत्यादिप्रभवास्तु राजसूयिक्यः । राजसूये राजाभिषेकार्थमाम्नानात् । किं कृत्वाभिषिञ्चति । दर्भान्हिरण्यं चाध्यधिकृत्य । ब्रह्मचारिणः शिरसि दर्भास्तदुपरि सुवर्णं विधायेत्यर्थः ॥

ब्र० । सर्वान्नं[5] हविष्यं क्षीरोदकाभ्यां पितुं नु स्तोषमित्यनुवाकेन[6] संयूय तस्यौदुम्बरेण स्रुवेण जुहोति वाजस्य नु प्रसव इति[7] चतुर्दशभिः । यस्य न जुहुयात्तदग्नीषोमीयस्येध्मेऽपिप्रोक्षेच्छेष[8] उदकमासिच्य[8] तेनाभिषिञ्चति[9] ॥

आ०।ततः शौचार्थं स्नानं कृत्वा दर्भेषूपविष्टं दर्भांश्चाध्यधिकृत्य शिरसि दर्भेषूपरि हिरण्यं च कृत्वाभिषिञ्चत्याग्निकीभिरद्भिर्या उपधाने

---

1. If this is right, the cauḍa is regarded as a part of the jātakarman. 2. Sic ! cp. XL. 16. 3. From XL. 9 unto 16. This passage ( from कृतशौ० ) is given in T only on a separately added paper in very modern handwriting. 4. Thus CA and first hand of D, D second hand: वहन्त्योर्नद्यादि०, T वहन्त्याद्यनद्यादि०; r. वहन्तीनद्यादि०. 5. सर्वान् the Bombay Ms. 6. पितुर्नस्तोषमिति the Ms. (Kāṭh. XL. 8). 7. वाजपुसभ्य इति the Ms. ; according to Devapāla the first part of this anuvāka (Kāṭh. XVIII. 13) contains the first *eight* verses of XIV. 2. 8. Thus the quotation given by Devapāla; Br : ०च्छेषमुदक०. 9. This seems to be the passage from the Kaṭha Yajnasūtra referred to in the sūtra text. cp. Hir. Śrs. XII. 14.

याभिः कुम्भेष्टका गृह्यन्ते वहन्तीभिः प्रसन्नाभिः स्थावराभिः परिमन्थिनीभिः[1] कूप्याभिर्वहत उच्छ्रिताभिरित्येवं[2] षड्-विधाभिः । न तु क्षीरोदकेन[3] । तथानभिधानात् । राज-सूयिकीभिर्वा क्षत्रियं । या आपो दिव्या इति द्वाभ्यां । अभि-षिञ्चतीति मन्त्रविधानात् । यदि होमषष्ठेन क्षीरोदकेनाभिषेकः स्यादाग्निकेनेत्यवक्ष्यत् । न चाभिषेकमन्त्रेणान्नहोमो वितत आक्षिप्यते । राजसूयिक्यः सारस्वत्यादयः ॥

एवं राजानं सावीर्हि देवेति चानुवाकेन यथोक्तमक्रत्वज्यानिम्[4] ॥ ४ ॥ ४४ ॥ (४।४)

दे०। एवमेव राजानं क्षत्रियमभिषिञ्चेदिति समन्तस्य मन्त्रद्वयस्य विनि-योगात्तस्यातिदेशः। विशेषमाह। सावीर्हि⋯०ज्यानिं[5]।सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमित्यादिनानुवाकेनान्यद्यथोक्तं कवच-संनहनादि कुर्यात् । किं सर्वं । नेत्याह । अक्रत्वज्यानिं[5] । क्रतु-मृत्युसवः[6] । ज्यानिरत्यर्थत्यागादिकृत आयासः[7] । तद्वर्जं । अनुवाकनिर्देशाद्धि[8] तल्लिङ्गादेतावपि[8] प्राप्नुत इति सिध्यते[9] ॥

ब्र०। सावीर्हि देवेति चानुवाकेन मृत्युसवे यथोक्तं कवचसंनहनादि। अभिषेकादनन्तरमाग्नेय्या वैश्वदेव्या वा प्रधानं । ऋतुतिथिया-

---

1. Thus the Stein Ṛcaka; परिमन्थनीभिः the Bombay Ms. of Br. 2. This also must be a quotation from the Yajnasūtra. 3. Cp. Br. on this sūtra. 4. Thus AC, and cp. Ād.; अक्रतुज्यानिं the Lahore Ms. of Br. (in the Bombay Ms. these words are omitted) and a Bombay Ṛcaka; अक्रत्वज्यानि the Stein Ṛcaka; अक्रत्वज्यानिच् (which, if it stood for ०ज्यानि च, could be a preferable reading) TD. 5. ०ज्यानिच् again D. 6. Designated as rājābhiṣeka by Āp. (XII. 18). 7. This jyāni "overpowering" is perhaps alluded to by Baudh. XVIII. 17.: 363. 10 sqq. 8. ०शाद्धितलिङ्गादेतावपि D, ०शाद्धितल्लिङ्गादेवतावपि CT, ०शाद्धितल्लिङ्गदेवताः A. 9. Then follows the passage given above under sūtra 3 by Br.

गादितन्त्रसमाप्तिः । वरो दक्षिणा ॥

आ० । ताभिरेव राजानं । अभिषिञ्चेदिति शेषः । सावीर्हि देवेति चानुवाकं यथोक्तं । यथोक्तं कर्म कुर्यात् । कवचसंनहनादि । अक्तत्वज्यानि । क्रतुर्मृत्युसवाख्यः । यत्रैतत्कर्माभिहितं तत्संबधं यत्कर्म । ज्यानिश्च तत्रास्ति । भ्रातृव्यकुलीनायोपविष्टायेषुम-सित्वा तस्माज्ज्यानिं द्रव्यापहारं हानिमिति । तद्वर्ज । अन्यत्र वसनमेखलादि न किंचिद्भवति । न[1] वा पुनरपवर्गे करणं । तथावचनाभावात् । अन्ये त्वाज्यभागान्तं हुत्वा आयमागा-दित्यन्तमरिक्ते पर्यश्रेषय इत्यन्तं[2] कृत्वा स्नात्वा वसनादि-दण्डान्तं । ततो यथोक्तोऽभिषेक आग्निकीभिः । ततो वैश्वदेव्या चतुर्गृहीतं हुत्वा । छन्दोभ्यः स्वाहा गोदानाय स्वाहेति च हुत्वा[3] । ऋतुतिथ्याद्याश्रावितान्तं संस्थापयेत् । गोदानस्य गृह्यान्तरेषु व्रतत्वदर्शनत्वान्नात्रापवर्गोऽध्ययनाभावादिति[4] ॥

---

अथैकाग्नेः[6] समाधानम् ॥ १ ॥

दे० । व्रतसमाप्त्यनन्तरमधीतवेदेन स्नात्वा विवाहः कर्तव्यः । कृत-विवाहस्य पाकयज्ञा आम्नाताः । ते चाग्नौ क्रियन्ते । जीवत्पितृ-कस्य वैवाहाग्नौ विकल्पः । तं जीवत्पितृको यदा न धारयते तदा तेनाग्न्यन्तरमुत्पादनीयमवश्यं[5] पितृप्रमये[5]ऽग्न्यन्तरार्जनं पैतृकाग्न्युपशमनपूर्वकमित्युपशमनमाह । पितरि प्रेते एक एवासहायः शिष्यते पैतृकोऽग्निः । तस्यैकाग्नेः समाधानं प्रति-पत्तिकर्म कर्तव्यं पुत्रेणैव न तु पुरोहितप्रभृतिभिः । अपरा व्या-ख्या । एक एवाग्निः पैतृको यस्यास्तीति न तु वैवाहनः[6] स्वयं वृत्तः स एकाग्निः गृहस्थः प्रमीतपितृकः । समाधानशब्दस्तन्त्रेण द्वयमाह । पूर्वाग्नेस्त्यागमावसथाग्नेराहरणं । यतः सम्यगाधान-

---

1. न indistinct in the Ms. 2. Cp. XL. 9-16. 3. Cp. XLI. 19. 4. Immediately after this Kaṇḍikā Ad. has the following passage: अत ऊर्ध्वं पौगः प्रवर्ग्यव्रतादयस्तेषु तन्त्रैवोक्तो विधिः । ( ? पौगप्रव० ? ) ; this word occurs also in a s'loka cited by Br.: बद्धिष्टके ऽग्नौ गोदानमधीते षडतः परं पौगव्रतानि पूर्वे स्युः ॥ 5. D omits ०ग्न्यन्तर ... ०प्रमये । 6. ०हिनः A.

मर्जनमपि । अनेकार्थत्वाद्धातुनिपातनमेतदेव स्फुटयितुमाह ॥

ब्र० । आहिताग्नेः प्रमीतस्य त्रेताग्निदाहादूर्ध्वं गृह्याग्निप्रतिपत्तिविधानमथैकाग्नेः समाधानमिति कण्डिकायामुक्तं[1] । तत्पद्धतिराहिताग्निसंस्कृतावेवास्माभिरुक्ता[2] ॥

आ० । सर्वव्रतान्ते स्नास्यन् गां प्रकारयेदित्यादि[3] स्नानमुक्तं । स्नातस्य च विवाह उक्तः । एवं च माणवकस्य संस्कारा उक्ताः गर्भाधानादयो विवाहपर्यन्ताः । विवाहेऽन्तरकालं पाकयज्ञानुष्ठानात्तच्चाग्निसाध्यं । तत्र जीवपितृकस्याग्नौ विकल्पः । वैवाहनमग्निं गृह्णाति न गृह्णाति वा[4] । तदुक्तं । भार्यादिरग्निर्दायादिर्वा । एवं येन जीवति पितरि जातारणिजाभावे वैवाहनेन[5] गृहीतः स[6] द्वितीयेनापि[6] दायकालेनाहृतो वक्ष्यमाणेतिकर्तव्यतया । तस्य परमेष्ठिमरणेऽवश्यमग्निर्जनं नियम्यते । तदर्थमाह । अथैकाग्नेः समाधानं । एकाग्निर्गृह्याग्निः । तस्य समाधानमर्जयित्वा लक्षणस्थापनं वक्ष्याम इति वाक्यशेषः । तत्राथशब्दो मङ्गलार्थः ॥

परमेष्ठिमरणे पुत्रस्याग्निसमाधानम् ॥ २ ॥

दे० । परिमेष्ठी स्वामी । पितात्र । तस्य प्रमये पुत्रेणैवाग्नेः समाधानं शमनं कर्तव्यमित्युक्तार्थम् ॥

आ० । पुत्रस्य । कदा । परमेष्ठिमरणे । परमेष्ठी पिता माता च । एतयोरन्यतरस्य प्रमये पुत्रस्यैकाग्नेः समाधानं विधीयते । परित्यागे पुत्रस्यैव नियमो नर्त्विजां । ऋत्विजः[7] परिधानीयमन्त्यकर्म कुर्वन्त्याहवनीयादिभिः । एकाग्नेस्तु प्रतिपत्तिः पुत्रस्यैव नियम्यते ॥

सर्वानुपवासयेत् ॥ ३ ॥

---

1. कण्डिकाया ०० the Bombay, दण्डिकाया ०० the Lahore Ms.
2. This paddhati is given by Br. on K. XLV.
3. Cp. III. 1, where, however, कारयेत्, not प्रका० is read.
4. Cp. XLVII. 1.
5. R. वैवाहनो न ?
6. स द्वितीयेनास द्वितीयेनापि the Ms.
7. ०ज्ञा the Ms.

दे० । ऋत्विग्बन्धून्सर्वान् । उप समीपेऽग्नेः । वासयेद्रात्रिम् ॥

आ० । स पुत्रः पितरि मृते एकाग्नेन्त्यकर्मसंस्कारेण[1] दग्ध्वा तां रात्रिं सर्वानुपवासयेत् । ज्ञातीनृत्विजश्चैकाग्नेः समीपं स्थापयेत् ॥

तमग्निं प्रज्वालयेदाकालमुपव्युषम् ॥ ४ ॥

दे० । उषा रात्रिः । विगता उषा स यत्र व्युषः । प्रभातकालः । तस्य समीपमुपव्युषं । आदित्योदयकालं यावत् । तत्र प्रकृतमेकाग्निं ज्वालयेत् । संदीपयेत् । यावद्व्युष्टा रात्रिस्तावदग्निं प्रज्वालयेदिति संबन्धः ॥

आ० । उपव्युषं यावद्व्युष्टा रात्रिः ॥

माषकणमन्थेनौदुम्बरेण कंसेनाग्निं शमयेद्धिरण्यपाणिं सवितारं वायुमिन्द्रं प्रजापतिम् । देवा[2] अङ्गिरसो[3] हवामह इमं क्रव्यादं शमयन्त्वग्निमिति ॥ ५ ॥

दे० । उद[illegible]मिश्रमाषचूर्णसंपादितेन मन्थेनौदुम्बरकंसपात्रनिक्षिप्तेन तमग्निं शमयेत् ॥

आ० । ततो माषकणमन्थेन । माषकणा मासचूर्णाः । तैर्मन्थः । क्षीरमिश्रैर्भवति । तेन । औदुम्बरेण ताम्रेण कंसेनाग्निं प्रकृतं समापयेत् शमयतीत्यर्थः । हिरण्यपाणिमित्यनया विराट्पङ्क्त्या ॥

काशानामूते कटे भस्म समोप्य[4] प्रस्थापयेत् क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाहः । इहैवायमितरो[6] जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्निति ॥ ६ ॥

दे० । काशानां तृणविशेषाणां संबन्धिनि ऊते ग्रथिते कटे समारोप्य तत्प्रशमितैकाग्निभस्म स्थापयेत् शमयेत् क्रव्यादमग्निमिति

1. Thus the Ms.! 2. Br. and AT देवा, C देव॑ मo; the Bhāṣya points to देवान् । 3. oरसं D second hand. 4. Thus Br. and. Ād., समारोप्य the Mss. of Devapāla, also in the Bhāṣya. 5. प्र only given by Br. and Ād.; Devapāla स्थापयेत् । 6. Thus Devapāla. अपरो instead of इतरो Br. and Ād.

त्रिष्टुभा । काशानां मूढकट इति वा पाठः । तत्र समुञ्जसमूला-
ग्रतृणनिर्मिताकारो मूढकटः ॥

आ० । ततः काशानां तृणविशेषाणां मूताकारे[1] कटे भस्म समोप्य प्रस्थापयेत् । शमयेत् । क्रव्यादमग्निमित्यनया त्रिष्टुभा । 'इहैवायमपरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्नित्यनेन लिङ्गेनाकृतविवाहस्याप्यग्न्यर्जनमिच्छन्ति । पुत्रस्य नित्यवदाम्नानात् । लिङ्गप्रभवं चेदम् ॥

निर्दग्धामिति दक्षिणापरस्यां दिशि चतुष्पथे निधायोपधानं सीसं च तस्मिन्नध्यधिमार्जयन्ते[2] सीसे[3] मलिम्लुचामहे शीर्ष्णा चोपबर्हणे । क्रव्यादः समया मृष्ट्वा तं प्रेत सुदानव इति ॥७॥

दे० । निर्दग्धमिति मन्त्रेण दक्षिणापरस्यां दिशि नैर्ऋत्यां दिशि पश्चिमदिगन्तराले यश्चतुष्पथस्तत्र निधाय स्थापयित्वा काशकटनिहितं भस्म । उपधानसीसशब्दाभ्यां च यज्जीवतः पितुः शिरोऽवष्टम्भनं गगडुकादुकमासीत्...... ॥

आ० । निर्दग्धमित्यनेन सेधान्तेन नैर्ऋत्यां दिशि चतुष्पथस्तत्र सभस्मानं मूतकटं निधाय उपधानं च तत्रैव उपबर्हणं यत्पितुरस्वस्थस्यासीच्छिरोधानं सीसं च यत्किंत्[4] । पतद्ग्रहमित्येके[5] । तस्मिन्नध्यधिमार्जयन्ते तृतीये[6] मलिम्लुचामह इत्यनया त्रिष्टुभा । अप[7] उत्सिञ्चन्ति[7] ज्ञातयः सपुत्रा ऋत्विजश्च ॥

अपासदेत्विति चतसृभिरुपस्थाय शं नो देवीरित्युपस्पृश्य प्रती[8]पमायन्तः[8] पदानि लोभयन्ते[9] नडैर्वेतसशाखया[10] वा मृत्योः

---

1. Thus Ād., starting from a different reading. 2. The remaining part of this sūtra and the beginning of the next one ( unto शंनो देवोः ) is wanting in all the Mss. of Devapāla. 3. Thus Ād., सीसेन Br. 4. Meaning ? Corrupt? 5. पतद्गृह० the Ms. 6. ? 7. पोत्सिञ्चन्ति the Ms. 8. Thus the Mss. of Devapāla ; प्रतीयंतः the Lahore, प्रतीपाययन्तः the Bombay Ms. of Br.; प्रतीपायन्तः Ād. 9. लोपo T only. 10. All the Mss., except the Lahore Ms. of Br. and Ād.,; वीतस instead of वेतस .

पदं लोभयन्त इति। मृत्योः पदं लोभयन्तो यदीमो द्राघीय आयुः प्रतरं दधानाः। आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत[1] यज्ञियास इति ॥ ८ ॥

दे०। [2]शं नो देवीरित्यनयोदकोपस्पर्शनं कुर्युः सर्वे। ततो भस्मकटसीसप्रदेशात्प्रतीपमायन्तः प्रत्यावर्तमानाः पदानि लोभयन्ते[3] सर्वे पादप्रतिबिम्बानि नाशयन्ति। लोपयन्त्युत्पुंसयन्ति। कैः। नडैः दीर्घैः बाहुभिः वीतसशाखया वा द्राघीयस्या सपर्णया सामर्थ्याच्चात्र सीसभस्मसांमुख्येन प्रत्यावर्तमानं[4] सप्ताष्टौ वा पदानीति गम्यते। मृत्योः पदमित्यादि मन्त्रप्रतीकः ॥

आ०। अपास्मदेत्विति चतसृभिरुपस्थाय निर्ऋतिं। शं नो देवीरित्युपस्पृश्य। स्नानमेवात्रोपस्पर्शनं। प्रतीपायन्तः। प्रतिमुखा आयन्त आगच्छन्तः। पदानि। पांसु···णविन्यासाः। तानि लोभयन्तः योपयन्तः विनाशयन्त इति यावत्। केन। नडैः नडशाखाभिर्विरूढकप्रायैर्वैतसशाखया वा। वेतसो वञ्जुलकः। एकवचनं प्रत्येकापेक्षया। मृत्योः पदं लोभयन्त इत्यनया त्रिष्टुभा सप्तमात्राणि पदानि। स्वानि स्वानि पदानि। साप्तपदीनं सख्यमिति दर्शनात् ॥

अत्रैव शाखां निदध्युः ॥ ९ ॥

दे०। अनन्तरं[5] वेतसशाखां[6] नडमुष्टींश्च[7] अत्रैव प्रकृतसीसभस्मकटे निदध्युः प्रक्षिपेयुः ॥

आ०। निदध्युः त्यजेयुः ॥

अनड्वाहं पुरस्कृत्य व्रजन्त्यनड्वाहं प्लवमिति[9]। अनड्वाहं

---

1. भवथ Br. 2. The beginning of the Commentary is wanting. 3. लोप० T only. 4. Thus the Mss. 5. अन्तरं the Mss. 6. वीतस० T only. 7. Thus T only (in A this passage is missing); नडसुमु० C, नरसुसु० D. 8. ०कृत्वा Br. 9. It is not wholly certain whether the original text ended *here*.

प्लवमन्वारभध्वं स वो[1] निर्वक्षद्दुरितानि विश्वा । आरोहत सवितुर्नावं हिरण्मयीं षड्भिरूर्मिभिरमृतत्वं तरेमेति ॥ १० ॥

आ० । अनड्वाहं पुरस्कृत्य गृहाद्व्रजन्तम्[2] अनड्वाहं प्लवमिति ॥

प्रत्यागतानक्षतधूममुपस्पर्श्य[3] गवाग्निना च प्रदक्षिणमग्निं त्रिः परियन्ति परीमे गामनेषतेति[4] । परीमे गामनेषत पर्यग्निमहृषत । देवेष्वक्रत श्रवः क इमां॰[5] आदधर्षतीति ॥ ११ ॥

दे० । प्रत्यागतान्गृहान्प्राप्तान्बान्धवादीन् । ये च गृहे स्थितास्तानपि । अक्षतधूममनवहतयवादिबीजधूममुपस्पर्शयन्ते । ये भस्मकटेन सह[6] गताः[6] स्वयं चोपस्पृशन्ति[7] । उपस्पृश्य हस्ते ऽग्निमादाय प्रकृतेन गवा यत्राग्नौ भूमिष्ठे अक्षतधूमः कृतः तत्प्रदक्षिणं यथा भवति तथा त्रिः परियन्ति । पर्यावृत्य भ्रमन्ति । परीमे गामनेषतेत्यादिकयर्चा ॥

आ० । ततो गृहान्प्राप्याक्षतधूममनवहतानां सर्वबीजानां धूमं संस्पर्शयन्ति[8] शरीरेण नासिकया वा कश्चिद्गृहे स्थितः । णिज्निर्देशात् । अग्निमन्यं भूमौ प्रज्वाल्य अन्यं चादाय गवा प्रकृतेनानडुहाग्निना च प्रदक्षिणमग्निं त्रिः परियन्ति परीमे गामनेषतेत्यनया ॥

उदपात्रे ऽश्मानं हिरण्यं चावधायाथैनानभिमर्शयन्ते[9] ऽश्मन्वतीरिति[10]। अश्मन्वती रीयते संरभध्वमुत्तिष्ठत प्रचरता[11] सखायः । अत्रा जहाम ये असन्नशेवाः शिवान्वयमुत्तरेमाभि वाजानिति ॥ १२ ॥ ४५ ॥ ( ४ । ५ )

---

1. Thus of the Mss. of Devapāla T. and the Lahore Ms. of Br.; the other Mss. नो, but the Bhāṣya starts from वो ( स चानड्वान्वो युष्माकं विश्वानि etc.)   2. R.: गृहान्व्रजन्ति ?   3. ॰स्पृश्य A C T and Br.   4. See note 9. previous page.   5. इमां the Mss.   6. सहागैताः T.   7. ॰शति C.   8. ॰यन्ति the Ms.   9. ॰चावदायाथ॰ Br., ॰चादाया॰ Ād.— ॰मर्शयन्ते Br., ॰मर्पयन्ते Ād.; ॰स्पर्शयन्ते D T, ॰स्पयन्ते C, ॰स्पृशन्तिते A.   10. The Pratīka (with इति ) not given by Devapāla.   11. Thus Br., the other Mss. ॰रत (only A ॰रतः ).

दे० । उदकेन पूर्णपात्रे ऽश्मानं हिरण्यं सर्वबीजानि बदरान्निधाय[1] अनन्तरमेनान् ज्ञातादीन्संस्पर्शयन्ति[2] स्वयं च स्पृशन्ति[3] । अश्मन्वती रीयत इति त्रिष्टुभा ॥

आ० । तत उदपात्रे ऽश्मानं हिरण्यं चादायाथैतान्[4] प्रकृतानृत्विजो ज्ञातींश्चाभिमर्शयन्ते । अश्मन्वती रीयत इति त्रिष्टुभा । यदुक्तं परिधानीयान्ते माषान्हिरण्यं लवणान्सर्वबीजान्यश्मानं हिरण्यं चादायेत्यश्महिरण्यसर्वबीजानामिहोपयोगः ॥

---

**शुचिर्भूतः[5] पितृभ्यो दद्यात् ॥ १ ॥**

दे० । परमेष्ठिप्रमयनिमित्ते[6] ब्राह्मणादीनां दशरात्रादिना यथास्वमशौचे शुद्धे सति परमेष्ठिने श्राद्धं कुर्यादग्निं साधयेदिति तात्पर्यार्थः । यद्यपि च परमेष्ठिनः श्राद्धं मासिकान्येकोद्दिष्टं[7] तथाप्यसावस्यादिश्राद्धमनेकोद्दिष्टं[8] तत्रैवाग्नौ कर्तव्यमुपान्तस्याग्नेस्त्यागाभावादिति तदभिप्रायं पितृभ्य इति बहुवचनं । सर्वं हि पाकयज्ञादिकमुच्यते । अभार्येणापि वाग्निरुत्पादनीयः श्राद्धादिसंसिद्ध्यर्थं । ततश्चेतरो विवाहः कर्तव्यः अवश्यकर्तव्यासिद्धये । एवं तावदादित्यदर्शनप्रभृतयो[9] व्यवस्थिताः[10] । प्रायेण त्वार्यावर्तनिवासिनामविवाहानां प्रमीतपितृकाणां लौकिकाग्नावेव प्रथमश्राद्धानि विधाय सपिण्डीकरणादूर्ध्वं विवाहं विधायाग्निपरिग्रहे ऽन्तरा[11] निरीक्ष्यते । तत्राप्यनादरं न विदधति[12] सन्तः सिद्धवदग्नौ श्राद्धकर्तव्यतामुक्त्वौपसदाग्न्याधानमाह[13] ॥

ब्र० । येन वैवाहिको ऽग्निस्तत्कालं दायकाले वापि नाहृतस्तेन मातापितृ-

---

1. Uncertain ; वादरान् T, वादारान् D, वाचारान् A C. 2. ०यति A. 3. ०शति A. 4. Thus (not अधाय ) also furtheron 5. Before शुचि० the Mss. of Devapāla have एकाग्नित्यागे, which however, seems not to belong to the sūtra text. 6. ०मित्त D. 7. Thus A C ; मासिक एको० T, मासिको० D. 8. From तथा० om. D. 9. एतावद् instead of एवं ता० D. 10. Cp Ād. on sūtra 2. 11. ०नन्तरं T, त्वन्तरा A. 12. ०दधाति ACT and first hand of D. 13. The last words introduce the next sūtra.

प्रमये शौचान्त्यदिने पूर्वेद्युः कर्म कृत्वा श्वः शुचिना भूतेनानेन विधिना गृह्याग्न्याधेयं कर्तव्यं । स औपसदाग्निस्तस्मिन्प्रथमश्राद्धं तस्मिंश्च पाकयज्ञाः[1] । तदुक्तं—

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकालाहृते वापि श्रौतं वैतानिकाग्निषु ॥

असद्वितीयेनापि विवाहोन्मुखेनानेन विधिना पित्रोः प्रमये श्राद्धार्थमग्निराधेयः । तस्मिन्नित्यनैमित्तिककार्याण्या विवाहात् । तस्मिन्नेवोद्वाहविवाहकर्म ॥

आ० । अशौचव्यपगमे शुचिः संपन्नः पितृभ्यो दद्यात् । परमेष्ठिने श्राद्धं कुर्यादित्यर्थः । बहुवचनं पिण्डपितृयज्ञादिसर्वपाकयज्ञप्रदर्शनपरं श्राद्धार्थमुत्पादिताग्नेस्त्यगो मा विज्ञायीति । कथं पितृभ्यो दद्यात् । अग्निमार्जयित्वेत्यर्थः ॥

**औपवस्त्रं भुक्त्वा कुतश्चिदग्निमानीय तं जागरयीतोपशयीत[2] च॥२॥**

दे० । उपवस्तुरशनमौपवस्त्रं । तत्पुनर्व्रत्यं[3] हविष्यान्नं शाकमाषलवणमांसवर्जं । व्रीहियवपयोघृतप्रभृतिभिर्भुक्त्वा स चासद्वितीय[4] कुतश्चिदनिषिद्धाच्छावादिव्यतिरिक्तात्[5] तमग्निं लौकिकमानीय समिन्धेदिन्धनविशेषैः । औपवस्त्रभोजनं तु दशम्यामेव ह्येकादश्यां श्राद्धं भवति । एकादश्यां त्वौपवस्त्रे द्वादश्यां श्राद्धं स्यात् । तं जागरयीत नैश्यन्तं रक्षेदित्यर्थः । उपशयीत च । ऋत्विग्बान्धवसहितस्तमुप समीपे शयीतेत्यर्थः । चशब्दाद्गार्हपत्यगतोपलेपनार्थोपदैाकितं पार्थिवसंभारशब्दवाच्योषशर्करावराहविहतावाल्मीकवपासिकतानां पयसां मिश्रीकरणं समुच्चीयते ॥

आ० । औपवस्त्रं भुक्त्वा । उपवासस्त्वनशनं । औपस्त्रमशाकादिहविष्यं । अत्रास्नातस्याप्रकृतविवाहस्याप्यग्न्यर्जनकाल एषः । श्राद्धं तावदवश्यमसद्वितीयेनापि कर्तव्यं । अत्राष्टकाङ्गं नाग्निं विनोपपद्यते । न च साक्षात्पत्न्यपेक्षाग्न्यर्जनेऽस्ति । न च श्राद्धार्थस्योत्पन्नस्याग्नेस्त्यागः । न चौपवस्त्रं भुक्त्वेत्यत्र पर्वणि भार्यामुपवस्येतिवदुपदेशः । तस्माद्-

---

1. Cp. XLVII. 1-2. 2. T alone here, not in the comm., जागरयेत । 3. D ०व्रतं . 4. चाद्विती० A. 5. D: कुताश्चिदनिषिद्धाच्छायादिव्यतिरिक्तातदग्निं D first hand; C: कुतश्चिदग्निपिष्टितं यस्यादिव्यतिरिक्तातदग्नि .

सद्वितीयस्यापि विवाहोन्मुखस्यावश्यमाधानं । कुतश्चिदग्निमानीय यत्र दीप्यमानमपरिगृहीतं तं जागरयीत । इन्धनदानेन । उपशायीत च । चशब्दात्पार्थिवान्संभारानद्भिः संसृजति ॥

उपकाश उपशान्ते भस्मोद्धृत्य ॥ ३ ॥

दे० । उपकाशे प्रकाशकाले त्वप्रकाशे रजन्यन्ते । उपशान्ते तस्मिन्नग्नौ । ततोऽग्न्यगाराद्गार्हपत्यसदृशगर्भोद्भस्मन उद्धरणं । अपसरणं । कृत्वा ॥

आ० । तत उपकाशकाले[1] प्रभाते । उपशान्तेऽग्नौ भस्मोद्धृत्याग्न्यायतनात्[2] ॥

पार्थिवान्संभारान्पूर्वया न्युप्य ॥ ४ ॥

दे० । ऊषादीन्सिकतापर्यन्तान्पार्थिवसंभारान् न्युप्य । गर्ते प्रक्षिप्य । पूर्वया ऋचा । सप्त हि पठिताः । तासां या पूर्वा उत्समुद्रादिति[3] तया ॥

आ० । पार्थिवानूषशर्करवराहविहतवाल्मीकवपासिकतालक्षणान् । पूर्वयात्र सप्तानां च या पूर्वा उत्समुद्रादिति । तया न्युप्य ॥

उत्तरया व्यूह्य ॥ ५ ॥

दे० । षडुत्तरा भवन्ति । तत्राविशेषेऽपि सर्वान्त्यमन्त्यवर्णाद्गृह्यते । यत्पृथिव्या अनामृतमित्यादिका[4] । इयत्यग्र आसीरित्यादिरुत्तरा[4] इत्यन्ये ॥

आ० । गार्हपत्योद्धृतसदृशे लक्षणे उत्तरया यत्पृथिव्या अनामृतमित्यनया व्यूह्य । उपलिप्याग्निक्षेत्रम् ॥

तमपरेण यथोत्पादितमुत्पाद्य ॥ ६ ॥

दे० । तस्य गर्तस्यापरेण पश्चार्धे यथोत्पादितमुत्पाद्य । गार्हपत्यवदुत्पाद्येत्यर्थः । करणेन कर्तव्यता मन्त्रैस्तैरेवोत्पाद्येत्यर्थः । यथैवाश्वत्थीभ्यां शमीगर्भाभ्यामरणिभ्यां मन्त्रविशेषादिभिश्च गार्हपत्य उत्पाद्यते तथैवायमौपनिषदो[5] गृह्याग्निरावसथ्यः ॥

---

1. उपकालेकाले the Ms. 2. ०ग्न्यायनात् the Ms. 3. Kāṭh. VII. 12: 74.8-9. 4. L. C. 19-20 and 10. 5. R. औपसदो ?

आ० । तमपरेण तस्य पश्चार्धे यथोत्पादितमुत्पाद्य गार्हपत्यवदरणिभ्यां तैरेव मन्त्रैस्तथैवेति[1] । अत्र चतुर्होतृवचनमपि भवति । तदन्तर्गतत्वात् ॥

जानुदघ्नं धारयित्वादधाति भूर्भुवरङ्गिरसामिति[2] पूर्वेण सुगार्हपत्य इति[3] च[3] । सुगार्हपत्यो विनुदन्नरातीरुषामुषां श्रेयसीं श्रेयसीं नः[4] । दीर्घायुत्वाय शतशारदायाधीयस्व[5] महते सौभगायेति ।७।

दे० । तमरणिनिर्मन्थनोत्पन्नं समिद्धमग्निं[6] जानुपरिमाणं धारयित्वा भूर्भुवः स्वरित्याधानमन्त्राणामायोगपठितत्वादाद्येन[7] सुगार्हपत्येन चादधातीत्यर्थः[8] । जानुदघ्नं[9] संक्षिप्य धारयित्वादधातीति यावत् ॥

आ० । जानुदघ्नं धारयित्वादधाति भूर्भुवः स्वरङ्गिरसामिति[10] पूर्वेण सुगार्हपत्य इत्ययं मन्त्रः । एष आधानमन्त्रः । भूर्भुवः स्वरङ्गिरसामित्येतत्पूर्वः[10] । मन्त्रद्वयान्तेनादधातीत्यर्थः ॥

सहिरण्या[11] वानस्पत्याः[11] समिध आधाय[12] ॥ ८ ॥

---

1. ०स्तयैवेति the Ms. 2. Thus, in accordance with Kāth. VII. 13: 75. 6. the Mss. of Devapāla. Br. and Ād. भूर्भुवः स्वरङ्गिरसामिति. 3. The pratīka with इति is not given by Devapāla. After इति probably च (supplied by me) has fallen out. It is added by Br. in the bhāṣya part of the gṛhyapañcikā. 4. There are many various readings: the one accepted by me rests on Devapāla's Bhāṣya ( उषामुषां रात्रिं रात्रिं । श्रेयसीं श्रेयसीं अतिशयेन प्रशस्तां ), Br. also has the same reading, whereas Devapāla, in his text part, has: उषसां श्रेयसीं श्रेयसी नः ( A श्रेयसतिर्नः ). 5. In his Bhāṣya Devapāla: ०भियस्व, but the explanation is आहितो ऽस्माकं भव । 6. Thus T; समृद्ध० A, समृद्धि० C D. 7. ०मन्त्राणामयोग० D. 8. चावदधा० T A C. 9. ०दघ्ने T. 10. भूर्भुवस्स्वङ्गिर० both times the Ms. 11. Thus Br. and Ād.; the Mss. of Devapāla all om. स, T A reading हिरण्य० . 12. आदाय T. समिधाया A, समिधाय C and first hand of D, समिधादाय second hand of D; समिध आदाय Br.; only Ād. reads as printed.

दे० । हिरण्यशल्कं वानस्पत्याश्च समिधः पृथक्पृथगाधाय[1] । उदुम्बराश्वत्थशमीपलाशविहिततरूणां । अत्र सत्वचः समिधः । स त्वमग्न इति[2] मन्त्रः[3] ॥

आ० । ततः सहिरण्या वानस्पत्याः समिध आधाय पृथक्पृथक् । यास्ते शिवा इति[4] हिरण्यशल्कमादधाति ॥

**तुल्येन पूर्णाहुती[5] हुत्वाग्नेयेन स्थालीपाकेन पशुना वा यजेत ।९।**

दे० । परिसमूह्य पर्युक्ष्य परिस्तीर्य सप्त ते अग्न[6] इत्येकामाज्यपूर्णां स्रुचा द्वितीयामन्नेन तण्डुलादिना प्रजापतये स्वाहेति जुहुयात्स्रुचा । तुल्यत्वमत्र हविषस्तन्नलिपूरणत्वं[7] । आहुतिद्वयं चतुर्गृहीतेन । आग्नेयेन…यजेत । पशुना वेत्यत्राग्नेयेनेति संबध्यते ॥

आ० । ततः परिसमूह्य पर्युक्ष्य परिस्तीर्य केवलपवित्रपूतं बाहिस्तन्त्रिकमाज्यमुत्पाद्य तेन सप्त ते अग्न इति पूर्णां स्रुचं जुहुयात् । एवं द्वितीयां पूर्णां साज्यां सतण्डुलां मनसा प्रजापतये स्वाहेति । एते ते पूर्णाहुती तुल्येन कृत्वा । तत आग्नेयेन स्थालीपाकेन पशुना वा । आग्नेयेनैव ॥

**गौर्वासः कंसो हिरण्यं च[8] दक्षिणा ॥ १० ॥ ४६ ॥ (४।६)**

दे० । गौर्दक्षिणा । वस्त्रादिकं च यथाशक्ति ॥

ब्र०[9] । अथात्र तन्त्रं । दम्पत्योरौपवस्थाशनादनन्तरमृत्विगग्र्यविंशत्यङ्गुलं परिमण्डलमायतनं खात्वा तत्रोद्धतावोक्षिते श्राग्र्यात्सुसमिद्धाद्वैश्यगृहाद्वाग्निमाहृत्य निदध्यात् । यस्य गृहादाहरेत्तस्य गृहेऽत ऊर्ध्वं नाश्नीयात्[10] । तस्यापरेणोषशर्करं वराहविहतं[11] वल्मीकवपां सिकताश्चाद्भिः संसृजति सं वः सृजामीति द्वाभ्यां[12] । अध्वर्युर्मांसं स्त्रियश्च वर्जयेत् । तां रात्रिं तमग्निं यजमानो नृत्तगीतैर्जागृयादुप

1. आदाय CTD. 2. Kāth. VII. 16: 81. 4-5. 3. मन्त्राः D. 4. Kāth VII. 13: 75. 14-15. 5. ०हुत्यौ Br. 6. Kāth. VII. 14: 77. 12-13. 7. Thus the Mss.; meaning? 8. च not given by Devapāla. 9. The following passage refers to the whole Kaṇḍikā. 10. Cp. Kāṭh. VIII. 12: 96.7 sqq. 11. ०विहितां the Ms. 12. Kāṭh. VII. 12: 73. 17-20.

च शयीत । निशायां व्युष्टायामध्वर्युरपरेणाग्निमुपविशति दक्षिणतो यजमानः पत्नी च । सक्षेह्ययं ते योनिर्यो अश्वत्थ इति[1] चारण्यो-राश्वत्थ्योः शमीगर्भ्योः प्रतिपन्नमग्निं समारोपयति । मयि गृह्णा-मीत्यात्मनि[2] । मैषो अस्मानित्यरणी[3] यजमानाय प्रयच्छति । मही विश्वपत्नीति[4] प्रतिगृह्य वाचं यच्छति पत्नी च । अधरामरणिं पत्नी बिभृयादुत्तरां पतिरग्न्याधेये । ततः पश्चान्निर्मन्थ्यस्त्वग्नि-रिष्यते । उपकाश उपशान्ते भस्मोद्धृत्य पार्थिवान्संभारानग्न्यायतने उत्समुद्रादिति न्युप्य । यत्पृथिव्या अनामृतमिति व्यूहेत् । तमपरेण गेहाग्न्युद्धतमधिमन्थनं तस्मिंस्तिरश्चीमधरारणिं पश्चात्प्रजननामुर्व-श्यस्यायुरसीत्याज्येन[5] जागृताग्निसंस्कृतेनारणी समनक्ति । पुरूरवा[5] इत्युत्तरारण्या संधायाभिमन्त्रयते । इत एव प्रथममिति[6] । सहाग्न[7] इत्यधिमन्थति । चित्तिः स्रुगित्यनुवाकं[8] वाचयति[9] । सप्तहोतारं च । उदिते सूर्ये जातेऽग्नौ यजमानो वरमृत्विजे दत्त्वा वाचं विसृजते न चाग्निमालभते पुराहुतिभ्यः । अजन्यग्निरिति[10] जातं । असुरसीति[11] नासिकोष्मणाभिव्यन्योपाविश्योद्दीप्य जानुदघ्नं धारयित्वादधाति भूर्भुवरङ्गिरसामिति[12] पूर्वेण सुगार्हपत्य इति च । आयं गौरिति[13] अग्ने गृहपत इति[14] निदधाति । परिसमूह्य पर्युक्ष्य यास्ते शिवा इति[15] हिरण्यशल्कमादधाति । उदुम्बरशम्यश्वत्था-

---

1. Kāṭh. II. 4: 10. 12-14, where Schrœder's edition has सक्षेमहि. Bhāṣya of Devapāla: अग्निं संबोधयते । हे सक्ष । पचन-समये समवेत साक्षाच्छब्दस्य वा सक्षभावः । हे समवेत । अर्थादरण्योः । एहि । साक्षाद्वा आगच्छ । Further Kāṭh VII. 12: 73. 21-22. 2. Kāṭh. VII. 12: 74. 1-4 ( unto वयम् ). 3. Kāṭh. l. c. 4. Kāṭh. l. c. 6-7. 5. Kāṭh. III. 4: 25. 1. 6. Kāṭh. VII. 13: 75. 1-2. 7. Kāṭh. VII. 13: 75. 3-4 (last word: ब्रह्मवर्च-सौ ). 8. Kāṭh. IX. 8. 9. Cp. Ād. on sūtra 6. 10. Kāṭh. VII. 13: 75.4 (last word: ईड्यः ). 11. l. c. 5-6 (last word: संजानीध्वं ). 12. Here Br. agrees with the text as given in sūtra 7. 13. Kāṭh. VII. 13: 75. 9-10. 14. Kāṭh. l. c. 10-13. 15. Cp. Ād. on sūtra 8.

शनिहतवृक्षपलाशसमिधश्च सं त्वमग्न इति[1] । ततः परिसमूह्य पर्युक्ष्य परिस्तीर्य बाहिस्तन्त्रिकमाज्यमुत्पाद्य स्रुक्स्रुवौ संमृज्य सप्त ते अग्न इति[2] चतुर्गृहीतपूर्णां स्रुचं जुहुयात् । एवं द्वितीयां साम्नां मनसा प्रजापतये स्वाहेति[3] । तत आग्नेयेन स्थालीपाकेन पशुना वा यजेत । भुवो यज्ञस्येति[4] स्थालीपाकस्य यागः । पशुविधिर्नामधेयकरण उक्तः[5] ॥

---

एष औपसदो ऽग्निर्वैवाहनो वा ॥ १ ॥

दे० । एष[6] अनन्तरोक्त आहवनीयधर्मक आहितो वैवाहनो वा[6] दक्षिणाग्न्याकृतिः । उभयेऽप्यौपसदः । अन्वर्थसंज्ञेयं । उपसीदन्त्यस्मिन्नित्युपसत् आवसथः । तत्रभवः औपसदः । वाशब्दो विकल्पार्थः । तेन समुच्चयाभावः । संव्यवहारार्थमौपसदसंज्ञा[7] । औपसदेऽग्नौ सायं प्रातरित्यादि[8] । वैवाहनस्य । विवाहकर्मण्येव[9] संस्कार इतरस्य त्रेताया इवाधानम् ॥

आ० । एष इत्यौपसदोऽग्निः सर्वनाम्ना परामृश्यते । योऽयमनयेतिकर्तव्यतयाहित एष औपसदोऽग्निर्भवति । यौगिकेयं[10] संज्ञा । उपसीदन्त्यस्मिन्नित्युपसत् आवसथः । तत्रभव औपसदः । संव्यवहारार्थं संज्ञा । औपसदेऽग्नौ सायं प्रातरित्येवमादिषु । वैवाहनो वा । औपवसथः । स विवाहेनैव संस्कृतः । नष्टे दुष्टे वाग्नौ पुनः संस्कारः । स चाज्यभागान्ते पावमानीभिर्होमः । नान्यत् दम्पत्योः संस्कारत्वात् । अस्य पुनर्निर्मन्थनादि सर्वम् ॥

तस्मिन्पाकयज्ञाः ॥ २ ॥

दे० । भवन्तीति वाक्यशेषः । औपसदे प्रथमश्राद्धार्थमाहिते पाकयज्ञाः ।

---

1. Kāth. VII. 13: 75. 16-13 (ज्योतिष्मत्या). 2. Kāth. VII. 14: 77. 12-13 (घृतेन). 3. Cp. Ād. on sūtra 9. 4. Kāth. XVI. 15: 239. 8-9. 5. Perhaps in Kaṇḍikā XIX? 6—6. Only in A. 7. संव्यवहार्थं C, ०हार्थः A. ०हार्थो DT, cp. Ād. 8. See LIII. 1. 9. The word विवाह only in A. 10. The akṣara यं supplied by me.

न तु लौकिके गर्भाधानादिसंस्कारत्वात्स्थालीपाकेन निर्वर्त्याः यज्ञाः पाकयज्ञाः अष्टकाद्याः ॥

आ० । भवन्तीति शेषः । इहाग्नये स्थालीपाकेनेति प्रसङ्गः प्रथमश्राद्धे चाष्टकाहोमः । तेन पाकयज्ञानामितिकर्तव्यतोच्यते । तथा श्राद्धार्थमाहिते सर्वपाकयज्ञानुष्ठानम् ॥

तेषामुक्तमुपसमाधानम्[1] ॥ ३ ॥

दे० । यदुक्तमुपसमाधानं तदेव तेषां पाकयज्ञानां । किमुक्तं । पञ्चदश्यामौपवस्त्रं भुक्त्वा व्रतचारिणौ स्यातां । श्वो भूते प्रातर्होमं कृत्वा बर्हिः संनह्य समिधौ चोद्धतावोक्षितेऽग्निं साधयित्वा परिसमूह्य परिस्तीर्याग्नेरुपसमाधानं विभूरसीत्यनुवाकेन[2] । त्रिभिः स्तरैः परिस्तरणं वैश्रवणीयदर्शनात्[3] । सर्वसंभारढौकनमुपसमाधानमित्यपि व्याचक्षते[4] । इष्टिविकारत्वादैष्टिको विध्यन्तः संनिपत्योपकारको नष्टः । अथाधानं तु नेष्यते गृह्याग्नौ प्रायाजानुयाजाचारादुपकारिणः अन्वाधामुद्धारः । उपयामं कृत्वोत्तरतः संस्तीर्य पात्राणि प्रयुनक्ति कृष्णाजिनमुलूखलं स्थालीं मेक्षणमुपयामं स्रुवं स्रुचमाज्यधानीं हविष्यांश्चापरेणाग्निमासादयेत् । तांश्च निर्वपेत् ····· अग्नये अग्नीषोमाभ्यामिति पौर्णमास्यामग्नये इन्द्राग्निभ्यामित्यमावस्यायां । ··· गृह्ये हि तस्यै तस्यै देवतायै चतुरो मुष्टीन्निर्वपतीति दृश्यते ॥

ब्र० । पूर्वेद्युः प्रागौपवस्त्राशनाद्देवताग्रहणमिमा मया श्वो यष्टव्या इति । यो वै देवताः पूर्वेद्युर्गृह्णाति तस्य श्वो भूते यज्ञमागच्छन्तीति श्रुतिः[5] । पूर्वेद्युः परिसमूह्य पर्युक्ष्य यष्टव्यदेवताकीर्तनं । यथा । अग्निरग्नीषोमा इति पौर्णमास्यां । बुभूषतो वैष्णव उपांशुयाजः[6] । अग्निर्विष्णुरग्नीषोमाविति । अग्निरिन्द्राग्नी इत्यमावस्यायां । ··· सायमारण्यं दम्पती अश्नीतो माषवर्जं येन च प्रातर्यक्ष्यमाणः स्यात्तत्सायं

---

1. Of the Mss. of Devapāla T only has उक्तम् । 2. Kāth. II. 13. 3. On the Vaiśravaṇīya cp. Br. on XIII. 4. and on this sūtra. 4. Cp. Ād. on this sūtra. 5. See Kāth. XXXI. 15 : 17. 6. 6. Cp. e. g. Āp. śrs. II. 19. 14.

नाद्यात्[1] । प्रातर्हुते ऽग्नौ ऋतं त्वेत्येतैः[2] परिसमूह्य पर्युक्ष्य परिषिच्य । ...श्वो भूते याग इष्यते । अथ प्रणीतपात्रमनुमन्त्रणं[3] । अस्माकमग्ने ... अग्ने तवोतिभिः[4] । ... ऋतं त्वा सत्येन परिसमूहामि । सत्यं त्वर्तेन परिसमूहामि । ऋतसत्याभ्यां त्वा परिसमूहामि ॥ ऋतं त्वा सत्येन पर्युक्षामि । सत्यं त्वर्तेन प० । ऋतसत्याभ्यां त्वा प० ॥ ऋतं त्वा सत्येन परिषिञ्चामि । सत्यं त्वर्तेन प० । ऋतसत्याभ्यां त्वा परिषिञ्चामि ॥ ... त्रिभिः स्तरैः संस्तीर्य । .. धूरसीति पर्युक्षणमन्त्रः । कया नश्चित्र इति परिस्तरणमन्त्रः । पूर्वे ईशानपर्यन्ता नैर्ऋत्यान्ताश्च दक्षिणाः । वायव्यान्ता उदीच्यः स्युस्तदन्ता वारुणाः स्तराः । तदुक्तं वैश्रवणीयदर्शने[5] ऋक्सामसंहितायां । चतुर्भिर्मन्त्रैर्दर्भास्तरणं । ... उत्तरतः संस्तीर्णे पात्राणि द्वन्द्वं प्रयुनक्ति दर्भोपयामं शूर्पस्रुचं दर्भकृष्णाजिनमुलूखलमुसलं दर्भपात्रे चरुमेक्षणं दर्भाज्यधानी स्रुक्स्रुवौ आघारसमिधौ । व्रीहीन्यवान्वोपसाद्य पाणी प्रक्षाल्य सशूर्पां स्रुचमादायाग्नौ प्रतिताप्य चतुर्भिर्मुष्टिभिः स्रुचं पूरयित्वा सावित्रादिना यथादैवतं निर्वपति ॥

आ० । तेषामुक्तमुपसमाधानं[6] । प्रोक्तं परिभाषासु तावत् । उद्धतावोक्षितेऽग्निसादनं[7] । ततो होमः । दर्शपूर्णमासप्रकृतयः पाकयज्ञाः । तेष्वावृदुपचारस्तूष्णीमिति[8] । उक्तसंकीर्तनं विशेषविधानार्थं । उपसमाधानं द्रव्याणां समभ्याशीकरणं । केचिदग्निलक्षणे समाधाय मनुष्वदित्यन्वादधाति[9] शर्करान्गिषु[10] तत्पर्यन्तमुपसमाधानं दृष्टमिति वदन्तः । तदयुक्तं । तत्र पशुबन्धसिद्धमनूचितं यज्ञान्य-

---

1. See Kāth. XXXII. 7 : 26. 9. 2. Cp. Āp. VI. 5. 4. 3. Thus the Ms. 4. Kāth. IV. 16 43. 15-16 5. Cp. note 3 on page 203. 6. अत्र एतामुक्त० the Ms. 7. This passage is cited from the beginning of the 3rd Kaṇḍikā of the Paribhāṣāsūtra belonging to the Kath. Yajnasūtra. 8. Cp XIII. 7-8. 9. Kāth. II. 9: 15. 4-5 and cp. Mān. Śrs. I. 7. 3. 43, Āp. VII. 7. 1.; the Ms. has : अन्वाविदधाति । 10. Read शर्करादिषु ?

होमार्थे तत्रान्वाधानं लिङ्गप्रकरणैर्विनियुक्तं । इह तन्त्रोपदेशेन नाप्यतिदेशेन ॥

यथाचरितं च[1] पवित्रसंस्करणाज्यनिर्वपणग्रहणाधिश्रयणोत्पवनमवेक्षणं च ॥ ४ ॥

दे० । यथाचरितं मन्त्रवदित्यर्थः । अवेक्षणं पत्न्यापि । तत्राछिन्नाग्रौ समौ प्रादेशमात्रौ दर्भौ पवित्रकं । यथोक्तमुपसमाधानमिति तत्र तत्रोक्तं । हविष्यान्नेन चरुस्थालीं पूरयित्वा अमुष्मै इति संकल्प्यावहत्य निष्पूय चरौ पवित्रान्तर्हिता अपो निषिच्य तण्डुलादिकं निक्षिप्यावधानेनानास्राविताान्त[2] ऊष्मपक्कं चरुं श्रपयित्वाभिघार्योदगुद्वास्योदगभिघार्याघारसमिधावादधाति । विष्णोर्मनसा पूते स्थः[3] । देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः[3] । पवित्राभ्यामुदकमुत्पूय ते नैव तूष्णीं हविष्यान्पात्राणि च प्रोक्षति ॥ आज्यधान्यां पवित्रान्तर्हितायामाज्यं निर्वपति पृश्न्याः पयोऽसि तस्य तेऽक्षीयमाणस्य पिन्वमानस्य पिन्वमानं निर्वपामि[4] ॥ देवेभ्य आज्यं निरुप्य गृह्णाति पञ्चानां त्वा वातानां धर्त्राय गृह्णामि । पञ्चानां त्वा सलिलानां ध० गृ० । पञ्चानां त्वा पृष्ठानां ध० गृ० । पञ्चानां त्वा दिशां ध० गृ० । पञ्चानां त्वा पञ्चजनानां ध० गृ० । भूरस्माकं हव्यं देवानामाशिषो यजमानस्य चरोस्त्वा पञ्चबिलस्य धर्त्राय गृह्णामि । धामासि प्रियं देवानामनाधृष्टं देवयजनं देवताभिस्त्वा देवताभ्यो गृह्णामि[5] ॥ अधिश्रयति[6] । इषे त्वा[6] । अदब्धेनेति[7] पत्न्यवेक्षते । ऊर्जे त्वेति[7] पुनरधिश्रयति । अग्नेर्जिह्वेति[8] पवित्रेणोत्पुनाति । हविरसीत्यनेन[8] वीक्षते । अवेक्षणं वेति[9] योगविभागा-

---

1. च given by Br. and Ād., a Tuebingen Ireaka and of the Mss. of Devapāla by T; यथाचरिते पवि० A. 2. ०वधाने-नास्रा० A; the sense in not clear to me. 3. Kāṭh. I. 5: 2. 18. 4. Kāth. 1. 10: 5. 3-4. 5. Kāth. V. 6: 18. 10-15. 6. A (and cp. Br. on this sūtra): ऊर्जेत्वेत्यग्ना अधिश्रयति । Kāth. I. 10: 5. 8-9. 7. अदब्धेति the Mss.; Kāth. l. c. 8. Kāṭh. l. c. 5. 9. 9. R. चेति and cp. Ād. on this sūtra.

त्पत्न्या अप्यवेक्षणं वा ज्ञायते। अन्यथैक एव योगोऽभविष्यत्। मैत्रायणियायां च स्फुटमेवाभिहितं पत्न्यवेक्षणम्[1] ॥

ब्र०। विष्णोर्मनसेति दर्भपवित्रमुन्मृज्य समावच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रीकरोति। ताभ्यां देवो व इति[2] अङ्गुष्ठकनिष्ठकाभ्यामुत्तानाभ्यां पाणिभ्यामुदगग्रौ दर्भावादाय प्राचीनमुदकमुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीं। सावित्रादिना यथादेवतं प्रोक्षति। देवस्य त्वा सवितुः ··· अग्नये इन्द्राग्निभ्यां जुष्टं प्रोक्षामि। अग्नयेऽग्नीषोमाभ्यां जुष्टं प्रोक्षामि। पात्राणि च तूष्णीं। न्यञ्चि पात्राणि प्रयुनक्त्युत्तानानि प्रोक्षति। ततो व्रीहीनवहन्ति। त्रिः सुफलीकृत्वा निस्तुषान्करोति। उत्पूयापोऽधिश्रयति। प्रक्षाल्य तण्डुलान्पवित्रान्तर्हितानावपति। प्रक्षाल्याग्रतो मेक्षणमवदधाति। उल्मुकेन त्रिः परिहरति। ···· पञ्चानां त्वा···देवताभ्यो गृह्णामीति[3] गृहीत्वा।··· पत्न्यवेक्षणमिह न भवति। दक्षिणतः पत्नीमुपवेश्य। ऊर्जे त्वेत्यग्ना अधिश्रयति। ··· पवित्रेणोत्पुनात्युदकोत्पवनवत्। ···हविरसीति[4] यजमानो वीक्षते ॥

आ०। यथाचरितं च पवित्रसंस्करणं। तेषामुक्तमिति चशब्देनानुकृष्यते। तूष्णींप्राप्ते मन्त्रविधानं। अच्छिन्नौ समौ प्रादेशमात्रौ दर्भौ पवित्रकं। विष्णोर्मनसेत्युन्मार्ष्टि एतावन्मात्रं। नापां संस्करणं। आज्यनिर्वपनादि यथाचरितं मन्त्रवदित्यर्थः। अवेक्षणं चेति योगविभागात्पत्न्याप्यवेक्षणं मैत्रायणीये स्फुटमस्ति। निर्वापं परिसंचष्टे। न च गृहे[5] निर्वापशब्दोऽस्ति यत्सावित्रेण क्रियते। अत्र यत्र हविश्चोदना तत्र तत्र शब्दान्तरेण चत्वारि हवींष्यासादयेति[6] तेन मन्त्रवती निर्वापशङ्का न कार्या। एतत्तद्यथोक्तसमाधानं तत्र तत्रोक्तं। हविष्मत्सु चरुस्थालीं पूरयित्वा अमुष्मा इति संकल्प्याहृत्य पवित्रान्तर्हितासेचनावपनमेक्षणावधानेनानवस्रावितान्तरो-

---

1. See Maitr. S. IV. 1. 12 : 15. 7 and Mān. śrs. I. 2. 5. 12, also in the Kāth. (XXXI. 9 : 11. 6). 2. Kāth. I. 5 : 2. 18-19. 3. Kāth. V. 6 : 48. 10-15. 4. Kāth. I. 10 : 5. 11-14. 5. Read गृह्ये ? 6. R. हवींष्यासाद्येति ? Referring to ?

ऽमुष्मै पक्वं श्रपयित्वा शृतमभिघार्योद्वास्योदगभिघार्याघारसमिधा-वादधाति ॥

प्रागाज्यभागाभ्यामुक्ता आघारौ ॥ ५ ॥[1]

दे० । स्रुक्स्रुवौ प्रतिताप्य समुन्मृज्य[2] स्रुचि चतुर्गृहीतं गृहीत्वाघार-समिधावाधाय[3] चरुमभिघार्योदग्दर्भेषूद्वास्याभिघार्योपयामपाणिः प्रजापतये स्वाहेत्युत्तरार्धेऽग्नेः संततं दीर्घं प्राञ्चं प्रज्वालितायां समिध्याघारयति। स्रुवेण तिष्ठन् चतुर्गृहीतेन दक्षिणमाघारमाघार-यति ऊर्ध्वो अध्वरो दिविस्पृगह्रुतो यज्ञो यज्ञपतेरिन्द्रवान्बृहद्भाः स्वाहा[4] ॥

आ० । अत्र दार्शपौर्णमासिके सर्वस्मिंस्तन्त्रे प्राप्ते आघारग्रहणमन्यपरि-संख्यानार्थं । तेन प्रयाजादीन्परिसंचष्टे । आघारावेव भवतो नान्य-त्किंचित् । आघारहोमयोर्नाम च धार्मग्राहिकत्वेन[5] सधर्मकावेवा-घारौ भवतः । प्रथमं स्रुवेण दीर्घं प्राञ्चं संततं मनसा. । एवं स्रुचा द्वितीयं चतुर्गृहीतेन तिष्ठन्नूर्ध्वो अध्वर इति ॥

युक्तः पुरस्तादिति[6] पञ्चभिराज्यस्य जुहोति ॥ ६ ॥

दे० । आज्यस्येति द्वितीयार्थे षष्ठी । अवयवावयविसंबन्धे वाज्यस्यांशं जुहोतीत्यर्थः। आज्यग्रहणादप्यौषधिद्रव्यं प्रधानमस्तीति ज्ञापयति ॥

आ० । अभिधानाच्च युक्तः पुरस्तादिति पञ्चभिराज्यस्य जुहोति। आज्य-ग्रहणं पाकयज्ञेष्वन्यत्पक्वमौषधं प्रधानं यथा कर्मास्त्येवेति ज्ञापयति ॥

आयुषः प्राणमिति सन्तनीर्जुहोति[7] ॥ ७ ॥

---

1. This sūtra only given by Br., Ād. and a Tuebingen Ms. It seems to have fallen out in the text of Devapāla where the āghāras, however, are treated. 2. Thus emended; समुत्सृज्य the Mss. 3. Emended; ादाय the Mss. 4. Kāth. I. 12: 7. 2. For the whole passage cp. Mān. śrs. I 3. 1. 5 and 15. 5. धर्मग्राहिकतेन the Ms. 6. See Appendix V. 7. In all the Mss. of Devapāla this sūtra has been omitted. Only in T it is added between the lines Br. has प्राणं सन्तन्विति. Cp. XXV. 12.

दे०। आयुषः प्राणमित्येकादश नाभेर्भौवनस्य[1] ॥

आ०। आयुषः प्राणमिति संतनीर्जुहोति। तृतीयासंबद्धो जुहोतिरिह नानुवर्तते इति पुनर्जुहोतिग्रहणं जयादिष्वप्यनुवर्तते ॥

जयाभ्यातानान्राष्ट्रभृतश्च[2] ॥ ८ ॥

दे०। येन कर्मणेर्त्सेत्तत्र[3] जयाञ्जुहुयादितीहापि विनियोगः। ...त्रयोदश जयाः। अभ्यातानहोमश्चतुर्दशः। जयाभ्यातानाञ्जुहोतीत्यनुषङ्गः।... राष्ट्रभृतश्च। अत्रापि जुहोतीत्यपेक्षते। राष्ट्रभृत्संज्ञया प्रसिद्धास्त्रयोदशाहुतयः ॥

आ०। जयाभ्यातानाश्च तान्जयाभ्यातानामाकूतं च स्वाहेति जयास्त्रयोदश। अत्र मैत्रायणीयानामेव चतुर्थी भवति[4]। तत्र देवतानामधेयेन होमः[5]। इह च वाक्येन पदद्वयेन यत्र वाक्येन होमस्तत्र चतुर्थी न भवति। कचिदपि यथा। अग्निर्वृत्राणीति। अभ्यातानाबृहस्पतिपुरोहिता इति प्रवादः। राष्ट्रभृतो ऋताषाडिति। अत्र त्रयोदशाहुतीः षड्भिः पर्यायैर्द्वादश विभज्य विभागश्च प्रतिपर्यायं द्वयोर्वाक्ययोरादौ पठ्यते। द्वे च समाप्ती। यथासंख्येन संबन्धस्तेषामत्र रूपोदाहरणं। ऋताषाडृतधामाग्निर्गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वट्। तस्यौषधयोऽप्सरसो मुदा नाम ताभ्यः स्वाहा वडिति। एवं सर्वत्र[6]। नात्र ऊहो वाक्यप्रक्षेपो वा कर्तव्यः। स नो भुवनस्य पत इति त्रयोदशी। अत्र विश्वा आशा इत्यनेन[7] होमशङ्का न कार्या। विज्ञानमात्रत्वादेवमस्यैषापि

---

1. Only in T.—cp. Br. on XXV. 12. 2. Cp. XXV. 13. 3. Thus, although the Mān. gṛhs. I. 10-11 has the same corruption, emended; कर्मणेच्छेत् the Mss.; cp. T S. III. 4. 6. 1. 4. चतुर्थी viz. विभक्तिः cp. Mān. gṛhs. l. c., where the formulæ are given in the dative. 5. Cp. sūtra 11. 6. This is the practical form of these formulæ, cp. also Schrœder, die Tuebingen Kaṭha. Handschriften, page 28. 7. Could the text of the Kāṭhaka (ed. Schroeder) XVIII. 14. be incomplete? Devapāla also mentions after the formula (P. 275, 12-13) स नो भुवनस्य पते ... शर्म यच्छ स्वाहा the following one: विश्वा आशा अप्सरसः प्रिया ता न इदं ब्रह्मक्षत्रं पातु (sic) तस्मै स्वाहा (Cp. Ms. II. 12. 2: 145. 11).

सपत्नीको विदितो भवतीत्यर्थः। षण्णां मिथुनशब्दो दृश्यते। मिथुना आहुतयः प्रजात्यै द्वादशेति[1] स नो भुवनस्य पत इति राष्ट्रभृत्त्वादिहाग्नौ होमः। अन्यत्रवचनाद्रथमुखादौ[2] ॥

वार्त्रांघ्नावाज्यभागौ[3] ॥ १ ॥

दे०। राष्ट्रभृदनन्तरं वार्त्राघ्नावाज्यभागौ जुहोति। उभयत्र चोभौ पौर्णमास्याममावस्यायां च। अन्येषु पाकयज्ञेषु आज्यमेव भागो ययोस्तावाज्यभागावग्नीषोमौ। आज्यशब्दोऽत्रापि धर्माणां ग्राहकः। तेन चतुर्गृहीतेन होमः। आग्नेयस्याग्नेयी याज्यानुवाक्ये द्वितीयस्य सौमी। अन्ये त्वाहुः। न याज्यैवानुवाक्या भवितुमर्हति। अनुवाक्यया प्रैषः याज्यया हविः प्रक्षेपः। तत्र गायत्र्योऽनुवाक्याः त्रिष्टुभो याज्या इति प्रायिकः। अत एवात्र वार्त्रघ्नशब्दोऽनुवाक्ययाग्राहक इत्याहुः। तथा चोक्तं। यत्र वृत्तस्तत्रानुवाक्येति। अग्निर्वृत्राणि ·· आहुतः[4]। त्वं सोमासि ··क्रतुः[5]। ··· एतदाज्यभागान्तं कर्मोपसमाधानशब्देनोच्यत इत्याहुः। अग्निमुपसमाधायेत्याज्यभागान्तं हुत्वेत्यर्थः ॥

आ०। आज्यभागशब्दोऽयं धर्मग्राहकः। तेन चतुर्गृहीतेनाग्निर्वृत्राणीत्युत्तरतः। तथा त्वं सोमासीति दक्षिणतः। वार्त्राघ्नशब्देनानुवाक्यायै[6] चोदिते। तेनानुवाक्यया होमः सर्वत्र ज्ञायते। दयति[7] यत्रर्चस्तत्रानुवाक्य[8] इत्येवं केचित्। अन्ये पुनराहुः। याज्यया हविः प्रक्षेपो दृष्टः समाचारश्च आ हिमवत आ कुमारीभ्यो याज्यया होमः। यदुक्तं। गृह्यकारः सर्वत्रानुवाक्याश्चोदयति। तदनैकान्त्रिकं[9]

---

1. Kath. XXI. 12 · 52. 19. 2. Kāth. XXXVII. 12 · 93. 12. 3. Thus (with ०त्रा० ) all, the Ms. Chambers of the Kāth has once also this reading. But Devapāla in the explanation of the word has twice with ०त्र०; वार्त्राघ्ना आ० Br., the Stein and a Tuebingen Ms.. ०घ्नावन्त० Vd. and the Bombay Pcaka and all the Mss. of Devapāla. 4. Kāth. II. 14. 18. 1-2. 5. Kāth. l. c. 3-4. 6.? शब्देनावचाक्यै the Ms. 7. Before दयति blank of one akṣara. 8. R. ०वाक्या? 9. Thus the Ms.; the word त्रिक must be contained in this.

याज्या अपि चोदयति । यथा । वषट् ते विष्ण उप ते गा, ये ते अर्यमन् प्र तद्विष्णुरित्येवमाद्याः[1] ॥

**स्विष्टकृदाज्यभागा अन्तरेणावापः[2] ॥ १० ॥**

दे० । उक्तयोराज्यभागयोर्भविष्यतः स्विष्टकृतश्च मध्ये आवापः कर्तव्यः । आवापशब्देन स्थालीपाकयज्ञा आग्नेयादय उच्यन्ते । ··· अथवा स्विष्टकृदाज्यभागान्तरेणावापः प्रधानकर्मणां कर्तव्य इत्यध्याहारेण पूरयितव्यम् ॥

ब्र० । स्विष्टकृदाज्यभागा अन्तरेण प्रधानं । उपस्तीर्य मध्यात्पूर्वार्धाच्चावद्यति संहताभ्यामङ्गुलिभ्यामङ्गुष्ठेन चाङ्गुष्ठपर्वमात्रमवदानमवद्येत् । पश्चात्तृतीयं पञ्चावत्तिनोऽवदायाभिघार्य यतोऽवत्तं तच्चाभिघारयेदयातयामतायै । स्विष्टकृतेऽवदाय न प्रत्यभिघारयेन्न हि ततः परमाहुतिं यक्ष्यन्भवतीति[3] । भुवो[4] उभा वामिन्द्राग्नी[5] इत्यमावस्यायां । प्र तद्विष्णुरित्याज्यप्रधानं[6] । इत्यमावस्यायां प्रधानाहुतयः । ये के च ज्मेति[7] अनुक्तप्रधानदेवतानां[8] सर्वत्र होमः । भुवो[4] आन्यं दिवो[9] युवमेतानीति[9] तिस्रः पौर्णमास्यां । तासामान्यामित्याज्यस्य चतुर्गृहीतेन ॥

आ० । आवापो नाम देवताद्रव्यविशेषः । तदाज्यभागौ कृत्वा प्राक् स्विष्टकृतोऽन्तराले भवति । एतत्तन्त्रं साधारणमाज्यभागान्तं स्विष्टकृदादि च ॥

**नामधेयेन देवतां यजेत तद्देवतया[10] वर्चाग्नेर्यां[11] वोहेदग्नीषोमीयामैन्द्राग्नीं वा द्विदेवतेषु[10] वैश्वदेवीं बहुदेवतेषु[10] ॥ ११ ॥**

---

1. Kāth. VI. 10, XIII. 76, X. 13, II. 10. 2. Thus Br. and Ād.; the copies of Devapāla: ०ज्यभागान्तरेणा० । 3. वक्ष्य० the Bombay Ms. 4. Kāth XVI. 15: 239.8. 5. Kāth. VI. 9: 59.1. 6. Kāth II. 10. 16.3. 7. Kāth. XIII. 15: 167.15. 8. ०देवता the Mss. 9. Kāth IV. 16: 43.3. 10. ०देवत० and ०दैवत० the Mss. promiscue. 11. वा only given by Br., Ād., a Tuebingen Ms. and of the Mss. of Devapāla by T; ACD: तद्देवतयार्चा० ।

दे० । आग्नेयस्थालीपाकस्याग्नये स्वाहेति नामधेयेन जुहुयात्पर्वणि स्थालीपाकस्याग्नये स्वाहा अग्नीषोमाभ्यां स्वाहेति । तद्देवतया ऋचेति पक्षान्तरमूहविधानादृक्षक्षेऽधिमतर[1] इत्याहुः ।··· आग्नेये स्थालीपाके तावदाग्नेयी युक्ता यदा न नामधेयेन यागः देशकाल-कुलभेदे नागविनायकग्रामयक्षप्रभृतीनां यागाः प्रसिद्धाः यद्देवता-भिधानसमर्था वेदे मन्त्रा नाम्नाताः तेष्वपीष्टेषु दर्शपूर्णमासयोरिति नयेनातिदेशप्राप्ता आग्नेयादिमन्त्राः स्मार्तादिष्वेवोहनीयाः । तस्मा-दृक्षु नोहेदिति । ऋक्षूहनिषेधाद्बहुवचनमर्थवत् । तत्रैकदेवतेष्व-ग्नीषोमीयमैन्द्राग्नीं वा प्रकृतौ । बहुदेवतेषु तु वैश्वदेवीं । विश्वे-देवप्रकाशनसमर्थामतिदेश प्राप्तामृचमूहेत् ॥

आ० । अत्र देवताहविर्विशेषो विधीयमानोऽन्तराल उच्यते । कथं । नामधेयेन देवतां यजेत । तद्देवतया वर्चा आग्नेयीं वोहेत् । यत्र नामधेयेन देवतायागः तत्र ऋक्षूहः । किमर्थं । ऊहः किलागति-कागतिः । अमन्त्रत्वात् । ऊहविधानाज्ज्ञायते ऋक् । ऋक्षु[2] आचार्यस्याभिप्रेतरतः । विदधाति च होमार्थमृचः। यत्रेयं व्यवस्था इह जातिकुलाचारव्यवस्थया उच्चावचा देवतायागाश्चोदिता भवन्ति । तत्र नागविनायकदीनां लोके यागानामृग्वेदे न पठ्यते । तत्रोहः । समानाक्षरं नाम लभ्यते तत्र नामधेयेनैव । यथा । पञ्च-हस्ताय स्वाहेति । न पुनर्विद्यमानास्वृक्षु नामधेयेन यागः ॥

ऋतुतिथिनक्षत्रदेवताश्च यजेत ॥ १२ ॥

दे० । षड्तवस्तांस्तदधिष्ठातृभूताश्च[3] देवता नामधेयेन यजेत । एवं तिथीस्तदधिष्ठातृभूताश्च देवता यजेत । तथा नक्षत्राण्यश्विन्यादि तद्देवताश्च । ताश्च शान्तिविमोकमन्त्रेषु पठिताः[4] व्याख्याताश्च प्रधानदेशावाप्राधान्यमिति विज्ञेयम् ॥

ब्र० । ओं अग्नये स्वाहा वसन्ताय स्वाहा । इन्द्राय स्वाहा ग्रीष्माय

---

1. ? Thus ACD, T seems to read ०धानादृक्चक्षो० ।
2. ? क्षक्षू the Ms. 3 A (who alone has this first sentence): ०स्तन्तदधि० । 4. Probably in the Āranyaka of the Kathas.

स्व० । मरुद्भ्यः स्व० वर्षाभ्यः स्व० । विश्वेभ्यो देवेभ्यः स्व० शरदे स्व० । मित्राय स्व० हेमन्ताय स्व० । मित्रावरुणाभ्यां स्व० हेमन्तशिशिराभ्यां स्वाहा ॥ ओं ब्रह्मणे स्वाहा प्रतिपदे स्वाहा । त्वष्ट्रे स्व० । द्वितीयायै स्व० । जनर्दनाय स्व० तृतीयायै स्व० । यमाय स्व० चतुर्थ्यै स्व० । सोमाय स्व० पञ्चम्यै स्व० । कुमाराय स्व० षष्ठ्यै स्व० । मुनिभ्यः स्व० सप्तम्यै स्व० । वसुभ्यः स्व० अष्टम्यै स्व० । पिशाचेभ्यः स्व० नवम्यै स्व० । धर्माय स्व० दशम्यै स्व० । रुद्रेभ्यः स्व० एकादश्यै स्व० । रविभ्यः स्व० द्वादश्यै स्व० । कामाय स्व० त्रयोदश्यै स्व० । भूतेभ्यः स्व० चतुर्दश्यै स्व० । पितृभ्यः स्व० अमावस्यायै स्व० । विश्वेभ्यो देवेभ्यः स्व० पूर्णपञ्चदश्यै स्वाहा ॥ ओं अग्नये कृत्तिकाभ्यः स्वाहा । प्रजापतये स्व० रोहिण्यै स्व० । मरुद्भ्यः स्व० इन्वकाभ्यः स्व० । रुद्राय स्व० बाहवे स्व० । अदितये स्व० पुनर्वसवे स्व० । बृहस्पतये स्व० तिष्याय स्व० । सर्पेभ्यः स्व० । आश्लेषाभ्यः स्व० । पितृभ्यः स्व० मघाभ्यः स्व० । भगाय स्व० पूर्वाभ्यः फाल्गुनीभ्यः स्व० । अर्यम्णे स्व० उत्तराभ्यः फल्गुनीभ्यः स्व० । सवित्रे स्व० हस्ताय स्व० । त्वष्ट्रे स्व० चित्रायै स्व० । वायवे स्व० निष्ट्यायै स्व० । इन्द्राग्निभ्यां स्व० विशाखायै स्व० । मित्राय स्व० अनूराधेभ्यः स्व० । इन्द्राय स्व० ज्येष्ठायै स्व० । निर्ऋतये स्व० मूलाय स्व० । अद्भ्यः स्व० पूर्वाभ्योऽषाढाभ्यः स्व० । विश्वेभ्यो देवेभ्यः स्व० उत्तराभ्योऽषाढाभ्यः स्व० ।[1] विष्णवे स्व० अश्वत्थाय स्व० । वसुभ्यः स्व० श्रविष्ठाभ्यः स्व० । वरुणाय स्व० शतभिषजे स्व० । अजैकपदेभ्यः[2] स्व० पूर्वेभ्यः प्रोष्ठपदेभ्यः स्व० । अहिर्बुध्न्याय[3] स्व० उत्तरेभ्यः प्रोष्ठपदेभ्यः स्व० । पूष्णे स्व० रेवत्यै स्व० । अश्विभ्यां स्व० अश्वयुग्भ्यां स्व० । यमाय स्व० अपभरणीभ्यः स्वाहा[4] ॥

---

1. The Bombay Ms. ins. here: ब्रह्मणे स्वाहा अभिजिते स्वाहा. 2. Thus both the Ms.; we expect अजायैकपदे । 3. Thus both; we expect अहये बुध्न्याय । 4. For the last part cp. Kāth. XXXIX. 13.

आ० । यजेत । स्रुवेणैव । न यजतिशब्दाच्चतुर्गृहीतेन जुहोति । यजत्याः परस्परानुवादात् । जयोर्याजयेदितिवत्[1] । एतत्सर्वप्रधानानां साधारणं । ऋतुश्च तिथिश्च नक्षत्रं च तेषां देवता ऋतुतिथिनक्षत्रदेवताः । चशब्दादृतुतिथिनक्षत्राणि च नामधेयेन यजेत । केचिदृतुश्च तिथिनक्षत्रदेवताश्च चशब्दान्नक्षत्रं विगृह्णते । तेऽपि वृत्ति विशेषेण दोषान्न मुच्यन्ते । तस्मादृत्वादीन्सदेवतान्यजेत । तथा च मैत्रायणीयानां गृह्ये[2] । ऋतुमिष्ट्वा ऋतुदेवतां यजेत । नक्षत्रमिष्ट्वा नक्षत्रदेवतां यजेत । तिथिमिष्ट्वा तिथिदेवतां यजेत । ऋतुतिथीनां देवताः पराशरादिभ्यो ऽवगन्तव्याः ॥

**प्राक् स्विष्टकृत उपहोम इह गावो ऽयं यज्ञ आ नः प्रजां । धूर्भिरुपधूर्भिश्च[3] हुत्वेडामग्न इति स्विष्टकृतम् ॥ १३ ॥**

दे० । इह गाव इत्यादय उपहोमाः । तेषां स्विष्टकृतः पूर्वत्वं नियम्यते । ... इडामग्न इति स्विष्टकृतं यजेतेत्यनुषङ्गः । इह गाव इत्यादीनुपहोमान्हुत्वा मध्यात्पूर्वार्धाच्चावदाय स्विष्टकृतं यजेतेडामग्न इति मन्त्रेण ॥

ब्र० । तत उपहोमः । इह गाव इति तिस्रः । उपस्तीर्योत्तरार्धाद्धविषो हविषोऽग्नये स्विष्टकृते च सकृत्स्थवीयांसमवदाय द्विरभिघार्य प्रचरति । नातः प्रत्यभिघारयेदुत्तरार्धपूर्वार्धे संसृष्टात्स्विष्टकृतः । इडामग्न इति । हुते मेक्षणमनुप्रहृत्य हविरुच्छिष्टमुद्वास्य ॥

आ० । प्राक् स्विष्टकृत उपहोमः । अनुक्ता अपि प्राक् स्विष्टकृत एव भवन्ति । किं वचनेन । स्विष्टकृद्भक्तत्वमुपहोमानामेकादशानामिह गाव इत्यादीनां ज्ञापयति । .....इडामग्न इति स्विष्टकृतं जुहोति समवदायोत्तरार्धपूर्वार्धे ॥

---

1. r ?.　2. See Mān. gṛhs. I. 10.9.　3. Devapāla : तत्र धुर इत्यग्निर्मूर्धेति चतसृणामेव ब्राह्मणविदिता संख्यातया ( संख्या तत्र A ) ब्राह्मणान्यासां धूरं गायतीति ( R. यासौ धुरां गायत्रीति ? see Kāth. VII. 4 : 65.20 ) । उपधुरो ऽप्युपशब्दयोगादुपप्रयन्त इत्याद्याश्चतस्रो याज्ञिकाख्याताः (Kāth VI. 9 : 58. 20-59. 6, dhuras; VI. 9 : 53. 16-19, VII. 2 : 64. 3-6 upadhuras). On the whole cp. Br. on LXXII. 5.

त्वं नो अग्न इति द्वाभ्यां जुहुयादया[1] भूरिति च[1] सर्वप्रायश्चितानि[2] मनो ज्योतिरिति सप्तभिः ॥ १४ ॥

दे० । तत एतदाहुतिद्वयं जुहुयादित्यर्थः अया भूरिति च । जुहुयादित्यनुषज्यते ॥

ब्र० । त्वं नो अग्न इत्यादि मनो ज्योतिरिति सप्तान्ता द्वाविंशतिमाहुतीर्जुहुयात् । त्वं नो अग्ने (1) । स त्वं नो अग्ने (2) । अयाश्चाग्ने (3) । भूः स्वाहा (4) । भुवः स्वाहा (5) । स्वः स्वाहा (6) । भूर्भुवः स्वः स्वाहा (7) । त्वं नो अग्ने (8) । स त्वं नो अग्ने (9) । न्यूनमतिरिक्ते जुहोमि स्वाहा (10) । अतिरिक्तं न्यूने जुहोमि स्वाहा (11) । समं समे जुहोमि स्वाहा (12) । अनाज्ञातं यदाज्ञातं यद्यज्ञे क्रियते मिथः । सर्वं तदग्ने कल्पय त्वं हि वेत्थ यथातथं स्वाहा[3] (13) । स्विष्टिश्च दुरिष्टिश्च ये यज्ञमभिरक्षितः । प्रयाजानन्याजनः पातु यज्ञमन्याभिरक्षतु स्वाहा (14) । आश्रावितमत्याश्रावितं वषट्कृतमवषट्कृतमननूक्तमत्यनूक्तं च यज्ञेऽतिरिक्तं कर्मणो यच्च हीनमग्निष्टानि प्रविद्वन्नेतु कल्पयन् स्वाहा[4] (15) ॥ ततो मनो ज्योतिरिति प्रायश्चित्तानि । मनो ज्योतिर्जुषतां[5] (16) । त्रयस्त्रिंशत्तन्तवः[5] (17) । यन्मे मनश्छिद्रम्[5] (18) । विश्वकर्मा हविरिदं जुषाणः[5] (19) । अयाश्चाग्नेऽसि[5] (20) । त्वं नो अग्ने[5] (21) । स त्वं नो अग्ने[5] (22) ॥ आज्यशेषं स्रुचि चतुर्गृहीतवत्यासिच्य दर्भानग्नौ प्रास्य वेद्यामूर्ध्वस्तिष्ठन्संस्थितयजुर्जुहुयादाश्रावितमिति संततम् ॥

---

1. Br. जुहुयादयाश्चाग्निरिति. The words च सर्व० . . . सप्तभिः are not found in the copies of Devapāla, which must be incomplete here as the Bhāṣya gives the mantras here referred to. 2. सर्वाणि प्रायश्चि० Br. and a Tuebingen Ms. 3. Cp. TBr. III. 7. 11.5. 4. Cp. TBr. III. 7. 11. 1. Devapāla gives this verse at the end of all the prāyaścittas, where it is repeated by Br. also. 5. Kāṭh. XXXIV. 19: 49.14. sqq.

आ० । त्वं नो अग्ने इति द्वाभ्यां जुहुयात् । अया भूरिति च । अयाश्चाग्ने भूः स्वाहेत्यनुवाकशेषं[1] चशब्दात्सर्वप्रायश्चित्तानि मनो ज्योतिरिति सप्त प्रायश्चित्तानि प्राक् संस्थितयजुषो दृष्टानि । इह तथैवाश्रावितमित्यस्मात्पूर्वम् ॥

परिस्तरणान्यनुप्रहरेन्नानुप्रहरेदित्येके ॥ १५ ॥

दे० । सूक्तवाक्येन प्रस्तरं प्रहरतीति प्रकृतावाम्नातं । तत्पाकयज्ञेषु केचिदिच्छन्तीत्यर्थः ॥

आ० । परिस्तरणानि दर्भाननुप्रहरेत् । इह प्रतिपत्तिदर्शनात्परिस्तरणमस्तीति[2] ज्ञायते । नानुप्रहरेदित्येक इति वक्तव्ये पुनराख्यातग्रहणं विकल्पस्य चतुर्भागावशेषतां ज्ञापयति ॥

एवं सर्वा[3] देवताश्चेज्यानि च ॥ १६ ॥ ४७ ॥ ( ४।७ )

दे० । सर्वा देवताः साधारणनाम्ना यजेत । इज्यानि च यष्टव्यानि यज्ञा इत्यर्थः । सर्वदेवताभ्यः स्वाहा । यज्ञेभ्यः स्वाहेति । इज्यानि हविष्यद्रव्याणि । सर्वाणि सर्वदेवतोद्देशेन प्रक्षिपेदित्यपि केचिद्व्याचक्षते ॥

आ० । एवं सर्वा देवताश्च । यथा तिस्रो देवता यजति । इज्यानि च । यजतिशब्दचोदितान्युच्यन्ते । यथा गोयज्ञस्य वरुणयज्ञस्येति[4] । तत्रायं संक्षेपार्थः । स्थालीपाकशब्देन पाकयज्ञतन्त्रमुपस्थाप्यते । देवताद्रव्यशब्देन यज्ञशब्देन च । एतत्त्रितस्याभावे जयप्रभृतिभिरित्यनेन । तस्याप्यभावे यावदुक्तमेव । यथा इह प्रज्ञा यासामूध इति[5] ॥

---

षडाहुतं प्रतिपदि पुत्रकामो ब्रह्मणाग्निः संविदान इति षड्भि-

---

1. Ād here probably refers to the (lost) Mantrapraśna of the Kaṭhas. 2. ०णमस्तीति the Ms. 3 सर्वदेवताश्चे० the Mss. of Devapāla 4. Cp. LXXI. 1 and 11 5. Cp. LVIII. 2.

राज्यस्य जुहोत्युत्तराभिः षड्भिः[1] स्थालीपाकस्य ॥ १ ॥

दे० । तस्मिन्पाकयज्ञा इत्युक्तं[2] । द्विविधाश्च नित्यकाम्यभेदेन पाकयज्ञाः । तत्र नित्याः पूर्वोक्ताः नियतकरणीयत्वात् । काम्यास्त्वधुनोच्यन्ते नियमकार्यत्वाभावात् ।···षडाहुतय आज्येन षट् स्थालीपाकेनास्मिन्नित्यन्वर्थसंज्ञा षडाहुतमिति । तच्च प्रतिपद्येव कुर्यात् । न जातु चित्पञ्चदश्यां । पुत्रकाम इत्यधिकारिनिर्देशः । ब्रह्मणाग्निः संविदान इति षड्भिर्ऋग्भिः । यत्ते[3] ग्रन्त्यप्सरस इत्यादिभिः स्थालीपाकेन जुहुयात् ॥

ब्र० । षडाहुते शुक्ले कृष्णे वा प्रतिपद्यग्नये रक्षोघ्ने जुष्टं निर्वपामीति निर्वापः । ब्रह्मणाग्निः ··इति षड्भिराज्येन । ये ते ग्रन्त्यप्सरस··· इति षड्भिः स्थालोपाकेन । तत ऋतुतिथिनक्षत्रदेवताश्च यजेत ।

आ० । नित्यान्युक्त्वा काम्यानि शूलगवपर्यन्तानि कथ्यन्ते । किमर्थमुच्यन्ते । अत्र पाकयज्ञा इति सर्वपाकयज्ञानां साधारणं तन्त्रमुक्तं । काम्यानां कामोत्पत्तिवशादनुष्ठानं कामोत्पत्तिश्चानियतकालानंतेषां[4] क्रमः । नित्यानि विकृत्य निविशन्ते[5] । अतस्तान्युच्यन्ते । पुत्राश्च महोपकारत्वादात्मनः[6] पूर्वेषां चेष्यन्ते । अतः पुत्रकामः षडाहुतं नाम काम्यं पाकयज्ञं कर्म प्रतिपदि कुर्यात् । षडाहुतयो यस्मिंस्तत् षडाहुतं । प्रतिपदीति नियमो न पञ्चदश्यां । आज्यभागान्ते ब्रह्मणाग्निः संविदान इति षड्भिर्ऋग्भिराज्यस्य चतुर्गृहीतंर्जुहुयात् । प्रधानत्वादुपांशुयाजवत् ।

---

1. These 12 verses probably were handed down in the (lost) Mantrādhyāya of the Kaṭhas. They correspond with Mān. gṛhs. II. 18.2 in the following order: *a, b, g, d* ( आशां यस्ते जिघांसति ), *e, c, f* ( . . गन्धर्वो गोष्ठ्या गेह्याश्च ये । क्रव्यादमुत देविनं . . ), *h, i, k* ( गर्भं देहि सिनीवालि गर्भं देहि पृथुष्टुके । गर्भं ते अश्विनौ देवा आधत्तां पुष्करस्रजम् ), *l* (. . . अश्विनौ . . .), *m* (मास्याः प्रजां रीरिषो . .).
2. See XLVII. 2. 3. Thus here the Mss., but the Bhāṣya ये ते । 4. Thus a quotation in T, but the Bombay Ms. reads कामान् instead of कालान् . 5. Thus ! 6. Read : सहो०?

उत्तराभिः षड्भिः स्थालीपाकस्य ये त्व ग्रन्त्यप्सरस इत्येवमादिभिः ॥

सौविष्टकृते त्रयोदशीम्[1] ॥ २ ॥ ४८ ॥ ( ४ । ८ )

दे० । सौविष्टकृते कर्मणि पुनस्त्रयोदशीमाहुतिं जुहुयात् । नेजमेष[2] परापतेति मन्त्रो न त्विडामग्न इति[3] ॥

आ० । सौविष्टकृते यागे त्रयोदशीमृचं नेजमेषेत्येतां कुर्यात् । इडामग्न इत्यस्य निवृत्तिः ॥

---

नक्षत्रयज्ञेषु[4] नक्षत्रदेवतानामृचस्ताभिर्यजेत । अग्निर्मूर्धा हिरण्यगर्भो मरुतो यन्मृडा नो रुद्र सुत्रामाणं तव श्रिये नमो अस्तु सर्पेभ्य आहं पितॄन्सदा सुगो ये ते अर्यमंस्तत्सवितुर्य इमे द्यावापृथिवी वायुरग्रेगा इन्द्राग्नी रोचना मित्रो जनानिन्द्रः सुत्रामा यं ते देवी शं नो देवीर्विश्वे देवा ब्रह्म जज्ञानं वषट् ते, विष्ण आ मे गृहा इमं मे वरुणोपप्रागादहिरिव भोगैः पूषा गा अन्वेतु नः प्र वां दंसांसि यमो दाधारेति प्रत्यृचम्[5] ॥१॥ ४९ ॥ ( ४।९ )

दे० । इहाधिकफलविशेषान्तराश्रवणाद्विधिप्रत्ययमात्रश्रुतेश्च नित्यत्वं केचिन्नक्षत्रदेवतायज्ञानां वदन्ति प्रतिपदि चानुष्ठानं । अन्ये तु फलवत्संनिधौ यत्फलं[6] तदङ्गमिति फलवतो विवाहस्यानतिदूरे

---

1. ०दशी Br. and the Mss. of Devapāla, but further on repeated with the accusative. It is probable that also this 13th verse was contained in the lost Mantrādhyāya. It corresponds with Mān. gṛhs. II. 18.4. a, but has गर्भमाधेहि यः पुमान् ( as has also the Ms. S. of the Mān. sūtra, see Knauer's Introd. page LIII ). 2. It is remarkble that not only in the text, but also in the Mantrabhāṣya all the Mss. of Devapāla unanimously present this faulty reading. 3. Cp. XLVII. 13. 4. The Bombay Ms. of Br. अथ नक्षत्र० 5. For the corresponding nakṣatras and devatās see Br. on XLVII. 12. 6. Thus A ; यदफल CD.

सूत्रकृता कर्तव्यतया प्रतिपादितत्वाद्गृहीतगर्भया वध्वा उपकारत्वे-
नाङ्गत्वमाहुः । अन्येऽन्यथा कथयन्ति । सन्ति नक्षत्रेष्टयः आहवनीय-
साध्यवदनकाम्याः[1] कार्त्तिकामावस्यायां[2] कृत्तिकास्वग्नये कृत्तिका-
भ्योऽष्टाकपालमित्याद्याः[3] । तत्र च युगपत्सर्वकामानवाप्नुयादिति
सर्वकामसिद्धिः । फलवत्त्वेनाम्नाता एव गृह्याग्नावपि काम्यकर्म-
प्रस्तावेनोक्ताः पुरोडाशानां स्थानेऽत्र चरवो व्रीहिमया यवमया
वा । ···तथा गृह्यान्तरं । तस्यै तस्यै चरव इति[4] । अत एव काम्या
अभीष्टयो गृह्याग्नौ कार्या ज्ञायन्ते । तुल्यनयनतया । अयं सूत्रार्थः ।
अष्टाविंशतिर्नक्षत्रदेवता वक्ष्यमाणाष्टाविंशल्लिङ्गिका ऋचः । ताभिर्न-
क्षत्रयज्ञेषु यजेत । कथं । प्रत्यृचं । ऋचमृचमिति तेन यागभेदो
द्रव्यदेवतासंबन्धभेदनत्वात् ॥

ब्र० । नक्षत्रयज्ञस्य कृत्तिकायुक्तायाममावस्यायामारम्भोऽस्थूरिर्गृहपति-
र्भूयासमित्यादयो[5] नक्षत्रेष्वर्थाः कामास्तत्रोक्तानि हवींषि । आज्य-
भागान्तं हुत्वाग्निर्मूर्धेत्यादिभिर्यथादेवताभिः प्रधानम् ॥

आ० । नक्षत्रयज्ञे नेहाधिकारे कश्चित् । न च कालो न च किंचिद्धविः
न जाने[6] । किमिदं । सन्ति नक्षत्रयज्ञाः[7] नक्षत्रेष्टयः । तानिह[8]
गृह्ये सूत्रकारो विदधाति । तेष्वेककालेषु कार्तिक्यामावस्यायां
कृत्तिकास्वग्नये कृत्तिकाभ्योऽष्टाकपालमित्येतानि हवींषि । पुरोडाश-
स्थाने चरवः । अनेनैव न्यायेनान्या अपि काम्याश्चारायणीयाया-
मुक्ताः गृह्ये कर्तव्या इति दण्डापूपिकयैव सिद्धं । तथा च गृह्यान्तरे
काम्यानां स्थाने तस्यै तस्यै चरवस्तानेव कामानाप्नुवन्तीति[4] । इह
च एता वै रुचो नामेष्टय इत्युपक्रम्य अग्निरस्थूरि णो गार्हपत्येन
प्रजापतिः प्रजया पशुभिरिति[9] अस्मान्नक्षत्रदेवताभ्यः फलश्रवणात् ।

1. ? Thus D; ०वदेनकाम्याः A, ०वदंनकाम्याः C. 2. ०मावस्यां C. 3. It is probable, that the Kaṭha texts contained a chapter corresponding with TBr. III 1. 4-6. 4. Which Gṛhyasūtra is meant? 5. Thus emended; स्थूरीगृह० the Ms. 6. ? नजाने । जाने the Ms. 7. ०यज्ञः the Ms. 8. तानीह the Ms. 9. I am unable to point out the source of this quotation.

नक्षत्रदेवतानामृचो वक्ष्यामः[1] । ताभिर्यजेत नक्षत्रयज्ञं । प्रतिनक्षत्रमेकैवाग्नेयानुमतवर्ज्जं[2] । अग्निर्मूर्धेत्येवमाद्या अष्टाविंशतिः । प्रत्यृचं यागः । एवमिज्यानि चेत्यनेन[3] पाकयज्ञतन्त्रम् ॥

अथोपहारः ॥ १ ॥

दे० । अथशब्द आनन्तर्ये । हुतपाकयज्ञविधिरुक्तः । अनन्तरमहुतपाकयज्ञेषु वक्तव्ये सर्वाहुतपाकयज्ञप्रकृतिभूता उपहारा उच्यन्त इत्यर्थः । वैश्रवणीये ह्युपहारा दृष्टाः । तेऽन्येषां प्रकृतयः ।

ब्र० । यथा नागविनायकदुर्गादीनां देशाचारप्रसिद्धं बलिकर्मापि कर्तुमुपक्रमते[4] ॥

आ० । उक्तमुपहारोऽहुतानां प्रकृतिरिति[5] उपहारं च वक्ष्यति ॥

यथाचरितमन्नं साधयित्वा सावित्रेण देवतायै बलिं[6] हरेत्[6] ॥२॥

दे० । तथा चाचरतापि देशविशेषादिषु यथायथं प्रसिद्धाः अतो यथाचारं यथादेवतं चान्नं पायसकृसरापूपादिकं साधयित्वा दीपपुष्पधूपादिपूर्वकं सवितृदेवताकेनोहितचतुर्थ्यन्ताभिमतनामान्तेन[7] विनायाकायोपहारमित्यूहकल्पनया बलिमुपहरेत् ॥

ब्र० । तदा मिश्रापूपपायसमोदकादि साधयित्वोपहारोऽहुतानां प्रकृतिरिति वचनाद्वैश्रवणीयवदासनार्थं तस्यै तस्यै देवतायै विष्टरमास्तीर्य तल्लिङ्गैर्मन्त्रैर्नामधेयेनावाहनं कृत्वा पाद्यार्घ्ये स्रजो गन्धांश्चोपहृत्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां विष्णवे बलिमुपहरामीति बलिमुपहरेत् ॥

आ० । देवतायै बलिं हरेदिति । ते शास्त्रचोदिताः लौकिकाश्च । तत्र विधिविशेष उच्यते । यथाचरितमन्नं साधयित्वा मिश्रापूपपायसमोदकादि आचारसिद्धं देवतार्थं साधयित्वा देवतायै आसनमुप-

---

1. R. वक्ष्यमाणाः ?　2. Cp. the Nakṣatreṣṭis according to Baudh. śrs. XXVIII. 3 : 349. 6.　3. See XLVII. 16. 4. ०मन्ते the Bombay Ms. (the Lahore Ms. omits this whole Kaṇḍikā).　5. See XIII. 4.　6. Thus the Ms. of Devapāla in the text and Ād.; बलिमुपहरेत् Br.; cp. LI. 12. 7. ०भिमतानाo the Mss.

कल्प्य तल्लिङ्गेन मन्त्रेणावा नं कृत्वा स्रजो गन्धांश्चोपहृत्य धूपं प्रदाय यथाचारेतमन्न पहरेत् सावित्रेण देवस्य त्वेत्यनेन मन्त्रेण पूष्णो हस्ताभ्यां पञ्चहस्ताय बलिमुपहरामीत्येवं प्रयोगः ॥

यथाचारं जपः[1] ॥ ३ ॥

दे० । आचारानतिक्रमेण जपाः । यस्यै देवतायै बलिरुपह्रियते तद्दैवतैर्मन्त्रैर्जपाः कर्तव्या इत्यर्थः । अभिमतदेवतालिङ्गकमन्त्रालाभे तु लौकिकेन श्लोकादिनोपहारः कर्तव्यः ॥

ब्र० । यथाचारं जपा इति । तद्देवत्यान्मन्त्रान्देशाचारप्रसिद्धानि पौराणिकस्तोत्राणि जपेत् ॥

आ० । तद्दैवतलिङ्गान्मन्त्राञ्जपेदित्यर्थः । विनायकादीनां लौकिकी स्तुतिः ।

उक्तः शेषः ॥ ४ ॥ ५० ॥ ( ४ । १० )

दे० । उपहृतशेषेण ब्राह्मणान्भोजयेत् । आदित्यांश्चेत्यादिः[2] शेषः ॥

ब्र० । वैश्रवणीयकर्मवदुपहृतेन पायसादिनानेन च ब्राह्मणान्भोजयित्वा यथाशक्ति दक्षिणया च तानभ्यर्च्योपहृतशेषस्य स्वयं प्राश्नीयात् ॥

आ० । अन्येनानेन च ब्राह्मणान्भोजयित्वेति । चशब्दादुपहृतशिष्टेन[3] च । उपहृतशिष्टस्य स्वयं प्राश्नीयादिति नियमः ॥

---

अथ पशुकल्प उक्तः ॥ १ ॥

दे० । कल्पनं कल्पः विधिः । पशोः कल्पः पशुकल्पः । स उक्तः । क्वोक्तः । आधाने । आग्नेयेन स्थालीपाकेन पशुना वा[4] यजेतेति । सोऽयं नित्यपशूपहार उक्तः । अतश्च नित्यः । यथैव हि नवान्नेनाग्रायणमकृत्वा तद्भोजनमनुपन्नं तथा मांसेनानिष्ट्वा मांसलक्षणमप्ययुक्तमित्याहुः[5] । अथशब्द आनन्तर्ये । तस्येतिकर्तव्यतां वक्ष्याम इत्यध्याहारः । तेनायं समूहार्थः हविःकल्पश्चोक्त एवाग्न्याधाने । तत्रेष्टिविकाराणां हविःकल्पने प्रकार उक्तः । अनन्तरं पशुविकारस्य

---

1. जपा Br. but cp. LI. 13. 2. आदित्याश्च° the Mss. Refers to ? 3. This च refers probably to the words अन्येनानेन च ( r. अन्येनान्नेन च ? ), which are apparently quoted from the Yajnasūtra. 4. वा supplied by me, cp. XLVI. 9 5. R. मांसभक्षण°.

पशुकल्पस्य प्रकारं वक्ष्यामः ॥[1]

आ० । उक्तमाग्नेयेन स्थालीपाकेन पशुना वा यजेत । तथा द्वौ पशू उपाकरोतीत्यादि[2] । तत्र पशाविति कर्तव्यतोच्यते । अथ पशुकल्प उक्तः । दर्शपूर्णमासविकाराणां पाकयज्ञानां तन्त्रमुक्तं । इदानीं पशुविकाराणां तन्त्रमुच्यते । पशोः कल्पः पशुकल्पः । स उक्तः । अथ पशुकल्पः । यूपाहुतिमिति[3] । अत्र[3] विकारं विवक्षुः प्रकृतिमापादयति । आद्रापोद्वापलक्षणाः[4] । तान्वक्ष्यामः विकारेषु यथाचोदितमिति वचनाद्यावदुक्तमेव भवति यच्च विधीयते तत्पशुकल्पवद्भवति ॥

## पूर्वेण शाखां निहत्य ॥ २ ॥

दे० । पूर्वेण मूलसूत्राणामुक्तः[5] । स उक्त एवेह यथोक्तः पूर्वेणाधिकारवाक्येन[6] तत्र तत्र यथा नवेनानर्चिता ह्यस्य पशुहवेन नवाग्नय इति अतोऽसौ मत्स्यपशुना[7] यजेतेति तथेत्याद्युक्तमग्नये पशुना यजेत पुनः पूर्वेण शाखां निहत्येति सूत्रभेदो[8] यथान्यैः कृतः यथा पूर्वस्मिन्पक्षे तस्य पूर्वेणेति संशयः स्यात् । पूर्वेणाग्निमिति च नाधीतं न चोपयुज्यते । उक्तः पूर्वेणेति सिद्धत्वात् । पशुग्रहणाच्छाग एव । शाखावचनात्तक्षणादयो[9] यूपधर्मा न भवन्ति तत्स्थाने प्रयुक्तायाः शब्दान्यत्वात् ॥

---

1. The paddhati of Br. may be better given as a whole at the end of this Kaṇḍikā. 2. Cp. XLVI. 9. and XIX. 3. 3. My conjecture, यूपाहुमित्यत्र the Ms. It is probable that the chapter on paśubandha in the Katha-yajnasūtra began thus: अथ पशुकल्पः । यूपाहुतिं होष्यन् । 4. Read probably आद्रवोद्वापतक्षणाः । 5. Thus AT; मूलमन्त्राणा० CD. 6. The interpretation of पूर्वेण seems to have caused difficulties to the interpretators. Devapāla, probably rightly, connects it with the preceeding sūtra ( अथ पशुकल्पः । उक्तः पूर्वेण ). 7. This all is incomprehensible to me. 8. See Ād. on this sūtra. 9. Thus emended; ०तर्पणादेयो or ०तर्पणादेया the Mss.

आ० । पूर्वेणाग्निं[1] शाखां निहत्य यूपस्थाने ॥

**तस्मिंस्तूष्णीं सर्वं यन्न लुप्तार्थम्[2] ॥ ३ ॥**

दे० । तस्मिन्पशौ तद्वद्विक्रियमाणे[3]ऽपि यदुच्यते तत्तूष्णीं सर्वं भवति । सर्वं यत्कर्तव्यं तत्तूष्णीममन्त्रकं कुर्यात् । यन्न लुप्तार्थं । लुप्तार्थं तत्तूष्णीमपि न भवति यथा शाखायां तक्षणम् ॥

आ० । सर्वं तूष्णीं । यदुपाकरणादि इह चोद्यते तदमन्त्रकं कुर्यादित्यर्थः ॥

**देवताहोमवर्जम् ॥ ४ ॥**

दे० । यद्देवतासंबन्धं[4] तत्समन्त्रकं । देवतानाम्नावकर्तव्यं[5] होमश्चेत्यर्थः ॥

आ० । देवताशब्दं वर्जयित्वा होमांश्च वर्जयित्वा ॥

**प्रागाज्यभागाभ्यां दर्भेण पशुमुपाकरोति प्रोक्षति पाययति पर्यग्निं करोति ॥ ५ ॥**

दे० । परिसमूहनादि राष्ट्रभृदन्तं कृत्वा प्रागाज्यभागाभ्यां दर्भेण पशुमुपाकरोति तूष्णीं प्रोक्षति च तथा पाययति अपः[6] पर्यग्निं च करोति पशुं । दर्भग्रहणं शाखानिवृत्त्यर्थं । प्रागाज्यभागाभ्यामुपाकरणीयहोमौ प्रजापतेर्जायमान इति[7] । ततो दर्भेण पशूपाकरणं शाखान्ते प्रत्यङ्मुखं पशुमुपस्थाप्य । रशनादानं तूष्णीं । ऋतस्य त्वेत्यादनाग्नये जुष्टं बध्नामीति[8] पूरितेन दक्षिणेऽर्धशिरसि पशुं बध्नाति छागम् ॥

आ० । प्रागाज्यभागाभ्यां परिसमूहनादिराष्ट्रभृदन्तं कृत्वा, दर्भेण पशुमु-

---

1. Did Ād. find the word अग्निं in his text, or is it added by him? cp. Devapāla. 2. The last three words only in Devapāla. I doubt if they belonged to the original sūtra; probably they are another redaction of the sūtra XIII. 9. But, as Devapāla comments upon them, I have taken them into the text. 3. तद्वद्विक्रिय० AT. 4. ०बद्धं DC. 5. ? Thus read AT; D ०नाम्नानकर्त० DC. 6. पयः DC; AT omit the word. cp. Ād. 7. Kāṭh XXX. 8: 169. 17-21. 8. Kāṭh. III. 5: 25.7.

प्रकरोति तूष्णीं । प्रोक्षति उरसि सर्वतश्च । पाययति अपः । पर्यग्नि करोति ॥

घृतमवघ्राप्यापाव्या जुहोति ॥ ६ ॥

दे० । पशुं घृतमवघ्राप्य । अपाव्यसमाख्याता आहुतीर्जुहोति तेनैव घृतेन प्रजानन्त इति पञ्चभिः[1] ॥

आ० । घृतमवघ्राप्य । अपाव्या जुहोति प्रजानन्त इति पञ्चभिः । उपाकरणीयौ होमौ न भवतः अचोदितत्वात्[2] ॥

उल्मुकं हरति ॥ ७ ॥

दे० । येन पर्यग्निकरणं कृतं तदेवोल्मुकं हरति श्रपणार्थम् ॥

आ० । पशुश्रपणार्थम् ॥

दर्भमास्तृणाति ॥ ८ ॥

दे० । दर्भस्तरणं तूष्णीं करोति ॥

आ० । प्रत्यगग्रम् ॥

तस्मिन्यथोक्तं संज्ञापयन्ति ॥ ९ ॥

दे० । तस्मिन्दर्भे संज्ञापयन्ति । मारयन्ति । बहुवचनेन नासिकादिग्रहणादिना प्रत्यक्शिरसमुदक्पादमित्यादि ज्ञायते ॥

आ० । तस्मिन्दर्भे । यथोक्तं प्रत्यक्शिरसमुदक्पादं । बहुवचनमनियमार्थं । अन्येऽपि संज्ञापयन्ति ॥

संज्ञप्ते यथोक्तमद्भिः प्राणायतनानि स्नापयति ॥ १० ॥

दे० । प्रमापिते सति प्राणस्य शरीरस्य वायोर्यान्यायतनानि मुखादीनि तानि स्नापयति । यथोक्तग्रहणात्पत्न्या स्नापनं ज्ञायते ॥

आ० । संज्ञप्ते प्रमापिते । यथोक्तमद्भिः प्राणायतनानि स्नापयति । यथोक्तग्रहणान्मन्त्रवत् । पत्नी चोदकहस्ता च पत्न्यादित्यमुपतिष्ठते । नमस्त आतानेत्यादि समदूभ्य इति भूम्यां शेषमित्यन्तं[4] प्राणायतनानां स्नापनम् ॥

---

1. Kāth XXX. 8: 130. 1-10. 2. Here Ād. differs from Devapāla and Br. 3. Emended: हरति पानार्थं ACD, मानार्थं T. 4. Kāth III. 8: 25. 15-26. 1

उत्खिद्य वपां शाखां[1] विशाखां[1] च प्रच्छाद्य चरमे ऽङ्गारे वपां निगृह्यान्तरा शाखाग्नी हृत्वाभिघार्य श्रपयति ॥ ११ ॥

दे० । ततो नाभिक्रोडयोर्मध्याद्वपामुत्खिदति खड्गेन । देवताभिधानत्वादग्नये जुष्टमवकृन्तामीति मन्त्रेण । उत्खिद्य च वपाश्रपण्यां शाखायां[2] प्रच्छादयति । ततश्चरमेऽङ्गारे वपां निगृह्णाति । उत्तरभागे सर्वान्ते योऽवस्थितोऽङ्गारस्तत्र निदधातीत्यर्थः । ततस्तां शाखाया अग्नेश्च मध्येन हरति । दक्षिणभागमानीयोदङ्मुखोऽभिघार्य श्रपयति ॥

आ० । उत्खिद्य वपां देवताभिधानत्वात्[3] मन्त्रेण यथा अग्नये जुष्टमवकृन्तामीति । विशाखामविशाखां च वपाश्रपण्यौ तथा[4] प्रच्छाद्य । उदगग्नेश्चरमेऽङ्गारे सर्वबहिः स्थिते वपां निगृह्य निधाय । अन्तरा शाखाग्नी[5] शाखाग्न्योर्मध्येन नीत्वा दक्षिणतो ऽग्नेस्ततो ऽभिघार्य श्रपयति ॥

शृतां दर्भेषूदगग्रेषु निधायाज्यभागपरिवप्यौ हुत्वा वपां देवताया उपनामयेदुप्यपरिवप्यौ हुत्वा सदर्भे वपाश्रपण्या[6] अग्ना[6] अनुप्रहृत्यापोहिष्ठीयाभिर्मार्जयित्वोक्तान्यवदानानि[7] प्राक् स्विष्टकृतो देवतायै बलिं हरेत्[8] ॥ १२ ॥

---

1. Thus Br. (text) and all the Mss. of Devapāla. Ād., however, has, probably rightly: विशाखामविशाखां च । For these nouns cp. Baudh. śrs. IV. 1: 107. 3-4. ( the two वपाश्रपणी ). 2. Thus AT, शाखाया D and first hand of C, शाखायाः C second hand. 3. Cp. LI. 4. 4. Read तया ( *viz.* वपया ) ? 5. This word inserted by me. 6. Thus the sandhi according to Br. (and cp. Ād.). Devapāla is here no authority. 7. मार्जयित्युक्ता० the Lahore Ms. of Br., मर्जयत्युन्यवदा० the Bombay Ms. 8. Only the Lahore Ms. of Br. has preserved the complete text; the Bombay Ms. leaves out the words: हुत्वा वपां दे० उपनमयेदुप्यपरिवप्यौ. The copies of Devapāla give the sūtra text intermixed with commentary.

वृक्का अनिनीडिते[1] गुदे । गर्तं खात्वा तस्मिन्नूवध्यं[2] कुर्यात् । श्रप्य-माणेष्ववदानेषु पशुपुरोडाशस्थानीयं[3] चर्वर्थं पात्रशेषं प्रयुनक्ति । यद्देवत्यः पशुस्तद्देवत्यो व्रीहिमयश्चरुः । पाणी प्रक्षाल्य सशूर्पां स्रुचमादाय सावित्रादिना यथादेवतं निर्वपति । प्रोक्षणीः साधयित्वा सावित्रादिना यथादेवतं प्रोक्षति । तूष्णीं पात्राणि प्रोक्ष्य कृष्णाजिन मुलूखलमादाय व्रीहीनवहन्ति । प्रक्षाल्य तण्डुलान्पवित्रान्तर्हिता-नावपति । प्रक्षाल्याग्रतो मेक्षणमवदधाति । उल्मुकेन त्रिः परिहृत्य बलिहरणार्थं तूष्णीमुपचरितं स्थालीपाकं श्रपयेत् । श्रृते पशौ पशुचरुणा प्रचरति । श्रृतमभिघार्योदगुद्वास्यालंकृत्य पात्र्यां सादयत्य-भिघार्य वेद्यां बर्हिष्यासाद्य चाभिघारयति । स्रुच्युपस्तीर्य मेक्षणे-नावदायाभिघार्य चरुं प्रत्यभिघार्य नामधेयेन तद्देवतया वर्चा जुहुयात् । इष्टे स्विष्टकृतमग्निं सुदीमित्यग्नये[4] स्वाहेति वा । मेक्षण-मनुप्रहृत्य[5] । ततो दर्भोपयामः पृषदाज्यस्य स्रुवेण प्रगृह्य स्थलाद्धृदं-यमभिघारयति । पशुं चान्तरा शाखाग्नी हृत्वा दक्षिणतोऽग्नेर्दर्भेषु निदधाति । स्रुचि यूषपात्रे चोपस्तीर्य[6] प्लाक्षामग्रे[7] ऽसिना हृदयस्या-वद्यति प्रान्ताज्जिह्वाया उत्सादतो[8] द्वितीयं क्रोडस्य कपिललाटस्य पार्श्वयोर्यक्नो वृक्कयोर्गुदस्याणीयस्य[9] श्रोणेर्मेदसो[10] हिरण्यं च यूषपात्रे स्वधित्यन्तर्हिते यूषमासिच्याभिघार्यावदानानि वसां च नामधेयेन तद्देवतया वर्चा जुहुयात् । यद्यर्धचेंऽनूक्ते यूषार्धं जुहोति घृतं घृतपावान इति[11] हुतेषु प्रधानावदानेषु शेषं दिशः प्रदिश इति[12] । यदि नामधेयेन पुरस्ताच्चोपरिष्टाच्चावदानानां वसाहोमः । ततः पृषदाज्यस्य सकृच्चतुर्वावदाय वनस्पते रशनयति हुत्वा ।

---

1. ? Thus Bombay अनिडेद्विति Lahore. 2. तस्मिन्नत्रश्यं both. 3. Thus Lahore: oपुरोडाशस्थालपाकं Bombay. 4 Kāth XVIII. 21 : 283. 1-2. 5. These two words only in Lahore. 6. पस्तीर्येण Bombay. 7 - Thus Lahore, प्रक्ष्यामग्र Bombay : read : प्लक्षायामग्रे ? 8. Cp. Mān. srs. I. 8. 5.18. 9. oणीयस्थ Bombay, oणीयस्थ Lahore. 11. Kāth III. 7 : 26.13. 12.l.c. 14. 13. Kāth. XVIII. 21 . 262. 10-11.

तत ऋतुतिथियागादि परिते दूडभो रथ इत्यन्तं[1] हुत्वा । प्राक् स्विष्टकृतः पशुदेवतायै मधुपर्कपूर्वं सावित्रेण बलिमुपहरेत्[2] । यथाचारं तल्लिङ्गमन्त्रं जपेत्[3] । ततः सव्यायाः श्रोणेर्दक्षिणस्य कपिललाटस्य गुदस्य स्थवीयस इति सौविष्टकृतानां सकृत्सकृत्समवदाय द्विरभिघार्या देवानामिति[4] जुहुयात् । हविरुच्छिष्टमुद्वास्य त्वं नो अग्न इत्यादि तन्त्रसमाप्तिः[5] । यानावह यदद्य त्वा यज्ञ यज्ञं गच्छ देवा गातुविद इति[6] चतसृभिर्ऋग्भिः पूर्णां जुहुयात् । उक्तः शेष इति[7] शूलकर्मादि । शामिता शूलं पराचीनतीक्ष्णं निखाय[8] तस्मिन्सपत्नीका मार्जयन्ते धाम्नो धाम्न इति[9] द्वाभ्यां । सुमित्रा न[9] इत्युपस्पृश्य द्वीपे राज्ञ[9] इत्युपस्थायानपेक्षमाणा आयान्ति समिधः संचिन्वानाः । एधो ऽसीत्यग्नौ समिधमादधाति । समिदिति द्वितीयां तेजो ऽसीत्यग्नि तेजो मयि धेहीत्यात्मानं[10] । तूष्णीं पत्नी ॥

---

अथ शूलगवः ॥ १ ॥

दे० । अथशब्दो नित्यात्पशुकल्पाद्विवक्षितस्य कामस्यानन्तर्यमाह । नित्यं पशुतन्त्रमुक्तं । अनन्तरं काम्यं वक्ष्याम इत्यर्थः । शूलगव इति कर्मनाम । शूले सर्वाण्यवदानानि पश्यन्तीत्यत्र[11] गौरपि च पशुरित्यर्चकं नाम । अवदानहोमान्तत्वं च छागपक्ष एव । गोः पुनरुत्सर्ग एव लोकविरोधात् ॥

आ० । शूलगव इति कर्मनामधेयम् ॥

सर्वेभ्यः कामेभ्यः ॥ २ ॥

दे० । कामयन्त इति कामः स्वर्गादिफलविशेषाः । तादर्थ्ये चतुर्थीपर्यायेण सर्वकामासिद्धिर्न समुच्चयेनेति योगसिद्ध्यधिकरणे व्यवस्थितम् ॥

---

1. Kāṭh VII. 2: 64. 5-6 (cp. infra LXXIII. 5). 2. Cp. LI. 12 s. f. 3. Cp. LI. 13. 4. Kāṭh. II. 15: 22. 1-2. 5. Cp. XLVII. 14. 6. Kāṭh. IV. 12: 37. 7-13. 7. Cp. LI. 13. 8. Thus Lahore; निक्षिप्य Bombay. 9. Kāṭh III. 8: 27. 1-8. 10. Cp. II. 1-2. 11. The meaning of these and the following words is not clear to me.

ब्र०। शूलगवस्य प्रजापशुभूत्यादिकामानामेकतममिच्छन्ननुष्ठानं। कालस्य चानियमः ॥

आ०। सर्वेभ्यः कामेभ्यः क्रियते प्रतिकामं प्रयोगः ॥

**शरदि वसन्ते वा ॥ ३ ॥**

दे०। कालविकल्पार्थमेतन्नियमः स्यादित्येके ॥

**अनियमः स्यादित्येके ॥ ४ ॥**

दे०। एके पुनः कालनियमं नानुमन्यन्ते। तेन यदा कदा चित्कर्तव्यः शूलगवः ॥

आ०। अनियमो वा कालस्य स्यात् ॥

**गवां मध्य उत्तरतो ग्रामस्य वेद्याकृतिं कृत्वा शाखाभिः परिवार्या-तष्टं यूपं तूष्णीमुच्छ्रयन्ति ॥ ५ ॥**

दे०। ग्रामस्योत्तरदेशे गवां मध्ये वेद्याकृतिं कृत्वा पाशुकीमेव वेदिं चतुरश्रां कृत्वेत्यर्थः। तां वेदिं वृक्षशाखाभिः परिवृत्य। अतष्टं तक्षणरहितं यूपमुच्छ्रयन्ति। यूपशब्दस्य संस्कारशब्दत्वान्मन्त्रे प्राप्ते तदपवादस्तूष्णीमिति। उच्छ्रयन्तीति बहुवचनेनेति नोच्छ्रयणस्य नियतकर्तृकत्वमाह ॥

ब्र०। गवां मध्ये उत्तरतो ग्रामस्य यावदर्थं चतुरश्रां वेदिं कृत्वा यज्ञियवृक्षशाखाभिरूर्ध्वाग्राभिः परिधाय ॥

आ०। गवां मध्ये कर्तव्यः। गवामस्थिरत्वाद्गोष्ठप्रायो देशो लक्ष्यते। उत्तरतो ग्रामस्य वेद्याकृतिं कृत्वा। चतुरश्रां वेदिं कृत्वा। आकृतिग्रहणादमन्त्रकां। तां च शाखाभिर्वार्क्षीभिः परिश्रित्या-तष्टं यूपं तूष्णीमुच्छ्रयन्त्यग्नेः पूर्वार्धे। यूपशब्दस्य संस्कार-वचनात्तूष्णीं ग्रहणम् ॥

**तमपरेण यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा भवाय शर्वाये-शानायेश्वराय पशुपतयेऽधिपतय इति गामुपाकरोति पशुं वा ॥६॥**

दे०। तं यूपमाश्रित्यापरेण पश्चिमभागे यथोक्तमुपसमाधानादिक-माज्यभागान्तं कृत्वा। जयप्रभृतिभिर्हुत्वेति स्थालीपाकतन्त्र-मन्त्रराष्ट्रभृत्तत्पर्यन्तमुपलक्षयति। भवाय त्वामुपाकरोमीति

शर्वाय त्वामुपाकरोमीत्यादिना मन्त्रषट्केनोपकल्पयामीत्यन्तेन गामुपाकरोति । पशुं वा छागम् ॥

ब्र० । तमपरेणोद्धतावोक्षितेऽग्निमासाद्य परिसमूह्य पर्युक्ष्य परिस्तीर्य वेद्यां कलशेषु विष्टरेषु वा भवादीनभ्यर्च्य पशुकल्पवत्तन्त्रं प्रवर्तयेत् । नात्र शाखां निहन्त्यतष्टं तु बैल्वं खादिरं पालाशं वा यूपमरशनमस्वरुमचषालं यथाकालं तूष्णीमुच्छ्रयन्ति । उपाकरणीयौ हुत्वा गामजं वोपाकरोति ऋतस्य त्वा देव हविः पाशेन प्रतिमुञ्चामि[1] भवाय शर्वाय ईशानाय ईश्वराय पशुपतयेऽधिपतये जुष्टमिति रशनयार्धशिरोबन्धनम् ॥

आ० । तं यूपमपरेणाग्निं यथोक्तमुपसमाधायेत्याज्यावेक्षणादिराष्ट्रभृदन्तं तन्त्रमुपलक्षयन्ति पाशुकं । प्रागाज्यभागाभ्यां दर्भेण भवाय शर्वायेशानायेश्वराय पशुपतयेऽधिपतये त्वामुपाकरोमीति गामुपाकरोति । पशुवत्प्रोक्षत्युरसि सर्वतश्च । तूष्णीमुपाकरणादि सर्वत्र । पाययत्यपः । पर्यग्नि करोति । घृतमवघ्राप्य । अपाव्या जुहोति प्रजानन्त इति पञ्चभिः[2] । देवताहोमवर्ज्जं[3] । उपाकरणीयहोमौ न[4] भवत अचोदितत्वात् । हुत उल्मुकं हरत्युत्तरस्यां दिशि पशुश्रपणार्थं । निवध्यमानाय प्रत्यगग्रं दर्भमवास्यति । तस्मिन्दर्भे यथोक्तं प्रत्यक्शिरसमुदक्पादं बहुवचनेनान्येऽपि संज्ञापयन्ति । संज्ञप्ते प्रमापिते यथोक्तग्रहात्पत्नी समन्त्रकमद्भिः पशोः प्राणायतनानि स्नापयति । कथं । उदकहस्ता पत्न्यादित्यमुपतिष्ठते । नमस्त आतानेत्यादि शमद्भ्य[5] इत्यादिना भूम्यां शेषमित्यन्तेन । ततोऽध्वर्युरुत्खिद्य वपां देवताभिधानत्वान्मन्त्रेणैव भवाय शर्वायेशानायेश्वराय पशुपतयेऽधिपतये जुष्टमवक्रन्तामीति विशाखामविशाखां च वपाश्रपण्यौ वपया प्रच्छाद्योदगग्नेश्चरमेऽङ्गारे सर्वबहिःस्थिते वपां निगृह्य निधाय । अन्तरा यूपाग्नी हृत्वा दक्षिणतोऽग्नेस्ततोऽभिघार्य श्रपयति । शृतं च दर्भेषूद-

1. Kāth. III. 5· 25. 8. 2. Cp. LI. 6. 3. Cp. LI. 4. 4. Inserted by me, cp. LI. 6. 5. Thus here, with श० ( not स० ).

दे० ।[1] शृतं दर्भेषूदगग्रेषु निदधाति । तदनन्तरमाज्यभागौ जुहोति । ततः परिवप्यसंज्ञकावन्वर्थकौ होमौ जुहोति । तत्र जातवेदो वपया गच्छेत्येकः[2] । देवेभ्यः स्वाहेति द्वितीयः । स्रुवेणाज्येन । तदनन्तरं वपां देवताया उपनामयेत् । अयमर्थः । जुह्वां वपामुपस्तीर्य दक्षिणतोऽसिना सकृदवदाय[3] देवतायै दद्यात्तन्नामधेयेन तद्देवतया[4] वर्चा । उप्यपरिवप्यौ हुत्वा सदर्भे वपाश्रपण्यावग्नावनुप्रहृत्यापोहिष्ठीयाभिर्मार्जयित्वा उक्तान्यवदानानि प्राक् स्विष्टकृतो देवतायै बलिं हरेत् । उप्यो नाम होमः । परिवप्यश्च दर्शितः जातवेदो वपया गच्छेति देवेभ्यः स्वाहेति[5] । तौ हुत्वा प्रतिपत्त्यर्थं वपाश्रपणार्थं दर्भसहिते वपाश्रपण्या[6] अग्नौ[6] क्षिपति तूर्णीं । तत आपोहिष्ठीयाभिर्मार्जनं तत्रैव करोति । चात्वालस्य लुप्तार्थत्वे पात्राभावात् । तदनन्तरं प्रकृतौ यथाचोदितानि हृदयादीन्यवदानानि स्विष्टकृतः पूर्वं बलिमुपहरेत् । तत्र हृदयस्य शूले पाकः शिष्टानां स्थाल्यां । द्विर्द्विरवदाय होमो हृदयादिभ्यः । तानि हृदयजिह्वाक्रोडमध्यदक्षिणबाहुपार्श्वद्वयगुदश्रोणिमेदोमध्यानि । ततः पुरोडाशस्थाने[7] यथादेवतमुपहारेषु[8] चरुमोदकादीनामन्यतमः कार्यः ॥

आ० । शृतं च दर्भेषूदगग्रेष्ववस्थाप्याज्यभागौ हुत्वा ततः परिवप्यौ जुहोति । जातवेदो वपयेत्येका देवेभ्यः स्वाहेति द्वितीया । ततः परिवप्यौ यौगिकी संज्ञा । वपां देवताया उपनामयेत् उपनतां संबद्धां कुर्यात् । नामधेयेन तद्देवतया वर्चा । उप्यपरिवप्यौ हुत्वा । उप्यो नाम होमः । त्वामु त्य इत्यनया[9] । ततः परिवप्यौ देवताभ्यः स्वाहा जातवेदो वपयेति च । सदर्भे वपाश्रपण्या अनुप्रहृत्य वपा-

---

1. I give the whole of Devapāla here: text intermixed with comm. 2. Kāth XXX. 8: 191. 1-2. 3. Emended: सकृदाधाय AT. सकृदार्य DC; cp. Br. at the end of the Kaṇḍikā. 4. Emended (cp. LVII. 11), देवतया the Mss. 5. Here Devapāla ought to give the Mantras for the upya! 6. ०श्रपणाग्नौ ACD, ०श्रपणौदग्नौ T. 7. ०स्थानं the Ms. (पशुपुरोडाश० TA). 8. यदादेवतामु० the Mss. 9. Kāth. XXX. 8: 190. 17-18.

धानैर्दर्भैः सह आपोहिष्ठीयाभिर्मार्जयते । ... [illegible] नानि शूले हृदयं जिह्वाक्रोडस्येत्येवमादीन्येकादशोखायां श्रपयित्वा तेभ्यो द्विर्द्विरवदाय देवतायै जुहोति । ततः पशुपुरोडाशस्थानीयं यथाचरितमन्नं साधयित्वा लोकाचारप्रसिद्धं यथा विनायकस्य मोदकाः आदित्यस्यापूपाः विष्णोः पायसं यथाचरितं वा ...। प्राक् स्विष्टकृतो देवतामावाह्य स्रजो गन्धांश्चोपहृत्य धूपं प्रदाय सावित्रेण पशुदेवतायै बलिं हरेत् । बलिहरणमेव न होमः । ततस्त्र्यङ्गात्स्विष्टकृतं[1] जुहोति । सव्यायाः श्रोणेर्दक्षिणस्य कपिललाटस्य गुदस्येति सकृत्सकृत् समवदायेडामग्न इति[2] । तन्त्रसमाप्तिः ॥

यथाचारं जप उक्तः शेषः ॥ १३ ॥ ५१ ॥ ( ४।११ )

दे० । गतार्थम्[3] ॥

ब्र० ।[4] पशुकल्पे रशनापशुशिरोबन्धनवपाकर्तनमन्त्रादिदेवतोद्देशापाज्यहोमपशुनिषेधनादिनिष्कृतिहोमादिवर्जं पाकयज्ञावृदुपचारवच्छ्रौतपाशुबन्धिकं सर्वं कर्म तूष्णीमनर्थलुप्तं[5] । अत्रेतिकर्तव्यतोच्यते । ग्रामान्निष्क्रम्य गार्हपत्यसंमित आयतन उद्धतावोक्षितेऽग्निमासाद्य परिसमूह्य पर्युक्ष्य परिस्तीर्याग्नेः पूर्वोत्तरे चतुरश्रायां[6] वेद्यां विष्टरमास्तीर्य तत्र पशुदेवतामभ्यर्चयेत् । ततोऽग्नेः पूर्वार्धे[7]ऽवटं[7] शाखार्थं खनयेत्[8] । आहरेदाज्यपात्राणि । कार्ष्मर्यमय्यौ वपाश्रपण्यौ रशनां द्विगुणां द्विव्यामां[9] प्लाक्षीमध्यवदानीयां स्वाधितिं कुम्भीं स्थलं[10] शाखां प्रक्षालितं पशुं पन्नदन्तमव्यङ्गं। यवमतीः पृषदाज्यार्थं दधि चर्वर्थान्व्रीहीन् येन चार्थः । उत्तरतः संस्तीर्णे आज्यपात्राणि प्रयुज्य प्रोक्षण्युपयामं[11] स्रुक्स्रुवौ दर्भे[12] यूषपात्रं

---

1. Emended (cp. Mān. śrs. I. 8. 5.19), ततस्यङ्गात्० । 2. Cp. XLVII. 13. 3. Cp. L. 3-4. 4. Now follows the whole of Br. on this Kaṇḍikā. 5. Cp. XIII. 8-9. 6. चतुराश्रायां Bombay, चतुश्रायां Lahore. 7. Uncertain; पूर्वार्धेभ्यांवधं Lahore, पूर्वार्धेत्या (or र्या or न्त्या) वटं Bombay. 8. Cp. LI. 2. 9. Thus Lahore, व्यपां Bombay. 10. शूल Lahore. 11. Lahore ins.: आज्यदानीं द्वयं । 12. दर्भे both.

विष्णोर्मनसा[1] देवो वः[1] तानि प्रोक्ष्याज्यं साधयित्वा दधि च निर्वपति। स्रुक्स्रुवौ संमृज्य चतुर्गृहीतमुद्धृत्यं निरुप्ते दध्नि घृतमासिच्य । तस्य पञ्चभिघारणं वनस्पतिं च यजति[2] । आस्तीर्णे स्रुचं निधायाघारसमिधा आधाय स्रुवं दक्षिणा स्रुचो निदधाति । ततो मूलमध्याग्रदेशेषु यवमतीभिः शाखां प्रोक्षति । गर्तेऽपो यवमतीश्च प्रासिच्य तं दर्भैरास्तीर्य तेषु घृतमासिच्य शाखामग्रात्प्रभृत्यर्धं[3] समां गर्ते निहत्य परिस्तीर्य वेदिमुदक्तूलमासनमास्तीर्य तत्रोपविश्याघारादिराष्ट्रभृदन्तं जुहुयात् । ततः[4] प्रजापतेर्जायमान इति द्वाभ्यामुपाकरणीयौ हुत्वा दर्भेण पशुमुपाकरोति प्रत्यङ्मुखं शाखान्ते ऽवस्थाप्य । रशनां तूष्णीमादाय ऋतस्येति[5] दक्षिणेऽर्धशिरसि बध्नाति यथादेवतं। शाखायां तूष्णीं नियुज्य प्रोक्षति पाययति। उल्मुकेन त्रिः परिहृत्य पशुमाज्यमवघ्राप्यापाल्या जुहोति प्रजानन्त इति पञ्चभिः। वपाश्रपण्यौ दर्भांश्चादाय प्रमुच्य शाखायाः पशुमुदञ्चं नयत्युल्मुकमग्रतो हरति। वपाश्रपणीभ्यां पशुमभिनिधाय[6] संदीपयत्युल्मुकं । स पशुश्रपणः। तस्माद्दक्षिणा प्रत्यगग्रं दर्भमास्तृणाति। तस्मिन्प्रत्यक्छिरसमुदक्पादं पशुं संज्ञपयन्ति । दक्षिणापादं पितृभ्यः। संज्ञप्यमान उपावृत्य पृषदाज्यमीक्षते इह प्रजा इति[7] आ संज्ञपनात्। संज्ञप्ते यस्मान्द्भीषा

---

1. Kāth. I. 5 m it 2. यजेत Bombay 3. ०प्रभृत्यर्थं Bombay. प्रत्यत्यर्थो Lahore 4. For the following cp. LI. 5. 5. Kāth. III. 5 : 25. 8. ( unto जुष्टं ). 6. Thus Lahore, मुख्य० instead of पशु Bombay. 7. The three verses. not found in the printed Kāthaka, more probably given sakalapāthena in the Katha yajnasūtra. The first is इह प्रजा विश्वरूपा रमन्ताम् , cp. Āp. śrs. VII. 17. 1 ; the second : यासामूढः (nearly identical with Āp. l. c.) ; the third : आयन्तु मधुमतीर्मह्यना (?) अक्षितिं पयः । गावो घृतस्य मातर इह नः सन्तु भूयसीः ।

न्यसद इति[1] प्रतिपशु पञ्चदश प्रायश्चित्ताहुतीर्जुहोति । तत एक-शृङ्गया वपाश्रपण्या रशनां परिहृत्याभ्युक्षत्येकशृङ्गां । यथोक्तमद्भिः प्राणायतनानि स्नापयति । उदकहस्ता पत्न्यादित्यमुपतिष्ठते नमस्ते आतानेति । अनर्वेति गच्छति । देवीराप इत्युदकमभिमन्त्र्य तेन पशोः प्राणायतनानि स्नापयति प्राणं त इति[2] यथालिङ्गं । समदूभ्य इति भूम्यां शेषं । एवं पत्न्या प्राणायतनेषु स्नापितेष्वन्तरा नाभिक्रोडौ दर्भमन्तर्धायासिना छित्त्वा सव्ये पाणौ दर्भाग्रं निधाय दक्षिणेन लोहितेनाक्तं दर्भमुपासिच्य पाण्योर्निर्मृजति[3] । उत्खिद्य वपां शाखां विशाखां च प्रच्छाद्याद्भिरवोक्ष्य । अधिपशुलोहितां करोति । अमुष्मै त्वा जुष्टमवकृन्तामीति यथादेवतमवकृन्तति । अपिधाय पशोश्छिद्रं दर्भाग्रमग्नौ प्रास्य चरमेऽङ्गारे वपां निगृह्यान्तरा शाखाग्नी हृत्वाभिघार्य श्रपयति । शृतं दर्भेषूदगग्रेषु दक्षिणत एव निधाय स्वस्थान उपविश्याज्यभागौ वार्त्रघ्नौ हुत्वा जातवेदो वपया देवेभ्यः स्वाहेति स्रुवेण परिवप्यौ जुहुयात् । ततो वपां देवताया उपनामयेत् । उपस्तीर्य हिरण्यशल्कमधिन्यस्य पूर्वेण शाखां दक्षिणा गत्वासिना वपां सकृदवदाय तेनैव प्रत्येत्योपरिष्टाच्च वपाया हिरण्यशल्कं निधाय द्विरभिघार्य नामधेयेन तद्देवतया वर्चा जुहुयात् । हुतायां त्वामु त्य इत्युष्यं स्वाहा देवेभ्यो जातवेद इति च परिवप्यौ जुहुयात् । द्विपशा उभयपरिवप्यानामावृत्तिः । ततोऽन्तरा शाखाग्नी सदर्भे वपाश्रपण्या आनीयाग्ना अनुप्रहृत्यापो हि ष्ठेति तिसृभिर्मार्जयन्ते । उक्तानि हृदयादीन्यवदानानि पशुबन्धे । तानि स्थाल्यां श्रपयति शूले हृदयमसंभिन्न

---

1. The fifteen Mantras are : यस्माद्भीषा न्यसदस्ततो न अभयं कृधि । अभयं नः प्रजाभ्यो नमो रुद्राय मीढुषे ॥ 1 ॥ अमुष्मै भागः सुवितं ददातु इमं यज्ञं यजमानं च सूरिम् । यो नो द्वेष्टि अनु तं रभस्वानागसो यजमानस्य वीराः ॥ 2 ॥ य इदमगस्तस्मै स्वाहा ॥ 3 ॥ यस्माद्भीषावासिष्ठाः ततो etc. as 1. ॥ 4 ॥ अमुष्मै etc. as 2 ॥ 5 ॥ य इदम॰ etc. as 3 ॥ 6 ॥ यस्माद्भीषावासिष्ठाः etc. ॥ 7 ॥ अमुष्मै etc. ॥ 8 ॥ य इदम॰ ॥ 9 ॥ यस्माद्भीषापलायिष्ठाः etc. ॥ 10 ॥ अमुष्मै etc. ॥ 11 ॥ य इदम॰ ॥ 12 ॥ यस्माद्भीषा समुत्क्रंस्थाः etc. ॥ 13 ॥ अमुष्मै etc. ॥ 14 ॥ य इदम॰ ॥ 15 ॥ 2 Kāth. III. 6 : 25 17-26. 1. 3. Thus Lahore, निर्मृज्यजाति Bombay.

गग्रेषु पश्चादग्नेरवस्थाप्य यथेतं प्रत्येत्य स्त्रुवाज्यभागौ हुत्वा ततः परिवप्यौ जुहोति । जातवेदो वपयेत्येका । देवताभ्यः स्वाहेति[1] द्वितीया । ततो देवताभ्य उपनामयेत्सकृदेव । तां वपामनुद्धृत्य[2] नामषट्केन जुहोति भवाय शर्वायेशानायेश्वराय पशुपतयेऽधिपतये स्वाहेति । तत उप्यपरिवप्यौ हुत्वा । उप्यो नाम होमः । त्वामु त्ये दधिर इत्यनया[3] । ततः परिवप्यौ । देवताभ्यः स्वाहा । जातवेदो वपयेत्येषः । एते स्रौवाः । ततः सदर्भे वपाश्रपण्या अग्ना अनुप्रहृत्य वपाधारैर्दर्भैः[4] सहेत्यर्थः । तत उत्तरतोऽग्नेरापोहिष्ठीयाभिरध्वर्युर्मार्जयते । उक्तान्यवदानानि । शूले हृदयं जिह्वायाः क्रोडस्येत्येवमादीन्येकादशोखायां श्रपयित्वा तेभ्यो द्विर्द्विरवदाय देवताभ्यो जुहोति भवाय शर्वायेशानायेश्वराय पशुपतयेऽधिपतये स्वाहेति । नेह वनस्पतियागः न च पृषदाज्यमस्ति विकारेषु यथाचोदितमिति वचनात् । तत ऋतुतिथ्याद्युपहोमान्तम् ॥

प्रतिनाम प्रतिद्रव्यं प्रत्यनुवाकमिति षट् पुरोडाशानेककपालांस्तूष्णीमुपचरिताञ्श्रपयित्वा प्राक् स्विष्टकृतः षड्लोहितबलीन्पात्रेषु दर्भेषु वा कल्पयित्वा नमस्ते रुद्र मन्यव इति षड्भिरनुवाकैरुपतिष्ठत[5] ईशानं त्वा शुश्रमेति च सर्वत्रानुषजति[6] ॥७॥

दे० । प्रतिनाम प्रतिद्रव्यं च पाशदानानि । द्रव्यं द्रव्यं प्रतिद्रव्यं । अनुवाकाः षड्रुद्राभिधानाः । अनुवाकमनुवाकं प्रत्यनुवाकं । इतिशब्दोऽधिकरणप्रधानः । इह यद्वपावदानादिकं कर्म प्रधानं तत्प्रतिद्रव्यं क्रियमाणं प्रतिनाम प्रत्यनुवाकं च कर्तव्यं । तथा षड्भिरनुवाकैर्यथासंख्यमेकैकेन भवादिनामशब्देन युक्तैर्विपर्यायाः षड्ढोमाः । तथा हृदयादिभ्य एकैकस्माद्द्विर्द्विरवदाय

---

1. Instead of देवेभ्यः स्वा०. 2. Is this right? 3. Cp. Ād. on LI. 12. 4. On LI. 12 Ād. वपाधानैः. 5. Kāṭh. XVII. 11-16 (p. 254. 1. 260. 13). 6. The text of the sūtra proper has disappeared from the copies of Devapāla.

समुदायं कृत्वैवमेव[1] षडुपहाराः। एकैकस्मिन्कपाले निवृत्तान् षट् पशुपुरोडाशांस्तूष्णीं मन्त्रव्यतिरेकेण निर्मितान्श्रपयित्वा स्विष्टकृतः पूर्वं बलिषट्कमेकैकेन पुरोडाशेन भिन्नभिन्नपात्रस्थेन भिन्नभिन्नदर्भस्थेन वा पशुलोहितालिप्तेन कल्पयेत्। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां भवाय जुष्टं कल्पयामीत्यादयः कल्पेन षण्मन्त्राः। कल्पयित्वा च नमस्ते रुद्र मन्यव इति षड्भिरनुवाकैरुपस्थानं कृत्वा बलिं हरेत्। ईशानं त्वा शुश्रुमेति च सर्वत्रानुषजति। ईशानं चेति वाक्यशेषमनुवाकषट्केन संबन्धयतीत्यर्थः। ततस्त्रिभ्यं ऽङ्गेभ्यः सकृत्सकृत्समवदायाग्नये स्वाहेति स्विष्टकृतं यजति। पूर्वोक्तमन्त्रेणेत्येके। अनेनैव च समाप्तिः। ततो वपाश्रपणीं सदर्भे पूर्ववदग्नौ प्रहरति प्रोक्षति चापोहिष्ठीयाभिः॥

ब्र०। अत्र षट् पुरोडाशानेककपालप्रमाणान्यथाकालं श्रपयेत्। प्राक् स्विष्टकृतः षड् लोहितबलीन् षट् च तान्पुरोडाशान्भवादिभ्यः षड्भ्यः प्रतिनामैकैकं सावित्रेणोपहृत्य नमस्ते रुद्र मन्यव इति षड्भिरनुवाकैरेकैकेनानुषङ्गेणोपतिष्ठते। यथा। सावित्रादिना भवाय बलिमुपहरामीति। रुधिरबलिं पुरोडाशं च पात्रेषु दर्भेषु वोपहृत्य नमस्ते रुद्र मन्यव इत्यनुवाकेन[2] ईशानं त्वेति च[3] तिसृभिरुपतिष्ठते[3]। एवमेव शर्वायोपहृत्य नमो हिरण्यबाहव इति सानुषङ्गेणोपस्थानं। ईशानायोपहृत्य नम इषुकृद्भ्य इति सानुषङ्गेण। ईश्वरायोपहृत्य नमो गिरिशायेति सानुषङ्गेण। पशुपतय उपहृत्य नमः सृत्यायेति तद्वत्। अधिपतय उपहृत्य नमो वः किरिकेभ्य इति सानुषङ्गेण। ततः पशुस्विष्टकृत्॥

आ०। ततः षट् पुरोडाशानेककपालांस्तूष्णीमुपचरितान्श्रपयित्वा पशोर्लोहितं गृहीत्वा लोहितमिश्रान्पुरोडाशान्प्राक् स्विष्टकृतो देवताभ्यः षड्भिर्नामभिर्नमस्कारान्तैः स्रजो गन्धांश्चोपहृत्य

---

1. Emended; कृत्वेवदेव the Mss. 2 ॰वाकैर् the Ms
3. Both the Mss. चतसृभिः, but Devapāla in his Mantrabhāṣya comments upon Kāṭh. XL. 5: 139 5-10

धूपं प्रदाय दीपं च दत्त्वा प्रतिनाम बलिमुपहरेत्प्रत्यनुवाकं च जपः । अत्र षट् नामानि षट् पुरोडाशा लोहितमिश्राः षट् चानुवाकाः । तेषां प्रतिनाम प्रतिद्रव्यं प्रत्यनुवाकं चतुरुपहारकर्म । तत्रोदाहरणं । यथा । लोहितमिश्रं पुरोडाशं पात्रे गृहीत्वा देवस्य त्वेत्यादिना पूष्णो हस्ताभ्यां भवाय बलिमुपहरामीति । दर्भेषु चोदगग्रेः कल्पयित्वा नमस्ते रुद्रेत्यनुवाकेनोपस्थानं । ईशानं त्वेत्यनुषङ्गः प्रत्यनुवाकान्ते । ततो द्वितीयं सलोहितं पुरोडाशं देवस्य त्वेत्यादिना पूष्णो हस्ताभ्यां शर्वाय बलिमुपहरामीति कल्पयित्वा नमो हिरण्यबाहव इत्यनुवाकेन ईशानं त्वेत्यनुषङ्गान्तेनोपस्थानं । एवं प्रतिनाम प्रतिद्रव्यं प्रत्यनुवाकं षट् कर्माणि । ततस्त्र्यङ्गात्स्विष्टकृतं । स्विष्टकृदन्ते च यथाश्रद्धं कर्त्रे ब्राह्मणेभ्यश्च दक्षिणादानं । ततस्तन्त्रसमाप्तिः ॥

प्रभूतान्ब्राह्मणान्भोजयन्ति ॥ ८ ॥

दे० । यथाशक्ति ब्राह्मणान्मांसेन भोजयन्ति ॥

ब्र० । परमेतेषां प्रीणनाय बहुब्राह्मणभोजनम् ॥

नापक्वं ग्रामं प्रवेशयन्ति ॥ ९ ॥

दे० । अपक्वमपि ग्रामं न प्रवेशयन्ति । का वार्ता । पक्वस्येति केचित् । अपरे तु[1] पक्वस्य ग्रामप्रवेशनमिच्छन्ति कदाचित् ॥

आ० । नापक्वं मांसं ग्रामं प्रवेशयन्ति । पक्वस्य तु न दोषः ॥

शिष्टं भूमावर्पयन्ति[2] सचर्म ॥ १० ॥

दे० । मुच्यमानं पक्वमपक्वं भूमौ प्रक्षिपन्तीत्यर्थः । सचर्म चर्मणा सह ॥

ब्र० । पक्वशिष्टं सचर्म भूमावर्पयन्ति तत्रैव ॥

आ० । शिष्टं यत्पक्तुं न शक्यते तच्चर्मणा सह भूमावर्पयन्ति ॥

अनपेक्षमाणा आयान्ति[3] ॥ ११ ॥ ५२ ॥ ( ४।१२ )

---

1. Cp. Ād on this sūtra.   2 The Lahore Ms. of Br. is the only one that reads भूमा अ० ।   3. Thus the Bombay Ms of Br. and of the Mss of Devapāla T (in C and D the last passage is missing), and cp Br. at the end of Kaṇḍikā LI , आयन्ति the Lahore Ms. of Br. and of the Mss. of Devapāla A and Ād.

दे० । यज्ञस्य भूमिमपश्यन्तो ग्राममागच्छन्तीत्यर्थः ॥
आ० । अनपत्तमाणा देवयजनं गृहानायन्ति ॥

---

औपसदे ऽग्नौ सायं प्रातरग्निहोत्रदेवताभ्यो जुहुयात् ॥१॥

दे० । औपसदो ऽग्निरुक्तः । एष औपसदोऽग्निस्तस्मिन्पाकयज्ञा इति[1] । स च गार्हपत्यधर्म[2] इत्यग्निहोत्रादिसदृशैस्तत्र[2] कर्मभिरुक्तं भवितुमतस्तस्य जागरणायाग्निहोत्रादिसदृशानि कर्माणि तत्रोच्यन्ते । तान्येवैतानीति भ्रमणीयं देवताग्रहणात्कालाभिधानाच्चाग्निहोत्रादिके सति तद्रूपाकृष्टत्वादेव देवताकालाद्यर्थं तदुपदानं । तस्मिन्नग्निहोत्रं जुहुयादित्येतावता सिद्धिः देवताग्रहणादेव च नामधेयेन होतव्यं न मन्त्रेण । अग्निहोत्रदेवतास्त्वग्निसूर्यप्रजापतयः । अग्नये स्वाहेति सायं सूर्याय स्वाहेति प्रातः । प्रजापतये स्वाहेत्युभयत्र मनसा । अर्थात्तितं द्रव्यं सादृश्याद्दधिघृतादयो यवादीनामन्यतमं तदभावे[3] तण्डुलाः ॥

ब्र० । औपसदेऽग्नौ सायमस्तः[4] सूर्ये निम्रुक्ते होमकालोऽनुदिते निशान्ते प्रातः । उदये न सायमाहुतिरतिपद्यतेऽस्तमये न प्रातः । आहुत्यतिपत्तावतिक्रान्तहोमं हुत्वाग्नये पथिकृते चरुं निरुप्याग्ने नयेति[5] प्रधानं । एवमेव व्युत्क्रमातिपत्तौ । उभयातिपत्तौ तु ज्वलत्यग्नये तन्तुमते चरुं निरुप्य त्वं न स्तन्तुरिति[6] यजेत् । उपशान्ते तु यथापूर्वं संस्काराणामनेकातिपत्तौ परिसंख्ययातिक्रान्तहोमान्हुत्वाग्नये शुचयेऽग्नये पवमानायाग्नये तन्तुमते ऽग्नये पथिकृत इति चतुर्भ्यश्चरुं निरुप्योदग्ने शुचयस्तवाग्ने पवस्व[7] त्वं नस्तन्तुरग्ने नय सुपथेति यजेत् ॥ अथ सायंप्रातर्होमे परिसमूह्य पर्युक्ष्य चातुष्कोष्ठैः स्तरैः परिस्तीर्य पयो यवागुं वाधिश्रित्य स्रुवं संमृज्य···दर्भोपयामः

---

1. Cp. XLVII. 1-2. 2. ०धर्मेत्यग्निहो० the Mss 3 तदभावः the Mss. 4. सायमाम्नः the Bombay Ms. ( and cp. Kāṭh VI. 5 · 54.5), सायमग्निः the Lahore Ms. 5. Kāṭh. III 1 23. 1-2. 6. Kāṭh. XL. 12 : 147. 1-2. 7. Kāṭh. XL. 14 : 150. 3-4 and VII. 16 79.16-17.

स्रुवेणाग्नये स्वाहा प्रजापतये स्वाहेति सायमाहुतिद्वयं जुहुयात्। सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातर्दीर्घां प्रथमां परिमण्डलं[1] । तस्याः पूर्वार्धे मनसा प्राजापत्यां भूयसीं द्वितीयां च । ततः परिस्तरणानि नीत्वाग्निं मुञ्चेत् । पयोयवाग्वोरभावे व्रीहीन्यवांस्तण्डुलान्वा । त्रिः प्रक्षाल्योल्मुकेनाभिघार्य[2] पाणिना दैवतीर्थेन जुहुयात् ॥

आ० । औपसदग्रहणमाहिताग्न्यर्थं[3] । आहिताग्नेरन्यकृतत्वात् पिण्डपितृयज्ञत्वं[4] न[4] प्राप्नोति । तत्प्राप्तय औपसदग्रहणं । अनाहिताग्नेस्तु तस्मिन्पाकयज्ञा इत्यनेनैव सिद्धं । सायं प्रातरग्निहोत्रदेवताभ्यो जुहुयात् । देवताग्रहणं मन्त्रनिवृत्त्यर्थं। तेन नामधेयेनैव होमः । अग्निः सूर्यः प्रजापतिश्चाग्निहोत्रदेवताः सायंप्रातर्व्यवस्थया ॥

पर्वणि भार्यामुपवास्य दर्शपूर्णमासदेवताभ्यो जुहुयात् ॥२॥

दे० । दर्शपूर्णमासदेवताभ्योऽग्निविष्णुप्रजापत्यग्नीषोमेन्द्रेभ्यो जुहुयादेकस्मात्स्थालीपाकात्प्रतिदेवतं चतुरवत्तेनोपांशुयागं त्वाज्येनैव जुहुयात् । सांनाय्यं त्वपीतसोमस्य दर्शपूर्णमासयोर्नास्ति। का वार्ता । तत्सदृशेषु पाकयज्ञेषु । पर्वणीति कालविशेषविधिः भार्यामुपवास्येत्युक्तो दण्डापूपिकया यजमानस्याप्युपवासः प्रतीयते । अपरेऽपरथाचक्षते । भार्यामुप समीपे वासयित्वा संनिधाप्य जुहुयात् । दर्विहोमवदपूर्वत्वादत्र[5] पूर्वत्र च परतन्त्राभावः ॥

आ० । पर्वणि भार्यामुपवास्य दण्डापूपिकया[6] स्वयमुपोष्य[6] । अथवा दर्शपूर्णमासप्रकृतित्वे[7] औपवस्त्रमुभयोः प्राप्तं । तेन भार्यामुपवास्येति वचनात्तयोरौपवस्त्रमेव भवति न तु व्रतोपायनादि। अथवा भार्यया वियोगः पर्वणि न कर्तव्यः।तामग्नि-

1. °मण्डलां the Bombay Ms. 2. The same expression Kath. XXXI. 7 : 9.5, but the Lahore Ms. :°भिधाय, which probably is a better reading. 3. °ग्रहणंहिता° the Ms. 4. °पितृयज्ञवत्र the Ms. 5. Thus T; दार्शि° the other Mss. 6. °पूपिकाद्वयमुपोष्य the Ms. 7. °प्रकृतिद्वे the Ms.

समीपे वासयेदित्यर्थः । दर्शपूर्णमासदेवतासंकीर्तनं प्रागौपवस्थ्या-द्भवत्येवेति केचित् । दर्शपूर्णमासदेवताभ्यो जुहुयादविशेषणया दर्शपूर्णमासदेवताः । उपांशुयाजश्च भवति । ...पुरोडाशयोः स्थाने तु चरुरेवैके मरुतां चरुमिति दर्शनात् । आज्यं हविरनादेश इति[1] वचनादन्ये आज्येन दर्शदेवताहोमं मन्यन्ते । तदसत् । अथ पाकयज्ञास्तस्मिन्पाकयज्ञा[2] इति पाकयज्ञशब्दाद्दर्शपूर्णमासप्रकृतयः पाकयज्ञा इति[3] च तत्प्रकृतिकत्वात्स्थालीपाको गुरुतरः । स चैक एव पक्वैकद्रव्यमात्रसाध्यत्वात्पाकयज्ञत्वाद्धविर्भेदो नात्र विवक्षितः ॥

नवस्याग्रायणदेवताभ्यो ऽज्यानीभिरभिजुहुयात् ॥ ३ ॥

द० । पर्वणीत्यनुवर्तते । नवस्यान्नस्यांशं जुहुयात् । काभ्यः । आग्रायणदेवताभ्यः । या आग्रायणे वैदिके देवतास्ताभ्य एव गृह्याग्नावपि जुहुयात् । ताः पुनरग्नेन्द्रौ विश्वे देवा द्यावापृथिवी सोम इति । यवास्तु हविः । अज्यानीभिरिति[4] मन्त्रनिर्देशः । तास्तु षट् । प्रत्यृचं होमश्चतुरवात्तेन स्रुवेणाभिघृतेन । पूर्वत्रापि तुल्यमेतत् ॥

ब्र० । अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य परिस्तीर्य । अग्नेन्द्रौ विश्वे देवा द्यावापृथिवी सोम इति शरदि चतस्रो नवाग्रायणदेवताः । इन्द्राग्नी विश्वे देवा द्यावापृथिवी इति तिस्रो ग्रीष्मे । सर्वेषां पृथक् चरवः । पयसि तु वैश्वदेवः सौम्यः श्यामाकश्चरुः शरदि व्रीहीणामाग्रायणं ग्रीष्मे यवानां । सुकर्माणो[5] ये के च ज्मा[6] घृतवती[7] या ते धामानीति[8] चतस्रो हविषां शरदि याज्याः । शुचिं नु[9] ये के च ज्मा घृतवती इति तिस्रो ग्रीष्मे । शतायुधायेति[10] षड्भिः प्रधानादनन्तरमभिहोमः ॥

---

1 Quoted from the Paribhāṣā khaṇḍa of the Kaṭhayajnasūtra. 2 See XIII. 1 and XLVII. 2 3 See XIII. 7 4 Emended, आज्यधानीभि० the Mss. 5 Kāth. XIII. 15 : 197 7-8 6 Kāth XIII. 15 197. 15-16. 7. Kāth. XIII 15 197 17-18. 8. Kāth XIII. 15 196. 21-22 9 Kāth. XIII 15 197 11-12. 10 Kāth. XIII 15 197. 20-198 10

आ० । पर्वणीत्यनुवर्तते । नवस्य हवींषि कृत्वाग्नेन्द्रौ विश्वे देवा द्यावापृथिवी सोमं इति शरद्याग्रायणदेवताः । ग्रीष्मे पुनरिन्द्राग्नी विश्वे देवा द्यावापृथिवी इति । द्रव्यभेदाद्धविर्भेदः[1] ॥

स्विष्टकृदनुमन्त्रणमुक्तं प्राशनं च ॥ ४ ॥ ५३ ॥ ( ४।१३ )

दे० । अग्निः प्राश्नात्विति[2] हुतस्यानुमन्त्रणं । प्राशनं । उक्तमित्यनुषङ्गः । आग्रायणमुक्तमेव[3] प्राशनं ग्राह्यं स्विष्टकृत्कालकं भद्रान्न इति[4] व्रीहिश्यामाकानां भक्षणे मन्त्राः । एतमु त्यमिति[5] यवानाम् ॥

ब्र० । इडामग्न इत्येवं स्विष्टकृतं हुत्वा । अग्निः प्राश्नात्वित्यनुमन्त्रणं शरदि । भद्रान्न इति नान्दीमुखश्राद्धादनन्तरं नवान्नप्राशनं । एतमु त्यमिति ग्रीष्मे ॥

आ० । स्विष्टकृदनुमन्त्रणमुक्तं । अग्निः प्राश्नात्विति व्रतस्यानुमन्त्रणं प्राशनं चोक्तम् ॥

---

वैश्वदेवस्य सिद्धस्य सर्वतो ऽग्र्यस्य जुहोत्यग्नये सोमाय मित्राय वरुणायेन्द्रायेन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यः प्रजापतये ऽनुमत्यै धान्वन्तरये[6] वास्तोष्पतये ऽग्नये स्विष्टकृते च[7] ॥ १ ॥

दे० । वैश्वदेवस्य कर्तव्यतां वक्ष्याम इत्यध्याहारः । विश्वेभ्यो देवेभ्यः स्वाहेति वैश्वदेवसंभवाच्छत्रिन्यायेन कर्मसमूहे वैश्वदेवशब्द-प्रवृत्तिः अथवा विश्वे च ते देवा अग्न्यादयो विश्वे देवा देवता अत्रेति वैश्वदेवः । अत्रौपसदे ऽग्नावित्यनुवर्तते । देवादावौपसद्गा-भावे लौकिके ऽपि भवति सर्वत्रार्यदेशे समाचारादवैश्वदेवभोजन-निषेधाच्च । स्मृतिषु प्रतिदिनं[8] हि पञ्चयज्ञानुष्ठानं गृहस्थविहितं ।

---

1. Then follow the same pratīkas as given by Br. 2. Kāth. XIII. 15: 198. 11-12. 3. R . आग्रायण उ० ? 4 Kāth. l. c. 13-14. 5. Kāth. l. c. 15-16. 6. Thus the Mss. of Devapāla ( धन्व० the Viṣṇusmṛti ), the other Mss. give the names of the deities abbreviated. 7. Thus Br. (both Mss.) and the Viṣṇusmṛti LXVII. 2 ; स्विष्टकृत इति T, स्विष्टकृतय इति AC, स्विष्टकृतये CD. 8. Thus CD. प्रतिपादनं AT.

पञ्च यज्ञाः पुनर्वक्ष्यन्ते । देवयज्ञः[1] पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति । यदग्नौ जुहोत्यपि सामिधं तद्देवयज्ञः संतिष्ठते । यत्पितृभ्यः स्वधा करोत्यद्भिस्तत्पितृयज्ञः संतिष्ठते । यद्भूतेभ्यो बलिं ददाति तद्भूतयज्ञः संतिष्ठते । यत्स्वाध्यायमधीते तद्ब्रह्मयज्ञः संतिष्ठते । यद्ब्राह्मणेभ्यो ऽन्नं ददाति तन्मनुष्ययज्ञः संतिष्ठते[1] ॥

औपसदे ऽग्नौ सायंप्रातरपि वैश्वदेवं कुर्यादिति व्याचक्षते । सिद्धस्य सर्वतो ऽग्रयस्य जुहोतीति । भोजनाद्यर्थत्वेन सिद्धस्य न तु हविष्यादेव । व्रीह्यादेः अग्रस्याग्रे प्रथमं जुहुयात्ततो ब्राह्मणादिकं भोजयेत् । अग्रयस्येति सप्तम्यर्थे व्यत्ययेन षष्ठी । अन्ये व्याचक्षते । अग्रयस्य प्रधानव्रीह्यादेर्भूयांसमंशं गृह्णीयादिति । अग्रयस्य ग्रहणेन दर्शितं सर्वग्रहणेनोपात्तस्य पुनरग्रग्रहणेन भूयस्त्वार्थमुपपादनात्[2] । अन्यस्मात्तु सर्वतस्तावन्मात्रमुद्धर्तव्यं[3] । ये त्वौपसदे सायंप्रातर्जागरणार्थं वैश्वदेवं वदन्ति त एवं व्याचक्षते । सर्वस्माद्गृहस्थिताद्यदग्रयमुत्कृष्टं सिद्धमप्रयासेन यवव्रीहितण्डुलादीनामन्यतमं नस्यांशेन जुहुयान्न त्वभिनिवेशं कुर्यात् । अमुनैवेति तर्हि होमान्दर्शयति । अग्नये.. स्विष्टकृत इति[4] । अग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्य हविरभिघार्य । नानभिघृतं हविरस्तीति श्रुतेः[5] । एता द्वादशाहुतीर्जुहुयात् केचिदाहुः । अग्नये सोमायेति स्विष्टकृतः प्रागाज्यभागान्तं लक्षयतीति तच्च सायन्तिकप्रायेनान्यत्राहेष्टदर्शनात् चतुर्थीनिर्देशात्स्वाहाकारान्तात् दर्शयति स्वाहाशब्दो निपातः संप्रदानं द्योतयति ॥

ब्र० । सायमाशे संसिद्धे ऽन्ने[6] भूतमन्नमिति पत्न्यान्येन केनचिद्वाप्युक्ते शुचिर्भूत्वा प्रतिजपति ओमित्युच्चैस्तस्मै नमस्तन्मा क्षा इत्युपांशु[7] ।

---

1. ..1. This passage (now with संतिष्ठते, now with ०ति) is quoted, but rather incorrectly, from theKaṭha-āraṇyaka, see Schroeder die Tuebingen Katha-Handschriften, page 57. 2. ०र्थमपपा० D C. 3. ०मुद्धत्तव्यं AT, ०मुद्वत्तव्यं C, ०मुक्तवद्वत्तव्यं D. 4. Cp. note 7 on page 279. 5. See Kāth. XXXVI. 14 80. 19. 6. सायमाशेसमिद्धेन the Bombay, वैश्वदेवे सिद्धे the Lahore Ms. 7. Cp. Khādira gṛhs. I. 5. 18-19.

अथाग्निं परिसमूह्य पर्युक्ष्य परिषिच्य चातुष्कोष्ठैः स्तरैः परिस्तीर्याग्रयस्यान्नस्योद्धृत्याभिघार्य द्व्यवदानमात्रा द्वादशाहुतीः पाणिना जुहुयात्। अग्नये स्वाहेत्युत्तरतः सोमाय स्वाहेति दक्षिणतः। तयोर्मध्ये नव तिस्रस्तिस्रः प्राचीरुत्तरार्धपूर्वार्धे स्विष्टकृत् ॥

आ० । वैश्वदेवस्येतिकर्तव्यतोच्यते । सिद्धस्य भोजनार्थं न तु ताद‍र्थ्येन[1] साधितस्य सर्वतो ऽग्रयस्य जुहोति । सर्वेषामन्नानां मिश्रापूपपायससक्तूनां यदग्रयमन्नं तस्योदनादेर्जुहोति । परिसमूह्य पर्युक्ष्य परिस्तीर्यान्नहोमवद्[2] द्व्यवदानमात्रं[2] अग्नये स्वाहा सोमाय स्वाहेति द्वादशभिः स्वाहाकारान्तैः परां परां जुहुयात् । केचिदग्नये सोमायेत्याज्यभागवदभितो ऽग्नेः । स्विष्टकृच्चोत्तरपूर्वार्धे ॥

तक्षोपतक्षाभ्यामित्यभितः[3] ॥ २ ॥

दे० । जुहोतीत्यनुषज्यते । चतुर्थीनिर्देशात्संप्रदानार्थीयो नमःशब्दो ऽत्र सदाचाराद्गम्यते । तक्षाय नम इत्युभयस्यां दिश्यभितो ऽग्नेः पूर्वं प्रदक्षिणं कृत्वा प्रथमं पूर्वोत्तरकोणे ततः पूर्वदक्षिणे ॥

ब्र० । हुतशेषात्पात्रेषु दर्भेषु वावोक्षितेषु महामार्जारश्रवणप्रमाणादनूनान्यथास्थानं वाग्यतो ऽमुष्मै नम इत्येवं षट्त्रिंशतं बलीन्हरेत् । पिण्डवच्चैषां प्रतिमाप्रतिपत्तिरेकत्र चेत्कृत्स्ना भवन्तीतरेतरसंसृष्टाश्च । तक्षाय नम इत्यग्नेर्दक्षिणतः । उपतक्षाय नम इत्युत्तरतः ॥

आ० । ततो बलिहरणमुदकमवसिच्य हुतशेषात् । तक्षोपतक्षाभ्यामग्नेः पार्श्वतो विभज्य नामनी । तक्षाय नम उपतक्षाय नम इति चतुर्थ्या नमस्कार उपस्थापितः । संप्रदानीयो ह्येषः केचिद् द्वन्द्वदेवता एका मन्यन्ते ऽग्नीषोमवत् । तन्न । इन्द्रान्तकाम्पती[4] अभ्य[4] इति स्मृत्युक्तं । विभज्य सूत्रकारेण दर्शितम ॥

---

1. तादर्थेन the Ms. 2. ०हमवद्व्यव० the Ms. 3. इति omitted by Br. (and cp. Viṣṇusmṛti LXVII. 5). Devapāla connects the first two words of the next sūtra with this one: this probably is wrong. For अभितः viz. अग्निम् cp. पूर्वेण in LI. 2 (if this word does not belong to उक्तः of the preceding sūtra). 4. These and the following words are not clear to me.

**पूर्वेणाग्निमम्बा नामासीति[1] सप्त[2] ॥ ३ ॥**

दे०। पूर्वेणाग्निमित्यनुषज्यते[3]। अम्बा नामासि तस्यै ते नमः। दुला नामासि तस्यै ते नमः। नितत्नी[4] नामासि तस्यै ते नमः। चुपुणीका[5] नामासि तस्यै ते नमः। अभ्रयन्ती नामासि तस्यै ते नमः। मेघयन्ती नामासि तस्यै ते नमः। वर्षयन्ती नामासि तस्यै ते नमः॥

ब्र०। पूर्वेणाग्निमम्बा नामासीति सप्त गृहदेवताभ्यो बन्धुमत्यः सप्त भरद्वसोर्वसिष्ठस्येत्यार्षमनुस्मृत्य ॥

आ०। पूर्वेणाग्निमम्बा नामासीति सप्त। ते अग्ने पूर्वस्यां दिशि। अत्राप्यम्बा नामासि नमस्त इति प्रयोगः॥

**गृह्याभ्यो[6] नन्दिनि सुभगे सुमङ्गलि भद्रंकरीति स्रक्तिष्वभिदक्षिणम् ॥ ४ ॥**

दे०। गृहेभ्यो हिता गृह्या देवताः।...स्रक्तिषु कोणेष्वग्नेरेताश्चतस्र आहुतीर्जुहुयात्। अभिदक्षिणं प्रदक्षिणं यथा भवति पूर्वदक्षिणकोणादारभ्य। अपरे गृहस्रक्तिष्विति[7] व्याचक्षते[8]। तत्र प्रचुरप्रयोगदर्शनं शरणं। नन्दिनि तुभ्यं नम इत्यादिः प्रयोगो ऽनुमन्तव्यः। प्रदानार्थत्वादाह्वानस्य॥

ब्र०। नन्दिन्यादीशानादिकोणचतुष्टये चतस्रः॥

आ०। ततो गृह्याभ्यो बलिहरणं नन्दिनि सुभगे सुमङ्गलि भद्रंकरीति स्रक्तिष्वभिदक्षिणं। नन्दिनि नमस्त इत्याग्नेय्यां। सुभग नमस्त इति नैर्ऋत्यां। एवं प्रदक्षिणं स्रक्तिषु गृहकोणेषु॥

**स्थूणायां ध्रुवायां श्रियै हिरण्यकेश्यै वनस्पतिभ्यश्चेति ॥ ५ ॥**

दे०। गृह्याभ्य[9] इति यथायोग्यं सर्वत्रानुवर्तनीयं। ध्रुवासीति मन्त्रेण

1. Kāth. XL. 4 : 137. 14-15. 2. Br. connects with *this* sūtra the first word of the next one. I have followed Devapāla and Ādityadarśana. 3. See note 3 on page 241. 4. नितन्त्री the Mss. (and thus also Br.) 5. चुपणिका the Mss. of Devapāla, चुपणीका Br. 6. See note 2. 7. Thus emended; गुह्यमुक्तिष्विति D. गुह्यसुक्तिष्विति C. A has a blank, in T this passage is missing. 8. Cp. Ād. on this sūtra 9 गृह्याभ्य D, गृहेभ्य AT, C indistinct.

वास्तोष्पतीयकर्मणि दर्शितेन[1] या स्थूणा संस्कृता प्रधानभूता गृहमध्ये तस्यां हिरण्यकेश्यै नमो वनस्पतिभ्यो नम इति बलिद्वयमुपहरेदिति केचित् । अन्ये तु यथासंख्यं व्यभिचारं मन्यमानाः स्थूणायामधिकरणभूतायां वनस्पतिभ्यो जुहुयात् । ध्रुवायां स्थाल्यां हिरण्यकेश्यै नम इति व्याचक्षते । स्थूणायां[2] हि वनस्पतिर्देवता वसति[2] स्थाल्यां च हिरण्यकेशी लक्ष्मीः । गृहदेवतानां चामी होमाः ॥

ब्र० । श्रियै हिरण्यकेश्यै नमः वनस्पतिभ्यो नम इति बलिद्वयं मध्यमस्थूणायाम् ॥

आ० । स्थूणायां ध्रुवायां मध्यमायां श्रियै हिरण्यकेश्यै वनस्पतिभ्यश्चेति ॥

धर्माधर्मयोर्द्वारे मृत्यवे च[3] ॥ ६ ॥

दे० । धर्माय नमः । अधर्माय नमः इति गृहद्वारमध्ये आहुती जुहुयात् ॥

ब्र० । धर्मायाधर्माय मृत्यवे इति बलित्रयं द्वारे ॥

उदधाने वरुणाय[4] ॥ ७ ॥

दे० । मृत्यवे नम इति[5] जलपात्रे घटादिके जुहुयात् । उदकस्य उदसंज्ञायामित्युदधानशब्द[6] उदधिवत् ॥

ब्र० । वरुणायेति मणिकसमीपे ॥

आ० । उदधाने घटादौ वरुणायेति ॥

विष्णव इत्युलूखले ॥ ८ ॥

दे० । वरुणाय नमो[7] विष्णवे नम इति पिपिप्यधिकरणे[8] बलिद्वयमुपहरेत् ॥

मरुद्भ्य इति दृषदि[9] ॥ ९ ॥

ब्र० । मरुद्भ्य इति पेषण्याम् ॥

आ० । दृषदि पेषणशिलायाम् ॥

1. Cp. XI. 2. 2. The Mss : स्थूणायां हि वनस्पति ध्रुवायां देवता वसति । 3. Devapāla connects मृत्यवे च with the next sūtra (मृत्यवे चोदधाने)! 4. Devapāla combines वरुणाय with the next sūtra (वरुणाय विष्णव इत्युलूखले)! 5. Cp. note 4. 6. उदधानेश० D C, उदधानशि० AT. 7. Cp. note 4. 8. Marginal note in AT: पिपिपी पेषणभाण्डम् । 9. This sūtra is missing with its bhāṣya in Devapāla.

उपरि शरणे वैश्रवणाय राज्ञे भूतेभ्यश्चेति ॥ १० ॥

दे० । वैश्रवणाय राज्ञे नमो भूतेभ्यो नम इति गृहस्योपरि बलिमुपहरेत् ॥

ब्र० । वैश्रवणादिबलिद्वयं गृहस्योपरि ॥

इन्द्रायेन्द्रपुरुषेभ्य[1] इति पूर्वार्धे ॥ ११ ॥

दे० । पूर्वार्धे गृहस्याग्नेर्वा ॥

ब्र० । इन्द्रायेति बलिद्वयं गृहस्य पूर्वार्धे ॥

आ० । गृहस्यैव ॥

यमाय यमपुरुषेभ्य इति दक्षिणार्धे ॥ १२ ॥

वरुणाय वरुणपुरुषेभ्य इति पश्चार्धे[2] ॥ १३ ॥

सोमाय सोमपुरुषेभ्य इत्युत्तरार्धे[3] ॥ १४ ॥

ब्र०[3] । वरुणाय सानुगाय पश्चार्धे सोमायोत्तरतश्चान्यगृहेषु स्मृतिषु च श्रूयते । लौगाक्षिस्तु तथा नाह । प्रायणीयादौ सोमस्य यागः पश्चार्धे दृष्टः[4] । प्रतीची दिक् सोमो देवतेत्यग्न्युपस्थाने श्रूयते[5] । वरुणायेति द्वयमुत्तरार्धे ॥

आ० । यमायं यमपुरुषेभ्य इति दक्षिणार्धे । एवमादि । स्पष्टमन्यत् । सोमः पश्चिमायामस्माकं दृश्यते । प्रतीची दिक् सोमो देवता । तथा प्रायणीये सोमः पश्चादिज्यते ॥

ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये ॥ १५ ॥

---

1. Here and in the next sūtras Devapāla inserts after each dative नमः (नमो)। 2. Here is a difficulty, as Br and a Tuebingen fragment of Br read: सोमाय सोमपुरुषेभ्य इति पश्चार्धे। वरुणाय वरुणपुरुषेभ्य इत्युत्तरार्धे; the text of Devapāla agrees with Viṣṇusmṛti LXVII. 17-18, (Cp. Mān. gṛhs. II 12. 14-15). Could Br. have altered his text, so as to bring it into harmony with the passages of the Kāṭhaka cited by him? From Ād. nothing definite is to be gained. He seems to point out only, that the text of the Gṛhyasūtra is in discordance with the Kāṭhaka. 3. Relating to the last two sūtras. 4. Kāṭh. VII. 2: 64. 13. 5. Kāṭh. XXIII. 8: 83. 18.

ऊर्ध्वमाकाशाय. ॥ १६ ॥

दे० । आकाशाय नम इत्यूर्ध्वं बलिमुपहरेत् ॥

ब्र० । आकाशाय नम इत्यूर्ध्वं पश्यन् ॥

आ० । ऊर्ध्वां दिशमुत्क्षिपेदाकाशायेति ॥

स्थण्डिले दिवाचरेभ्यो भूतेभ्य इति दिवा ॥ १७ ॥

दे० । शुचिभूभागे[1] दिवा बलिमुपहरेत् ॥

ब्र० । दिवाचरेभ्य इति भूमौ दिवा वैश्वदेवे ॥

आ० । स्थण्डिले भूमौ दिवाचरेभ्यो भूतेभ्य इति दिवा बलिं[2] हरेत्[2] ॥

नक्तंचरेभ्यो भूतेभ्य इति नक्तम् ॥ १८ ॥

दे० । स्थण्डिल इत्यनुषज्यते । अत्र दिवा वैश्वदेवे क्रियमाणे बलिमुपहरेद्रात्रौ तु नक्तंचरेभ्यो भूतेभ्य इति केचिद्व्याचक्षते । प्रयोगस्त्वीदृशः । दिवापि वैश्वदेवं कुर्वाणाः कल्पयित्वा नक्तंचरेभ्यो भूतेभ्योऽपि स्थापयन्ति । रात्रौ च त्याजयन्ति । रात्रौ तु वैश्वदेवो नोषितस्तत्रावश्यकर्तव्यः[3] क्रियमाणस्य किंचिद्वैकल्यमभ्युपगतमेव एकान्तपराजयद्वारं संदेह इति नयेन ॥

ब्र० । नक्तंचरेभ्य इति सायं । इति षट्त्रिंशद्बलयः ॥

आ० । यदा नक्तं रात्रौ नक्तंचरेभ्यो भूतेभ्य इति ॥

शेषं पितृभ्यः पिण्डान्निदधाति[4] ॥ १९ ॥

दे० । शिष्यत इति शेषः प्रदर्शिताहुतिबलिभ्यो मुच्यमानः । तं पिण्डीकृत्य पितृपितामहप्रपितामहेभ्यो मातृपितामहीप्रपितामहीभ्यश्च ददाति ॥

आ० । शेषं बलिहरणाशिष्टं पितृभ्यः पिण्डान्विदधाति[5] पिण्डपितृयज्ञवत् । निदधातीति प्रकृतिलिङ्गात् । सतिलमिति केचित । मघृतमन्नं

---

1. Before this word D has शुचिक्रया. C the same but the last akṣara invisible.— शुचिभू० DC 2 Emended बलि हरा the Ms 3. The visarga fails in all the Mss. 4. प्रदधाति AT. 5. R. निद० instead of विद० and cp the Pinda pitṛyajna of the Kathas in Altind. Ahn sscult. page 213

जुहोति सोदकं बलिषु सतिलं पितृषु ॥

**उदकलशमुपनिधाय स्वस्त्ययनं वाचयति ॥२०॥५४॥ (४।१४)**

दे० । अग्नेरात्मनश्च समीपे जलकलशं स्थापयित्वा स्वस्त्ययनं वक्ति बोधश्च मेत्यनुवाकं[1] । वाचयतीति स्वार्थे णिच् रामो राज्यमकारयदित्यादिवत्[2] । चाराैदिको वात्र वाचिः । स्वस्त्यविनाश ईयते प्राप्यते येन तत्स्वस्त्ययनं । अत एव पुरुषसूक्तकनिक्रदत्प्रभृति वक्तव्यम् ॥

ब्रा० । तत उदकपूर्णं कलशमुपनिधाय तत्र वरुणं यज्ञपुरुषं विष्णुं चाभ्यर्च्य बोधश्च मेति स्वस्त्ययनं । सायं शिरोगतौरेण[4] मयूरवत्स्वस्त्ययनोपस्थानं । नृपाभिषेकेषु चेति प्रातिशाख्येषु दृष्टत्वात्स्वस्त्ययनस्य सर्वत्रोच्चैः प्रयोगः । ततः परिस्तरणानि नीत्वाग्निं विमुच्येत् ॥

आ० । तत उदकलशमुपनिधायाग्निवरुणप्रत्यक्षं स्वस्त्ययनं वाचयति बोधश्च मेत्यनुवाकं । अत्र स्वार्थे णिच् ॥

## इति लौगाक्षिसूत्रे गृह्यपञ्चिकायां चतुर्थोऽध्यायः ॥

**अथातःस्वस्त्ययनानि ॥ १ ॥**

दे० । अथेत्यानन्तर्ये । ऋतावृतौ भवान्यार्तवानि कर्माणि वक्तव्यानि । स्वस्ति मङ्गल्यं । तदविनाश ईयते प्राप्यते यैस्तानि स्वस्त्ययनानि । तानि कानिचिन्नित्यान्यपि श्रावण्यादीनि । तेषामकरणे कालचोदितानामिति पाथिकृती[6] भवति । कपोतनिलयशान्त्यादीनि[7] स्वस्त्ययनान्येव ॥

---

1 Kath. XXXVII 10. 2 Cp Devapala on IV 15. 3 The Puruṣasūkta is contained in the last Kaṭha-Āraṇyaka as also is probably the case with the Kanikradatsūkta which corresponds to RS II 42 1 – 43 2 RS Khila II 2 1–5 and RS II 43 3. 4 ? Lahore reads गतारेण। 5 The colophon in the Bombay Ms इति यजुषि काठकचरकशाखायां लौ°गृह्य°च° अ° (I abbreviate) in the Lahore Ms इति काठके यज्ञसूत्रे गृह्यपञ्चिकायां च°अ°। 6 पथि° the Mss. 7 Thus the second hand of D only °शान्तादीन the other Mss.

आ० । ऋतावृतौभवान्यार्तव्यानि कर्माणि स्वस्तिरीयते यैः तानि स्वस्त्ययनानि कानिचित्संस्कारत्वान्नित्यान्यप्यष्टकादीनि । कानिचित्स्वस्त्ययनानि अन्येन[1] यथा कपोतनिलयाश्वयुज्यादीनि । कानिचिदुभयरूपाणि यथा श्रावण्याग्रहायणी चैत्रे च स्वस्त्ययनानामकरणेनादृष्टदोषः[2] । अत्र कालचोदितानामेवातिपत्तौ पाथिकृती ॥

**श्रावण्यां चत्वारि हवींष्यासादयेदपूपं स्थालीपाकं धानाः सक्तूनुभयमक्षतानाम् ॥ २ ॥**

दे० । चतस्रः पौर्णमास्यः श्रावणी आश्वयुजी आग्रहायणी फाल्गुनी । श्रवणेन युक्ता पौर्णमासी श्रावणी । तस्यां चत्वारि हवींष्यावापस्थाने निरुप्यासादयेदपूपादीनि । तत्रापूपो व्रीहिमयो घृतपक्वः यवमयस्तैलपक्वः फाल्गुन्यां तैलपक्वस्य[3] जुहोतीति लिङ्गात् । चतुर्ष्वपि मातृवर्णिन्यः । अपूपे विष्णुः । चरौ रात्र्यः[4] । धानासु सक्तुषु च सर्पाः । उभयं धानाः सक्तवश्चाक्षतानामनवहतानां यवानाम् ॥

त्र० । श्रावणस्य शुक्लपक्षदश्यां चत्वारि हवींष्यासादयेत् । विष्णवे जुष्टं निर्वपामीति व्रीहीणामपूपार्थं निर्वापः । रात्र्यै जुष्टमिति स्थालीपाकार्थं सर्पेभ्यो जुष्टमिति द्विर्धानाः सक्त्वर्थं यवानां भृष्टैतानर्धान्सक्त्वर्थं पिनष्टि । हविषामुदगुद्वासनाद्यव्यवायिना कार्यं ।.. अलंकरणकाले सपवित्रे पात्रे धाना उपवपति सक्तूंश्च ॥

आ० । श्रवणेन युक्ता पौर्णमासी श्रावणी । विनापि श्रवणेन । तस्यां चत्वारि हवींष्यासादयेत् । कानि । अपूपं स्थालीपाकं धानाः सक्तूंश्च । एतद्धानासक्त्वाख्यमुभयमक्षतानां यवानामनवहतानां । चरुमिति वक्तव्ये स्थालीपाकग्रहणं पाकयज्ञतन्त्रनिवृत्त्यर्थं । सर्वत्र पाकयज्ञशब्दसामान्यात् ॥

**वषट् ते विष्ण इत्यपूपस्य जुहोति रात्री व्यख्यदिति स्थालीपाकस्य नमो अस्तु सर्पेभ्य इति धानानां ये वाद इति सक्तूनाम् ॥३॥**

1. ? - नैमित्तिकानि । 2. Uncertain: स्वस्त्ययननामकरणे° the Ms. 3. R. तैलापूपस्य ? Cp. LXX. 1. 4. Thus the Mss. R. रात्री ?

दे० । आज्यभागान्तं पूर्वान्मध्यांश्चावदाय[1] प्रधानानुष्ठानं सर्वं जुहोति नमोदितः[2] स्वाहाकारः । मन्त्रचतुष्टयस्य प्रतीकेनापूपादिहोमेषु विनियोगो ऽनेन भणितः ॥

ब्र० । आज्यभागान्ते यथोक्ताभिश्चतसृभिर्वषट् ते विष्ण इत्याद्याभिः प्रधानम् ॥

आ० ।...रात्री व्यख्यदिति स्थालीपाकस्य । अवदाय मेक्षणेन । एवमादीनां चतुरवत्तं पञ्चावत्तं वा स्रुचा होमः । मध्यपूर्वार्धावदानं दर्शपूर्णमासप्रकृतित्वादागच्छति । यत्र यत्र जुहोतिशब्दस्तत्र तत्र स्वाहाकारः ॥

**येषु वा यातुधाना इति दर्व्यावटेषु[3] सक्तूनाम् ॥ ४ ॥**

दे० । अवटेषु गर्तेषु । दर्व्या न तु स्रुचा । येषु वेति मन्त्रेण होमः । अभिघारः सर्वत्र ज्ञेयो नानभिघृतं हविरस्तीति ॥

ब्र० । ये वाद इति सक्तूनामग्नौ हुत्वा दर्वीं स्रुग्वत्संमृज्य बर्हिषि निधायोपस्तीर्य तेषामेव सक्तूनामवदानधर्मेणावदायाभिघार्य सक्तून्प्रत्यभिघार्य येषु वा यातुधाना इत्युदगग्नेरवटे जुहोति । नावटे परिस्तरणमनग्नाअपरिस्तीर्णे इति हि परिभाषा । ऋतुतिथियागादितन्त्रसमाप्तिः ॥

आ० । दर्व्या न स्रुचा । अवटे गर्ते नाग्नौ । अविद्यमाने ऽवटे खात्वाप्यवटे जुहोति ॥

**उभयत्राखुराजाय[4] बलिं हरेदाद्यन्तयोर्वा ॥ ५ ॥५५॥ (५ । १)**

दे० । उभयत्रेति । औपसदहोमे ऽवटहोमे च । अन्ये त्वाहुः । उभयत्र सायंप्रातर्होमकालो लक्ष्यते । यदुक्तं दिवाचरेभ्यो भूतेभ्यो दिवा नक्तंचरेभ्यो नक्तमिति[5] वैश्वदेवबलिहरणं । तत्र स्थाने सक्तुबलिरनेनोच्यते । चातुर्मासिको गृह्यान्तरे तथादर्शनात् । सावित्रेण देवस्य

---

1. ०वधाय the Mss. 2. Thus ACT, नोदित. D. 3. Thus Devapāla and the text of Br, Ād. and the Bhāṣya of Br. seem to point to the singular (अवटे), but cp. also Br. on LX. 4. 4. Before उभयत्र० the Mss. of Devapāla have सक्तूनां, which may be a repetition of the last word of the preceding sūtra. 5. See LIV. 17-18.

त्वेत्यादिनाखुराजाय बलिं हरामीत्यन्तेनैष बल्युपहारः । आद्यन्तयोर्वेति । श्रावणीफाल्गुन्योरिति केचित् । आद्यन्तयोर्हविषोरपूपसक्तुलक्षणयोराखुराजाय बलिं हरेदिति त्वन्ये ॥

ब्र० ।.श्रावण्यामेवं पाकयज्ञेनेष्ट्वा तूष्णीमुपचरितान्सक्तून्दर्वीं च स्थाल्यां विहायसि शिक्ये निदध्यात् । तदहः प्रभृति मासचतुष्टयं तैः सक्तुभिर्दर्वीं पूरयित्वा सायं प्रातश्च देवस्येत्यादिनाखुराजाय बलिमुपहरामीत्युदगग्नेरवटे बलिमुपहरेच्छ्रावण्याग्रहायण्योरेव परिसंख्यया[1] श्रावण्यां सायं विंशत्यधिकं बलिशतमेकीकृतमुपहरेत् । आग्रहायण्यां प्रातर्यद्यधिमासो मासचतुष्टयमध्ये भवेत्तदा परिसंख्यया[2] पञ्चाशदधिकं शतं । उभयत्रापि । नात्रोपस्तरणाभिघारणे होमाभावात् ॥

आ० । उभयत्राखुराजाय बलिं हरेत् । सक्तूनां दर्व्येत्यनुवर्तते । क । उभयत्र । दधिसक्तुबलिहरणसामर्थ्याच्छाखान्तरीयं सायंप्रातःकाले चातुर्मासिकं बलिहरणं वक्ष्यते[3] । तेनोभयत्र सायं प्रातरग्निहोत्रदेवताभ्य इत्यतः सूत्रात् । आद्यन्तयोर्वा श्रावण्याग्रहायण्योः । एते चतुर्णां मासामाद्यन्ते पौर्णमास्यौ ॥

---

**आयूतिके कपोते भयार्ते सक्तुषु भस्मनि वा पदं दृष्ट्वा देवः कपोत इत्यष्टर्चेन[4] स्थालीपाकस्य जुहोति ॥ १ ॥**

दे० । प्रायेण वर्षासु कपोताः प्रोद्भवन्तीति श्रावणीप्रसङ्गेन कपोतनिलयशान्तिरुदिता । यूतिः सङ्गः । तत्प्रतिषेधेनायूतिः सङ्गवियोगोऽभिप्रेतः । अयूतौ भवः आयूतिकः । सदा यः सङ्गचारी कपोतः सदैवात् श्येनादिनावागूर्य नियोजितो भीतो यदा गृहं प्रविशति तदेयं शान्तिरुच्यते । न तु केवलचारिणि दृष्टे निर्भयगृहदेवकुलादिनिवासिनि[5] ग्रामकपोते तादृशे आयूतिकं कपोतं गृहसंबद्धं भयार्तं दृष्ट्वा गृहपतिः स्थालीपाकस्य जुहुयाद्देवः कपोत इत्याद्यष्टा-

---

1. परिसंख्यायावा the Lahore Ms. The whole passage is far from clear to me. 2. Om. in the Ms. of Lahore. 3. I am unable to point out the text here referred to. 4. Cp. Appendix VI. 5. Thus C; ०लादिवासिनि T A, ०लादिनिर्वासिनि D.

भिर्ऋग्भिः । यदा स्वरूपेण कपोतं न पश्यति किं तर्हि । गृहाभ्यन्तरे[1] भस्मनि सक्तुषु वा कपोतचरणप्रतिबिम्बमवलोकयति तदा जुहुयात् । यमदूतो हि कपोतः । तं प्रत्यक्षेणानुमानेन वा कृतसंनिधानं गृहे बुद्ध्वा महतो विघ्नस्य शान्तय इदं स्वस्त्ययनं कुर्यात् । क्वचिदायूतिकः सुस्पष्टः ॥

ब्र० । कपोतगृहप्रवेशसूचितदुरिष्टशान्त्यां देवेभ्यो जुष्टं निर्वपामीति चरुनिर्वापः । देवः कपोत इत्यष्टाभिरग्निर्ऋषिपिरिति पावमान्यन्ताभिः प्रधानम् ॥

आ० । आयूतिके कपोते । यूतिः सङ्गः । तद्विपरीतः अयूतिः । अयूतौ भव आयूतिकः । असहाय इत्यर्थः । असहायके कपोते श्येनादिना त्रासिते गृहे निलीने सति वक्ष्यमाणा शान्तिः कर्तव्या । यत्ते गृहकपोता वलभीषु सर्वदा वसन्ति ते यौतिका भयार्ताश्चन[2] तेष्वियं शान्तिः । अदृष्टेषु सक्तुषु भस्मनि वा कपोतपदं दृष्ट्वा तथापीयं कर्तव्या । मृत्युदूत हि कपोते निलीन सर्वत्राग्निदग्धपदानि दृश्यन्ते यत्रापि नोपविष्टः ॥

**परीमे गामनेषतेति[3] गां परिणयन्ति ॥ २ ॥**

दे० । परिणयन्तीति बहुवचनेन गृहपतिव्यतिरिक्तस्यान्यस्याप्यत्र कर्तृत्वं दर्शयति ।...अत्रपीष्टिविकारत्वादाज्यभागान्तं कृत्वा स्थालीपाकहोमः ॥

ब्र० । यस्मिन्गृहे कपोतपदं दृष्टं तं गां परिणयन्ति ॥

आ० । परिणयन्ति यत्र निलीनो गृहे तत्रानेन मन्त्रेण ॥

**सा दक्षिणा ॥ ३ ॥ ५६ ॥ ( ५ । २ )**

ब्र० । तां होमान्ते ब्राह्मणाय दद्यात् ॥

आ० । सैव कर्तुर्दक्षिणा । प्रायेण कपोता वर्षासु संचरन्त्यतोऽस्मिन्नवसरे उक्ताः ॥

---

**आश्वयुज्यामश्वान्महयन्ति सर्वाणि च वाहनानि ॥ १ ॥**

---

1. गृहान्तरे D C 2. Hesitatingly emended अभयान्तश्चन the Ms. 3. This verse must have followed immediately after the Kapotasūkta. it corresponds with Rs X. 155.5

दे० । अश्वयुजा नक्षत्रेण युक्ता पौर्णमासी आश्वयुजी । तस्यां नृपतिप्रभृतीनामश्वप्रभृतीनामश्वादिस्वस्त्ययनमिदं कर्तव्यमुच्यते । अश्वान्महयन्ति पूजयन्ति स्नानानुलेपनालंकारप्रभृतिभिः शृङ्गारयन्ति । सर्वाणि च करिकरभतुरगप्रभृतीनि वाहनानि यथासंभवं महयन्ति ॥

ब्र० । अश्वरथादिवाहनवतामाश्वयुक्पौर्णमास्यामश्वादीनां नवविचित्रवस्त्रालंकारैश्चन्दनालक्तकसिन्दूरादिस्थासकैश्च पूजयेत् ॥

आ० । अश्वयुग्भ्यां युक्ता पौर्णमासी अश्वयुजा[1] युक्ता वा आश्वयुजी । तत्राश्ववतां नीराजनं स्वस्त्ययनमश्वानामुच्यते । अश्वान्महयन्ति पूजयन्ति । वस्त्रालंकारैश्चन्दनादिस्थासकैश्च । सर्वाणि च वाहनानि । हस्त्यश्वतरमाहिषखरोष्ट्रादीनि[2] च ॥

**उत्तरतो ग्रामस्य वेद्याकृतिं कृत्वा शाखाभिः परिवार्याहतैश्च वासोभिः सर्वरसैर्घटान्पूरयित्वा दिक्षु निदध्यात्सर्वबीजैश्च पात्राण्यवान्तरदिक्षु ॥ २ ॥**

दे० । ग्रामस्य या उत्तरा दिक् तत्रेष्टिविकारत्वादिष्टिवेदिसदृशीं चतुरश्रां वेदिं कृत्वा तां च शाखाभिरहतैश्च वासोभिः परिवार्य सर्वरसैर्मधुरादिभिरिक्षुरसप्रभृतिभिर्घटान्पूरयित्वा[3] विदिक्षु पूर्वान्तरादिषु दध्यात्[4] ॥

आ० । उत्तरतो ग्रामस्येति व्याख्यातं[5] । अहतैश्च वासोभिः परिवार्य सर्वरसैर्घटान्पूरयित्वा लवणमधुघृतादिभिर्दिक्षु निदध्याद्वेद्याः । सर्वबीजैश्च तिलयवादिभिः पात्राणि पूरयित्वा अवान्तरस्रक्तिषु निदध्यात् ॥

**तमपरेण यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा तिस्रो देवता यजेत वरुणमग्निमश्विनावाश्वयुजीं[6] च ॥ ३ ॥**

---

1. The two aksharas युजा supplied by me. 2. ०श्वरथ० the Ms. 3. Thus ( ०क्षु० ) the Mss. 4. दद्यात् the Mss. 5. See Ād. on LII 5. 6 Here, again, is a real discrepancy between Devapāla on the one, and Br. and Ād. on the other side; the last two omit अग्निम्-०श्विना आश्वयु० Br.

दे०। तस्य च रचितोपचारस्यापरभागे यथोक्तमाज्यभागान्तं हुत्वा जयप्रभृतिभिश्च राष्ट्रभृदन्तैर्हुत्वा तिस्रो देवता यजेत नामधेयेन तद्देवतया वर्चा। कास्तास्तिस्रः। अग्निं वरुणमश्विनाविति। आश्वयुजीं चतुर्थीं। तां तु नामधेयेनैव आश्वयुज्यै स्वाहेति तल्लिङ्गमन्त्राभावात्। आज्यमत्र हविः॥

ब्र०। वेदिं यथोक्तवत्कृत्वा तस्यां प्रधानदेवता अभ्यर्चयेत्। आज्यं हविरत्र। आज्यभागान्ते। वरुणाय स्वाहा। अश्विभ्यां स्वाहा। आश्वयुज्यै स्वाहा। इति तिस्रः प्रधानाहुतयः। ऋग्भिर्वैतद्देवताभिः[1]॥

आ०। तमपरेण। तमेवंविधं देशमपरेण। यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा तिस्रो देवता यजति। हविषो ऽनपदेशादाज्येन। वरुणमश्विनावाश्वयुजीं च। चशब्दादाश्वयुजीं नामधेयेन ऋचो ऽभावात्॥

इज्यमाने ऽश्वान्योजयन्ति सर्वाणि च[2] वाहनानि॥ ४॥

दे०। यागे क्रियमाणे ऽश्वादीन्योजयन्ति पर्याणालंकारादिना॥

ब्र०। इज्यमाने ऽश्वादिवाहनानि वाहका योजयन्ति॥

आ०। चतुर्गृहीतेन इज्यमाने ऽश्वान्योजयन्ति पर्याणदानादिना। सर्वाणि च वाहनानि च योजयन्ति॥

प्रदक्षिणं देवयजनं कवचिनः[3] त्रिः परियन्ति॥ ५॥

दे०। देवयजनं यागस्थानं वेदिः[4] तस्याः[4] परिहितकवचाः करितुरगप्रभृतयः प्रदक्षिणं भ्रमणत्रयं कुर्वन्ति॥

आ०। ते ऽश्वारूढाः कवचिनः प्रदक्षिणं देवयजनं त्रीन्वारान्परिगच्छन्ति॥

---

1. The verses to be used are given by Br. viz. Kāth. XVII. 19: 263. 19-20 (Varuṇa); XVII. 18: 262. 10-11 (Aśvins) and for Āśvayujī the verse, corresponding as to its first part with T Br.III.1.1.12: पृथ्वी सुवर्चा युवतिः सजोषा चित्रभानुरुदगाच्छोभमाना। धनेनास्मान्द्रजयाप्यायन्ती (sic!) पौर्णमासी सुभगा वेतु हव्यम्॥ The verse is not known from any Saṃhitā. 2. Missing in all the copies of Devapāla. 3. कर्मचित्रं the Mss. of Devapāla, but cp. his Bhāṣya. 4. Sic Mss.!

**प्रहर्षान्कुर्वन्ति॰॥ ६ ॥**

दे० । प्रहृष्टाः सन्तो घातादिकं कुर्वन्ति ॥

आ० । प्रहर्षान्[1] क्रोशान्कुर्वन्ति ॥

**इष्टे यथार्थं संप्रयान्ति ॥ ७ ॥**[2]

दे० । इष्टे यागनिवृत्ते सति यथार्थं[3] यथासंप्रयाजनं संयक् प्रहृष्टा यान्ति यो यत्राधिकृतः स तं स्थानविशेषमनुसरतीत्यर्थः ॥

**गौर्वासः कंसो हिरण्यं च दक्षिणा ॥ ८ ॥**

दे० । समस्तं च गवादि दक्षिणा ॥

ब्र० । यथोक्ता होमकर्त्रे दक्षिणा ॥

आ० । गौः...हिरण्यं च दक्षिणा कर्त्रे ॥

**रसा बीजानि वासांसि ॥ ९ ॥ ५७ ॥ ( ५ । ३ )**

दे० । दक्षिणेत्यनुषज्यते । रसा ये घटेषु कल्पिता बीजानि पात्रेषु वासांसि च वेदिवरणानि । तानि सर्वाण्येव दक्षिणा । उपयुक्तानां दक्षिणया प्रतिपत्तिः कर्तव्येत्यर्थः ॥

आ० । रसा बीजानि वासांसि चान्येभ्यो यागविभागात् ॥

दे० । अस्यामेवाश्वयुज्यां गोमतां स्वस्त्ययनमाह ॥

**अथ गोमतां विधिः ॥ १ ॥**

दे० । उपसृष्टा गावो वसन्तीति[4] लिङ्गात्सर्वमेतत्कर्म गोस्वामिनामुपदिश्यते ॥

आ० । गोमतामिदमुच्यते । गवां स्वस्त्ययनमेतत् । तस्मिन्नेवाहनि समागतासु तास्वेतत्सायं कार्यम् ॥

**इह प्रजा[5] यासामूधः[6] पृषदश्वा घृतप्रतीक इति पृषातकस्य**

---

1. प्रहर्षानु the Ms. 2. Of this sutra Br. and Ād. *have no trace.* 3. यथार्थौ all the Mss 4. See LVIII. 6. 5. Not in our printed Kāthaka text: इह प्रजा विश्वरूपा रमन्तामस्मिन्गोष्ठे विश्वभृतो जनित्रीः । अग्निं कुलायमभिसंवसाना अस्मान् अवन्तु पयसा घृतेन ॥ 6. Identical with Āp. Śrs. VII. 17.1 (only ता नोऽवन्तु instead of ता नः सन्तु).

जुहोति ॥ २ ॥

दे० । पृषातकं पृषदाज्यं । तत्पुनर्दधिमिश्रितमाज्यं । अतश्च सांनाय्यधर्मकं । आज्यभागान्तं चोपसमाधानं कृत्वा विष्णोर्मनसेति पवित्रं कृत्वा । अग्नेर्जिह्वेति पृषातकमुत्पूय प्रधानयागो ऽयं कर्तव्यः । मन्त्रवर्णिकाश्च देवताः । मन्त्रास्त्विह प्रजा इत्यादिभिः प्रतीकैश्चत्वारो विनियुक्ताः । तैश्चतुर्भिश्चतस्र आहुतयः ॥

ब्र० । गोमतां पृषातकेन प्रधानयागः । गोभ्यो लवणदानं । दधि घृतमिश्रं पृषातकमित्याचक्षते । हविरासादनकाले तूर्णीं दध्युत्पूय शीते भस्मन्यधिश्रित्याज्यधान्या घृतमासिच्य चरुवदभिघार्यासादयति । आज्यभागान्ते...चतस्रः प्रधानाहुतयः ॥

आ० । घृतपयसी पृषातकं । तस्य जुहोति ॥

अम्भः स्थेति लवणमभिमन्त्र्य गोभ्यो दद्यात् ॥ ३ ॥

दे० । इत्यभिमन्त्र्याहुतिचतुष्टयादनन्तरं गोभ्यो दद्यात् ॥

ब्र० । अम्भः स्थेति सहस्रपोषं वः पुषयमित्यन्तेन यथाशक्ति गोभ्यो लवणं दद्यात् ॥

रौद्रीभिरभिजुहुयान्नित्याभिश्च ॥ ४ ॥

दे० । मृडा नो रुद्रेति चतसृभी[1] रौद्रीभिर्जुहुयात् । नित्याभिश्च । जुहुयादित्यनुषङ्गः । नित्याः परा ऋच इह गावो ऽयं यज्ञ आ नः प्रजामिति[2] तिस्र एव स्मर्यन्ते ॥

ब्र० । ततो मृडा नो रुद्रेति तिसृभिः स्रुवेणाज्येनाभिहोमः । इह गावो ऽयं यज्ञ आ नः प्रजामिति नित्याभिश्च । तत ऋतुतिथियागादितन्त्रसमाप्तिः ॥

आ० । नित्याभिश्च नित्यदाम्नाताः सर्वप्रधानानामिह गावो ऽयं यज्ञ आ नः प्रजामिति लिङ्गात्तिस्र एव । अन्यासां व्यपदेशान्तरमास्ति । धुर उपधुरः[2] अग्रंचं चेति । तस्मात्ता न भवन्ति ॥

---

1. The verses Kāṭh. XL. 11 : 145. 15-146. 4 are meant, see Br.; Devapāla in his Mantrabhāṣya explains only these three. 2. Cp. XLVII. 13.

**दधिक्राव्ण इति पृषातकस्य प्राश्नाति[1] ॥ ५ ॥**

दे० । दधिक्राव्ण इति मन्त्रेण पृषातकस्य शेषं प्राश्नाति[2] ॥

ब्र० । इति हुतशेषस्य पृषातकस्य प्राशनम् ॥

आ० । दधिक्राव्ण इति पृषातकस्य संस्थिते कर्मणि प्राश्नाति[2] ॥

**उपसृष्टा गावो वसन्ति ॥ ६ ॥ ५८ ॥ ( ५ । ४ )**

दे० । वत्सैर्युक्ता गावस्तां रात्रिं वसन्ति ॥

ब्र० । तदहः सवत्सा गावो वसन्ति ॥

आ० । उपसृष्टा वत्सैर्गावो वसन्ति । एतदपि सायंकरणे लिङ्गं । यावदुक्तो ऽयं होमः ॥

---

**अथ वृषोत्सर्गः ॥ १ ॥**

दे० । अथशब्दो ऽधिकारार्थः । अथार्तवस्वस्त्ययनमध्ये ऽपि वृषोत्सर्गो ऽधिकृतो ऽनन्तरं बोद्धव्य इत्यर्थः ॥

आ० । अथशब्द आर्तवस्वस्त्ययनपृथक्करणार्थः । गोप्रसङ्गेन कालप्रसङ्गेन चोच्यते वृषोत्सर्गः । गवां वृष उत्सृज्यते तेन वृषोत्सर्गः । सदा धर्मायैव पितॄणां सहोपकारायेति स्मर्यते । एष्टव्या बहवः पुत्रा यद्येको ऽपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्[3] । स्वगोष्ठे वोत्सृजेत् ॥

**कार्त्तिक्यां पौर्णमास्यां रेवत्यां वाश्वयुज्यस्य गवां मध्ये सुपमिद्धमग्निं कृत्वा पौष्णं चरुं पयसि श्रपयित्वा पूषा गा अन्वेतु न इति पौष्णस्य जुहोति ॥ २ ॥**

दे० । कृत्तिकायुक्तश्चन्द्रो यस्यां भवति सा कार्त्तिकी पौर्णमासी । तस्यामाश्वयुज्यस्य वा संबन्धिनि रेवतीनक्षत्रे कर्मेदं कर्तव्यमिति कालविकल्पः । कथं कर्तव्यमित्याह । गवां मध्ये स्वगोष्ठे समिद्धं दीप्तमग्निं कृत्वा पूषदेवताकं चरुं पयसि श्रपयित्वा । आदित्यप्रायणीयचरुविकारं । पूषा गा अन्वेतु न इति पौष्णस्यावदानद्वयमुद्धृत्य

---

1. The sutra proper not given in the Copies of Devapāla. 2. प्राश्नाति TAC प्राश्नंति D प्राश्नोति Vd 3. Viṣṇusmṛti 85. 67

जुहुयात् ॥

ब्र० । पूषा पिष्टभागिति श्रुतिनिदर्शनात्[1] अत्र पौष्णः पिष्टशालिमयश्चरुः ॥

इह रडिरिति[2] हुत्वा ॥ ३ ॥

दे० । इह रडिरित्याद्या दशाहुतीर्जुहुयात्प्रधानानन्तरम् ॥

ब्र० । इह रडिरिति स्रुवेण दशाहुतीर्जुहोति । इह रडिः स्वाहा ॥ १ ॥ इह रतिः स्वाहा ॥ २ ॥ इह धृतिः स्वाहा ॥ ३ ॥ इह विधृतिः स्वाहा ॥ ४ ॥ इह स्वधृतिः स्वाहा ॥ ५ ॥ इह रन्तिः स्वाहा ॥ ६ ॥ इह रमः स्वाहा ॥ ७ ॥ इह रमतां स्वाहा ॥ ८ ॥ इत्यष्टौ स्वाहाकारान्ताः । अग्ने वेट् ॥ ९ ॥ स्वाहा वट् ॥ १० ॥ इति यथापठिताभ्यामेव । नात्र स्वाहाकारः ॥

आ० । इह रडिरित्याज्यस्य जुहोति प्रतिमन्त्रं दशाहुतीः ॥

रुद्राञ्जपित्वा ॥ ४ ॥

दे० । ततो रुद्राभिधानान् षडनुवाकाञ्जपेत् ॥

ब्र० । ततो नमस्ते रुद्र मन्यव इति षडनुवाकान्[3] । सहस्रशीर्षेति षोडशर्चं पुरुषसूक्तं[4] । यद्देवा देवहेडनं यददीव्यन्नृणमहम् आयुस्ते विश्वतो दधद् वैश्वानराय प्रतिवेदयाम इति सूक्तं चतुष्टयं[5] । कूष्माण्डानि च जपेत्[6] ॥

जीववत्सायाः पयस्विन्याः पुत्रमेकरूपं द्विरूपं वा यो वा यूथं

---

1. I am unable to point out the source of this śruti quotation, cp. Gop. br. II. 1.2 ( पिष्टभाजन ). 2. Cp. XXVI. 10 and Br. on our sūtra. 3. Kāṭh. XVII. 11—16. 4. Forming part of the Kaṭh. āraṇyaka, see Schroeder, Zwei Handschr. der K. K. Bibliothek, page 9. The puruṣasūkta according to the Ṛgvedins consists of 16, according to the Kaṭhas of many more verses. 5. All in the Kaṭha-āraṇyaka, see Schroeder, die Tuebinger Kaṭha-Handschriften, pages 68, 70, 72, 75. 6. These words ought to precede the passage यद्देवा देवहेडनं, these anuvākas are precisely the Kūṣmāṇḍāni (or Kūśm° ).

छादयेद्यूथे च तेजस्वितमः स्यात्तमलंकृत्य चतस्रो ऽष्टौ वा वत्सतर्यस्ताश्चालंकृत्यैतं युवानं पतिं वो ददाम्यनेन क्रीडन्तीश्चरथ प्रियेण। मा हास्महि प्रजया मा तनूभिर्मा राधाम द्विषते सोम राजन्निति ॥ ५ ॥

दे०। अतिशयप्रत्ययार्थः आरम्भ उत्सृजेदित्यपेक्षया द्वितीया। ततो ऽपि एकरूपं द्विरूपं वा एकरूपेति तस्माद्रोहितरूपं[1] पशवो भूयिष्ठा इति श्रुतत्वात्[2] रोहितवर्णं बह्वृचे चोक्तं[3]। द्विहायनमेकहायनं वा नीलं बभ्रुं कपिलं चेति। द्विरूपत्वे ऽपि बभ्रुं सप्तशुक्लैश्चन्द्रकैश्चित्रितं पुराणे चोक्तं।...यो वा यूथं गोगणं छादयेत्। सर्वत्रोन्नत इत्यर्थः। यो वा यूथे तेजस्वितमः शौर्यकान्त्यादियुक्तः। तमलंकृत्य वस्त्रमालाघण्टादिना। चतस्रो ऽष्टौ वा वत्सतर्य इति विकल्पः। वत्सतर्यो ऽक्षतयुवत्यो दुहितरश्चतुर्वर्षाः। ता अपि पूर्ववदलंकृत्यैतमित्यादिमन्त्रेण ॥

ब्र०। जपादनन्तरमयस्कारो वृषभमङ्कयेत्। शूलेन दक्षिणं पार्श्वं वामं चक्रेण। वामं पार्श्वं शूलेन दक्षिणं चक्रेणेति विष्णुस्मृतिदर्शनात्[4]। अङ्कितं हिरण्यवर्णा इति चतसृभिरापो हि ष्ठेति तिसृभिः शं नो देवीरिति चाद्भिरकेवलाभिर्वत्सतर्यश्च स्नापयित्वा गन्धमाल्यादर्शकिङ्किनीसौवर्णशृङ्गरौप्यखुरमुक्तालाङ्गूलपट्टवस्त्रादिभिः सवत्सतरीकमलंकुर्यात् ॥

आ०। यो वा यूथं प्रच्छादयेत् उच्चत्वेन। यूथे च तेजस्वितमः स्यात् वीर्यवत्तमो गवां समूहे। तमलंकृत्य समाचाराच्चक्रशूलाङ्कितं च कृत्वा चतस्रो ऽष्टौ वा वत्सतर्यस्त्रिहायनास्ताश्चालंकृत्यानुमन्त्रयते ॥

तस्य दक्षिणे कर्णे पिता वत्सानामिति जपित्वोत्सृज्य[5] प्राची-

1. ०रूपः the Mss. 2. Kāth. XXIV. 2: 91.2. 3. Cp. Śāṅkh. gṛhs. III. 11. 10, but perhaps the following words are cited from a Bahvṛcabrāhmaṇa. 4. Viṣṇusmṛti 86. 10. 5. It is difficult to reconstrue this part of the sūtra. As above given runs the text in Devepāla, except that he has

मुदीचीं वा दिशं प्रकालयित्वा सह वत्सतरीभिः सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् ॥ ६ ॥ ५९ ॥ (५।५)

दे० । तस्य वृषस्य दक्षिणे श्रोत्रे पिता वत्सानामिति जपेत् । मन्त्रलिङ्गादयमेव त्यागमन्त्रः[1] । उत्सर्गसंकल्पं निर्वर्त्य वत्सतरीभिः सह प्राचीमुदीचीं वा दिशं प्रकालयेत् नयेत् । ततः सर्पिषा भूयसा युक्तं हविष्यमन्नं नाना प्रकारं ब्राह्मणान्यथाशक्ति भोजयेत् ॥

ब्र० । प्रागुदीचीं दिशं प्रकालयेत् । तत ऋतुतिथियागादितन्त्रसमाप्तिः । शोभनं वसनयुग्मं घृतपूरितं कांस्यपात्रं रुक्मं च यथाशक्ति होमकर्त्रे दद्यादयस्कारं च तोषयेत् । बहु सर्पिष्मदन्नं सदक्षिणं विप्रेभ्यो दद्यात् ॥

---

दे० । स्वस्त्ययनानन्तरमाह ॥

आग्रहायण्यामेतान्येव चत्वारि हवींष्यासादयेद्यानि[2] श्रावण्यां यवमयस्त्वपूपः ॥ १ ॥

दे० । अग्रे हायनो ऽस्य अग्रहायणी । अग्रे वा हायनो ऽस्या अग्रहायणी । हायनः संवत्सरः । तस्याग्रे आरम्भे वा यस्या अग्रे पुरो हायनः सा आग्रहायणी[3] । अग्रे हायनो ऽस्य आग्रहायणी[4] । सा तु मार्गशीर्षस्य पौर्णमासी । सैव संवत्सरस्याग्रे । तस्याः संवत्सरो ऽग्रे[5] चैत्रामावस्याया ह्यारभ्य तदन्त एव ज्योतिःशास्त्रे संवत्सरः प्रसिद्धश्चैत्रादिमासयुक्त इत्यादिव्यवहारात् । रूढत्वे दूरविप्रकर्षेण योगो ऽप्यस्तीति निर्वचनं । पौर्णमास्यश्चतस्रः स्वस्त्ययनस्योक्ताः । श्रावण्याश्वयुज्याग्रहायणी चैत्री चेति । तत्राग्रहायण्या चैत्रादि-

---

जपेत् instead of जपित्वा. In Br. we read: तस्य दक्षिणे कर्णे पिता . . (then the whole mantra) . . ०योत्सृज इत्यृषभमुत्सृज्य । the Mantra is identical with Kāṭh. XIII. 9: 191. 18 as to the first two pādas; then follows, रेतोधां त्वा यशोधां रायस्पोषायोत्सृजे ॥

1. Thus A: ०यमेवेत्यागममन्त्रः D C. 2. Both the copies of Br. leave the words यानि श्रावण्यां out. 3. Thus A; अग्रहायणी D: C and first hand of D आग्रायणी. 4. Thus D; अग्र० A, आग्रायणी C and first hand of D. 5. Thus the Mss.

संवत्सरः पुरः सा था तस्य पूर्वा । तत्रैतान्येव चत्वारि हवींष्या-
सादयेद्यानि श्रावण्यामुक्तानि[1] । विशेषमाह यवमयस्त्वपूपः ।
अपूपो ऽत्र यवमयः स्थालीपाकस्तु व्रीहिमय इति शेषः। एवं चात्र
त्रयो यवमयाः संपन्ना अपूपा धानाः सक्तव इति ॥

ब्र० । मार्गशीर्षमासपौर्णमास्यामाग्रहायणी । तस्यां प्रातराखुराजाय बलिं
समाप्य श्रावणीवदेव चत्वारि हवींषि । यवमयस्त्वपूपः ॥

आ० । आग्रहायणमस्याः सा आग्रहायणी पौर्णमासी । तस्यां तान्येव
चत्वारि हवींष्यासादयेद्यानि श्रावण्यां। यवमयो ऽपूप इति विशेषः।
वरुणत्वात् ॥

एवा वन्दस्वेत्यपूपस्य जुहोति ॥ २ ॥

दे० । एवा वन्दस्वेत्यादिना मन्त्रेणापूपस्यावदानद्वयं जुहोति ॥

ब्र० । आज्यभागान्त एवा वन्दस्वेति यवापूपस्य जुहोति ॥

उप ते गा इति स्थालीपाकस्य ॥ ३ ॥

दे० । गतार्थम् ॥

ब्र० । उप ते गा इवेति रात्रिदेवतस्य चरोः ॥

उक्तं धानासक्तूनाम् ॥ ४ ॥

दे० । धानासक्तूनां यत्कर्म तदुक्तमेव श्रावण्यां । तथैव कर्तव्यता ।
नास्ति तत्र विशेषः ॥

ब्र० । नमो अस्तु सर्पेभ्य इति धानानां ये वाद इति सक्तूनां येषु वा
यातुधाना इति दर्व्यावटेपु सक्तूनाम्[2] ॥

अव ते हेड इति वारुणीभिरभिजुहुयान्नित्याभिश्च त्वामग्न वृषभं
चेकितानं संवत्सरस्य प्रतिमामिति च ॥ ५ ॥

दे० । नित्याभिश्च । जुहुयादित्यनुषङ्गः । एता अपि । इह गाव इत्या-
द्यास्तिस्रः[3] । नित्याभिर्हुत्वा त्वामग्ने इति द्वाभ्यां जुहोति ॥

ब्र० । ततः स्रुवेणाग्रावाज्याहुतीः । अव ते हेड उदुत्तमं तत्त्वा यामीति
तिस्रः । त्वामग्ने वृषभं संवत्सरस्य प्रतिमामिति द्वे । एवमष्टौ ॥

उदग्दशमास्तरणमास्तीर्य शिरस्त उदकं निधाय व्रीहियवानो-

1 Cp LV 2    2 Cp LV 3-4    3 Cp XLVII 13

**प्यापोहिष्ठीयाभिः[1] शय्यामभ्युक्ष्य त्रातारमिन्द्रमिति शमीशाखया शय्यां निर्मार्ष्टि[2] ॥ ६ ॥**

दे० । उदीच्यां दिशि दशा यस्य भवन्ति तादृशमास्तरणं पटादिकमास्तीर्य भूमिशय्यायां प्रस्तीर्य यत्र शिरस्तत्रोदकं निधाय तत्र च व्रीहियवान्प्रक्षिप्य शय्यामापोहिष्ठीयाभिस्तिसृभिरभ्युक्ष्य त्रातारमिन्द्रमिति शमीशाखया शय्यां निर्मार्ष्टि[3] शोधयति ॥

ब्र० । अस्मिन्दिने स्वापकाले चोदग्दशं स्तरणमास्तीर्येत्यादिविधिना संविशेत् ॥

आ० । यत्र हेमन्ते शयितव्यमास्तीर्णे[4] प्रस्तरे तत्रोदग्दशमास्तरणं प्रच्छादनमास्तीर्य यत्र शिरस्तत्रोदकं संनिधाय तत्र च व्रीहियवान्प्रक्षिप्य.. त्रातारमिन्द्रमिति तां निमार्ष्टि शोधयति शमीशाखया ॥

**ऐन्द्राग्नं वर्मेत्यहतं वासः[5] परिधाय स्योना पृथिवीति दक्षिणेन पार्श्वेण संविशति ज्योतिष्मतीत्यन्तेन ॥ ७ ॥**

दे० । ऐन्द्राग्नं वर्मेत्यादिना मन्त्रेणानुपभुक्तं हेमन्तयोग्यं वासः परिधाय .. विशति शय्यां दक्षिणेन पार्श्वेन । सर्वानुवाकनिवृत्त्यर्थं ज्योतिष्मत्यन्तग्रहणम् ॥

आ० । ऐन्द्राग्नं वर्मेत्यनयाहतं वासो हैमनं प्रावरणं परिधाय प्रवृत्य स्योना पृथिवीति दक्षिणेन पार्श्वेन संविशति शय्यायां । ज्योतिष्मतीत्यन्तेन । आद्यन्तग्रहणमनुवाकशेषो मा विज्ञायि[6] ॥

**अभ्युक्षणादिसंवेशनान्तमेवं[7] द्विरुत्तरम् ॥ ८ ॥**

दे० । उत्तरं द्विः कर्म कर्तव्यं । किं तत् । अभ्युक्षणादिविशत्येवं[8] । एवंशब्दो ऽन्तर्वचनं[9] संवेशनमित्यर्थः[10] ॥

---

1. ०यवानुप्य Br., ०यवान्वोथ the Mss. of Devapāla; Cp. XV. 3. 2. निमा० Br. and of the Mss. of Devapāla C. 3. निमा० D C. 4. Conjecturally emended; शयतव्यामयितव्यस्वास्तीर्णे the Ms. 5. Br. अधोवासः ( i.e. अधीवासः ? ). 6. विज्ञाय the Ms. 7. अभ्युक्षणादिसंविशत्येवं (!) the Mss. of Devapāla. 8. Sic! 9. Thus A C T, ०न्तवचनं D. 10. संवेशनं not given by D C.

अ० । एवमुत्तरं कर्म द्विः कुर्यादभ्युक्षणादिसंवेशनान्तम् ॥

चैत्र्यामुद्रोहणमुपरिशय्या नात्र स्थालीपाको न शाखया निमार्ष्टि[1] ॥ ९ ॥ ६० ॥ ( ५ । ६ )

दे० । एवंशब्दः संबन्धनीयः । एवमेव चैत्र्यां पौर्णमास्यां कर्म कर्तव्यं यथाग्रहायण्यामुक्तं । एतावांस्तु विशेषः । अत्रोपरिशय्या । अभूमौ खट्वायामित्यर्थः । अस्मादेवाग्रहायण्यां भूमौशय्या गम्यते । अत एवोद्रोहणं । ऊर्ध्वरोहनं आरोहणं । अत एवोद्रोहणमित्यन्वर्थं नामास्य कर्मण इष्टं । अयमपरो विशेषः । नात्र स्थालीपाकः । नापि शमीशाखया निमार्जनं । परिशिष्टं तु सकलमाग्रहायण्या तुल्यम् ॥

ब्र० । चैत्र्यां यवमयो ऽपूपो धानाः सक्तव इति त्रीणि हवींषि । नात्र रात्रिदेवतश्चरुः । आग्रहायणीवदेवैषां यागो ऽभहोमश्च । तथैव च शयीत नात्र त्रातारमिन्द्रमिति शमीशाखया निमार्जयेत् ॥

आ० । एतदेव चैत्र्यां कर्मोद्रोहणाख्यं । तत्र विशेषः । उपरिशय्या खट्वादौ । इह तु भूमौ । स्थालीपाको न भवति शाखामार्जनं च । स्योना पृथिवीति शयनमुपरिशयने ऽपि भवति यस्मात्पृथिव्या अनुमन्त्रणमेतत्पृथिवी च सर्वेषामाधारः । अहतं वासो ऽत्राशु[2] सूक्ष्मतरं निवातकालीनं । उद्रोहणं ऊर्ध्वरोहणं । उपरि वातायनादौ शयनमिति ॥

---

तिस्रो ऽष्टका पितृदेवत्याः[3] ॥ १ ॥

दे० ।...तत्राष्टकाशब्दः कर्मसमुदायनाम राजसूयादिवत् । एकैकस्यां च कर्मत्रयं प्रतीयते । स्थालीपाककर्मैकं प्रधानं । आवाहनादिसंतर्पितब्राह्मणानुव्रजनपर्यन्तं द्वितीयं । आन्वष्टक्यं[4] तृतीयं । आज्यभागान्ता त्वितिकर्तव्यता । स्थालीपाकादातिथ्यकं तु पश्चात्[5] ॥

आ० । अष्टका इति कर्मनामधेयं । कर्मत्रयमष्टकाशब्देनोच्यते । होमः श्राद्धमन्वष्टक्यं च । ताश्च पितृदेवत्याः । श्राद्धप्रधाना इत्यर्थः ।

---

1. निमा० Br. and of the Mss. of Devapāla C D. 2. ? ?
3. ०देवताः Br., ०दैवत्याः the Mss. of Devapāla and the Lahore Ms. of Br. 4. R. अन्वष्टक्यं ? 5. ? Thus D second hand : स्थालीपाकात्तु पश्चात् the other Mss.

अथवा पशुपक्षे देवताभिधानं वपाच्छेदनादौ पितृभ्यस्त्वा जुष्टमवकृन्तामीति ॥

**ऊर्ध्वमाग्रहायण्यास्त्रयस्तामिस्रास्तेष्वष्टमीष्वष्टकायज्ञाः ॥ २ ॥**

दे० । एवमाग्रहायण्या ऊर्ध्वं ये त्रयः कृष्णपक्षाः पौषमाघफाल्गुनाख्याः । तेषु या अष्टम्यस्ता अष्टकायज्ञाः कर्तव्याः ॥

आ० । ऊर्ध्वमाग्रहायण्यास्त्रयो ये तामिस्राः पक्षास्तेषु पक्षेषु या अष्टम्यस्तास्वष्टमीष्वष्टकायज्ञाः कर्तव्याः । अष्टकायै यज्ञाः अष्टकायज्ञाः ॥

**प्रथमां शाकेन द्वितीयां मांसेन तृतीयामपूपैः ॥ ३ ॥**

दे० । कुर्यादिति शेषः । हविष्यान्ननिवृत्तिः । आज्यभागान्ते च पवित्रशाकाद्यं[1] चतुरावत्तेन होतव्यमष्टकायै स्वाहेति ॥

ब्र० । अक्षोटफलमिश्रं तु मिश्रं लाजा च माक्षिकैः ।
शाकसंज्ञमिति प्रोक्तं प्रथममष्टकाविधौ ॥

आ० । शाकव्यञ्जनमन्वाहार्य इति वचनाच्छाकादयो ऽन्वाहार्याः । न तैर्होमः । एवं पूर्वस्मिन्पक्षे आज्यभागान्तं हुत्वा अष्टकायै स्वाहेति शाकादीनां होमः । ततः स्थालीपाकहोमः ॥

**ऋतूनां पत्नीति षड् द्वे द्वे स्थालीपाकस्य जुहोति ॥ ४ ॥**

दे० । ऋतूनां पत्नीत्यादयः षडृचो ऽनुवाकशेषभूताः । ताभ्यो निष्कृष्य द्वे द्वे ऋचौ प्रत्येकं स्थालीपाकस्य जुहुयादाज्यभागान्ते ॥

आ० । तत ऋतूनां पत्नीति षडृचः अनुवाकशेषः । तासां द्वे द्वे स्थालीपाकहोमे तिसृणामष्टकानां नियुक्ते ॥

**देवा ग्रावाण इति[2] सर्वत्र तृतीया ॥ ५ ॥**

दे० । देवा ग्रावाण इत्यादिका यथा सर्वास्वष्टकासु भवति तेन तृतीययमृग्भवति । ततश्चैकैकत्र तिस्रस्तिस्रो भवन्ति ॥

---

1. ? Thus the second hand of D; पवित्रशाकोदश्चतु° the other Mss. 2. This verse, until now not found in any text of the Kaṭhas, agrees with Aś. III. 10.5, only देवा ग्रावाणो at the beginning, whereas the last pāda runs (as in Mān. gṛhs. II. 8.3.b): ज्योग्जीवेम बलिहृतो वयं ते । The Kaṭha recension moreover has परिवत्सरीयम, as the Mān. gṛhs.

**इयमेवेत्यनुवाकेन पञ्चभिः पञ्चभिरभिजुहुयात् ॥६॥६१॥(५।७)**

दे० । स्थालीपाकेनेष्ट्वा इयमेवेत्यादिनानुवाकेन जुहुयात् । किं संकलेन सर्वत्रेत्याह । पञ्चभिः पञ्चभिः । इयमेवेत्यादिना पञ्चभिः प्रथमाष्टकायामभिजुहुयात् । पञ्च व्युष्टीरिति मध्यमायां । ऋतस्य धामेति तृतीयायां । अभिशब्द उपरिवचनः । हविषामुपरि जुहुयादित्यर्थः । आज्येनैता आहुतयः । अत ऊर्ध्वमृतुतिथ्यादिकम्[1] ॥

ब्र० । आग्रहायण्या ऊर्ध्वमृतूनां पत्न्यृतस्य धाम देवा ग्रावाण इति तिसृभिः प्रधानानीयमेवेति पञ्चभिः स्रुवेणाज्येनाभिहोमः । तैष्या ऊर्ध्वं कृष्णाष्टम्यामेकाष्टकानानुजामनुजां देवा ग्रावाण इति तिसृभिः प्रधानं पञ्च व्युष्टीरिति पञ्चभिरभिहोमः । माघ्या ऊर्ध्वं कृष्णाष्टम्याम् भून्नु नः प्रथमा ह देवा ग्रावाण इति तिसृभिः स्थालीपाकस्य होमः ऋतस्य धामेति पञ्चभिरभिहोमः ॥

---

**गवा चेदष्टका स्यात्पशुना वा तदुक्तम् ॥ १ ॥**

दे० । चच्छब्दो यद्यर्थे । स्थालीपाकेन गवा वा छागेन वाष्टका भवति । यदा गवा तदा स्थालीपाकस्थानेऽपि गौस्त्यक्तव्या पित्रुद्देशेन ब्राह्मणाय दातव्येत्यर्थः । यदा तु छागेन तदातिदेशमाह तदुक्तमिति । आदावेव पशुकल्प इत्युक्तं[2] । तदेव तन्त्रमिह ज्ञेयमित्यर्थः । एतावांस्त्विह विशेषः । पितृभ्यस्त्वा जुष्टमवकृन्तामीति वपावकर्तनं कर्तव्यमिति ॥

ब्र० । यदि गवा पशुना वाष्टका स्यादष्टकाचरुहोमः पञ्चकाभिरभिहोमश्च निवर्तते । अयं द्वितीयोऽष्टकायज्ञकल्पः । पूर्वेण तु सहास्य विकल्पः । पशुतन्त्रं तु पूर्वमुक्तं । विशेषान्वक्ष्यामः । प्राचीनावीती दक्षिणाभिमुखः पितृकर्म कुर्यात् । ऋतस्य त्वेत्यत्र पितृभ्यो जुष्टमिति पितृभ्यो भागः सुवित इति[3] प्रायश्चित्तहोमे । पितृभ्यस्त्वा जुष्टमवकृन्तामीति वपामवकृन्तति ॥

---

1. Emended; अत ऊर्ध्वमातिथ्यादिकं कर्म the Mss. 2. See Kandika LI. 3. See Br. on K. LI, page 164, note 6.

वह वपामिति[1] वपां जुहुयात् ॥ २ ॥

दे० । वह वपां जातवेद इत्यादिना वपां जुहुयात्प्राचीनावीती दक्षिणामुखः ॥

पेश्यो[2] ऽवदानस्थाने[3] ऽङ्गारिणीः कुर्यात् ॥ ३ ॥

दे० । दीर्घमांसलताः पेश्यः । ता अवदानस्थानेभ्य उद्धृत्याङ्गारिणीः कुर्यात् । अङ्गारेषु पचेन्न स्थाल्यामित्यर्थः ॥

ब्र० । दीर्घमांसपेशीरुद्धृत्यावदानस्थानेभ्यो ऽङ्गारेषु श्रपयेत् ॥

यथाकामं मज्जुका ॥ ४ ॥

दे० । मज्जुका[4] वपानिर्मितो यूषः[5] । यथाकामं यथा संपद्यते तथा कार्येत्यर्थः[6] । सा च स्थाल्यामेव पक्तुं शक्यते ॥

ब्र० । यथाकामं तु यूषार्थमन्यन्मांसं स्थाल्यां श्रपयेत् ॥

आ० । यथाकामं मज्जुका यूषः । तत्स्थाल्यां श्रपणं भवति नाङ्गारेषु ॥

ये समाना इति द्वाभ्यां स्थालीपाकस्य पेशीनां च[7] जुहोति ॥५॥

दे० । ये समाना इति द्वाभ्यां स्थालीपाकेन पेशीभिश्च यथासंख्यं जुहुयात् । ये समानाः समनसः पितर इति स्थालीपाकस्य ये समानाः समनसो जीवा इति पेशीनाम् ॥

ब्र० । ये समाना इति पशुचरुप्रधानहोमः ॥

स्विष्टकृद्धर्मेण वहान्नं वह मांसं जातवेदः पितृभ्य इति[8] जुहुयात् ॥ ६ ॥ ६२ ॥ ( ५ । ८ )

---

1. The Mantra, quoted probably from the Kaṭhayajna-sūtra; runs: वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके । मेदसः कुल्या उप तान्स्रवन्तु सत्या एषामाशिषः सन्तु कामैः, Cp. Vaj. Saṃh. XXXV. 20. (Kāṇva Recension). 2. Thus Br. and Ād., but the Mss. of Devapāla पेशीरवदान० । 3. Uncertain; Br. in his continuous text: मज्जुका; of the Mss. of Deva D gives ०कः, TC and first hand of D: रज्जुकः; A broken off. 4. ०को D, TC A and D first hand ०का । 5. पूपः the Mss. 6. Thus (pointing to a fem. sing.) DTC, कार्य इत्यर्थः A. 7. च missing in Br. and Ād. 8. Variants of the Mantra given under sūtra 2.

दे० ।·वहाग्नं जातवेद इति स्थालीपाकस्विष्टकृदिति वह मांसमिति त्र्यङ्गस्विष्टकृदिति । ऋतुतिथ्यादिकं पूर्ववत् ॥

ब्र० । वनस्पतिमिष्टुतुतिथियागादि[1] च प्राक् स्विष्टकृतः पितृभ्यो बलिमुपहृत्य तद्देवतांश्च मन्त्राञ्जप्त्वा वह मांसमिति स्विष्टकृद्धोमः । समिदाधानान्तं तुल्यमन्यत् । कलौ गोवधनिषेधादजः पशुरेव ॥ इति विशेषाष्टकाः ॥

आ० । स्विष्टकृद्धर्मेण स्विष्टकृत्काले वहाग्नमिति स्थालीपाकात् वह मांसमिति त्र्यङ्गात् । इडामग्न इति निवृत्ता । हुतशिष्टं मांसं श्राद्धे । इह गृह्ये यत्र यत्र गोवधस्तत्र तत्र कल्पितः पशु अन्यन्मांसं वा दृश्यते न गोवधो लोकसंक्रुष्टत्वादनुष्ठेयं मांसं लौकिकमपि भवति । अनुपाकृतं मांसं गोरेव[2] प्रतिषिद्धं नाजस्य[3] मेषस्य वा । तथा च हारीतः । ग्राम्यपशूनामश्नन्त्यजस्यावेः उपाकृतस्य च गोः । तेनानुपाकृतमांसानीति गोविषयमेव ॥

---

दे० । अष्टकायज्ञादूर्ध्वं श्राद्धमाह ॥

हविरर्हानुपवेश्य ॥ १ ॥

दे० । हविः स्वधां श्राद्धभोजनमर्हन्ति ते हविरर्हाः । स्मृत्युक्ता वेदविदादयः पतितादिवर्जाः । प्रकृतकर्मयोग्याः । तानुपवेश्य वैश्वदेवे द्वौ प्राङ्मुखौ पित्र्ये त्रीनुदङ्मुखानास्तीर्णदर्भासनेषु ॥

आ० । श्राद्धं प्रस्तौति । होमं द्विप्रकारं विकल्पने सर्वास्वष्टकासु कृत्वा । हविर्ये ऽर्हन्ति हविषः श्राद्धं तत्र ये योग्याः तानुपवेश्य ॥

पितॄनावाहयिष्यामीत्युक्त्वा ॥ २ ॥

दे० । ततः पितॄनावाहयिष्यामीति ब्राह्मणेभ्यो ऽनुज्ञामर्थयते । पितृग्रहणप्राधान्यात् । तेनादौ विश्वेदेवानामावाहनादि कार्यम् ॥

आ० । एवमुपवेश्य पितॄनावाहयिष्यामीति च तान्पृच्छति ॥

अपयन्त्वसुरा इति[4] द्वाभ्यां तिलैः सर्वतो ऽवकीर्य ॥ ३ ॥

---

1. ०मिष्टयन्तुति० the Ms. 2. गौरेव the Ms. 3. नाजंन the Ms. 4. The Mantras of the Śrāddha chapter were contained in two Anuvākas (Cp. LXIII. 20), which probably formed part of the last Mantra-adhyāya. See on them Appendix VII.

दे० । तत आवाहयेति पङ्क्तिपावनैरनुज्ञातः पूर्वं वैश्वदेवविषये अप-यन्त्वसुरा इति द्वाभ्यां यवैस्तिलार्थं कुर्वीत वैश्वदेवे न संशय इति परिशिष्टानुसारेण सर्वतो यवविकिरणेनासुरावकाशापसारं कृत्वो-मासश्चर्षणीधृत इति विश्वान्देवानावाहयेत् । आवाहनमाह्वानं । अनन्तरं पित्र्ये ऽपयन्त्वसुरा इत्याभ्यामेव तिलानां सर्वदिक्कोणवि-किरणेनासुरावकाशमपास्य ॥

आ० । आवाहयेति तैरनुज्ञातः । अपयन्त्वसुरा इति द्वाभ्यां तिलैः सर्वतः श्राद्धभूमिं विकीर्यावाहयति ॥

एत पितर आगच्छत पितर आ मे यन्त्वन्तर्दधे पर्वतैरिति जपित्वा ॥ ४ ॥

दे० । पितॄनावाहयेदेत पितर इत्यादिभिश्चतुर्भिः । एतन्मन्त्रजप एव ह्यावाहनम् ॥

आ० । जप एवावाहनम् ॥

यास्तिष्ठन्त्यमृता वाग्यन्मे मातेत्ययुग्भ्यः पाद्यमानीय[1] ॥५॥

दे० । ततो यास्तिष्ठन्तीति पञ्चभिः[2] पाद्यं पादार्थमुदकं ब्राह्मणसंख्यया प्रतिपात्रमानयेत् । केभ्यः । अयुग्भ्यो ब्राह्मणेभ्यः । अयुग्मरूपेण ये त्रयः स्थिताः पित्र्ये तदर्थमित्यर्थः । प्रदर्शनार्थं चैतत् । तेन युग्भ्या-मपि वैश्वदेवाभ्यामर्घ्यपाद्यानयनम् ॥

आ० । अयुग्ग्रहणेन च ज्ञायते युजो ऽपि सन्तीति । यथा याज्ञवल्क्यः ।[3] दैवे युग्मान्यथाशक्ति पित्र्ये ऽयुग्मांस्तथैव च । तेनैवंविधेनेति-कर्तव्यता । बर्हिष्मत्स्वासनेषु प्राङ्मुखान्युग्मान्विश्वेभ्यो देवेभ्य उपवेश्य । अयुग्मान्पितृभ्य उदङ्मुखान् । वैश्वदेवे विश्वेदेवाना-वाहयिष्यामीति तदनुज्ञातः ओमासश्चर्षणीधृत इत्याहूय यवैरन्व-वकीर्य सयवमुदकं पाद्यमर्घ्यं च दत्त्वा ।...अस्माकमपि परिशिष्टे-षूक्तं । यवैस्तिलार्थं कुर्वीत वैश्वदेवे न संशय इत्येतत्सूत्रकृता

1. The sutra proper has disappeared from the Mss. of Devapāla. 2. According to the Prayogas the following five are intended: यास्तिष्ठन्ति, अमृता वाक, यन्मे माता, यन्मे पितामही, यन्मे प्रपितामही । 3. I. 227.

अयुग्भ्य इत्यनेन शब्देन दर्शितं । त्रिषु पात्रेषु पाद्यमानीय यन्मे मातेति पूर्वस्मिन्पात्रे यन्मे पितामहीति द्वितीये यन्मे प्रपितामहीति तृतीयस्मिन् । केचिद्ब्राह्मणदर्शनात्तस्मात्त्रिरेकस्यापः प्रदीयन्त इति[1] यथा कुर्वन्ति । नैतत्सूत्रकारेणोक्तं । न च तथा दशोदकं भवति ॥ आनीतेन पाद्येन ब्राह्मणाः स्वयं पादाववनेनिजते मधुपर्कवत् ॥

उदकानि चानयेदेताभिरेव ॥ ६ ॥

दे० । आनीय ब्राह्मणपात्रेषु सिञ्चेत् दक्षिणं पादमिति द्वाभ्यां[2] । तत एताभिरेव पञ्चभिर्ऋग्भिरुदकान्यानयेत् । उदकानीति बहुवचनालिङ्गात्पात्रभेदेनोदकमानयेदिह तत्साहचर्यात्पाद्ये ऽप्येवं । उदकानि त्वर्घार्हाः पुष्पतिलसुगन्धद्रव्यान्विता आपः ॥

आ० । उदकानि गन्धोदकतिलैर्युक्तानि सौषधान्यर्घ्यार्थे । उदकानीति बहुवचनात्पात्रभेदः । ततोऽनुलेपनपुष्पधूपदीपप्रदानम् ॥

आदित्या रुद्रा वसव इत्येतान्समीक्ष्य ॥ ७ ॥

दे० । अर्घ्यदानानन्तरं ब्राह्मणान्समंकृत्वा वीक्षते ॥

आ० । आदित्यादिबुद्धिं ब्राह्मणेषु कुर्यादित्यर्थः ॥

अग्नौ करवाणीत्युक्त्वा ॥ ८ ॥

दे० । ततोऽग्नौ करवाणीति ब्राह्मणान्पृच्छति ॥

अग्निं परिस्तीर्य सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इत्यग्नौ हुत्वा ॥ ९ ॥

दे० । कुर्वित्यनुज्ञातो दक्षिणाग्रैर्दर्भैः परिस्तीर्य दक्षिणाभिमुखः प्राचीनावीती सोमाय.. अग्नये स्वधा नम इति प्रधानान्तेनाग्नावाहुतिद्वयं जुहुयात् । पुनरग्निग्रहणं पिण्डपितृयज्ञवद्भूमौ प्रक्षेपो मा विज्ञायि ॥

आ० । पुनरग्निग्रहणं देवाग्निनिवृत्त्यर्थम् ॥

ये मामकाः पितर एतद्वः पितरोऽयं यज्ञ इति तिसृभिः कल्पि-

---

1. See the first Kaṇḍikā of the Śrāddhabrahmaṇa in Versl. en Meded. der Kon. Ak. v. Wet. Le Amsterdom, Afd. Lett. 5e R., 4e deil, page 193. 2. Cp. XXIV. 10.

**तान्नमभिमृशति ॥ १० ॥**

दे० । तदनन्तरमेतद्व इत्यादिभिस्तिसृभिः कल्पितं पात्र एकोद्धृतमनेकदेशमभिमृशेत् । ततः स्तोकं स्तोकं पात्रेषु दद्यात् । अन्ये तु पात्रेषु दत्तमिति मन्त्रलिङ्गात्पात्रेषु परिशिष्टव्यभिमर्शनमाहुः । यदि पात्रशब्देन भोजनधारा उच्यन्ते अथापि ब्राह्मणा उभयथातीतपरिवेशनंक्रियमनुप्रतीयते पूर्वव्याख्याने ऽपि पात्रे देयं हविरिति लिङ्गमाहुः॥

आ० । केचित्पात्रेषु दत्तममृतं स्वधावदिति लिङ्गात्पात्रेषु दत्तमभिमृशेदित्याहुः । नैवं । पात्रे देयं हविरद्यमग्नेरित्यस्मादपि ब्राह्मणानामत्र पात्रशब्दः ॥

**एषा व ऊर्गामासु पक्वमिति[1] क्षीरं घृतं वासिच्य ॥ ११ ॥**

दे० । क्षीरं घृतं वा वैकल्पिकं विसृष्टे ऽन्ने आसिञ्चेत् । अन्ये तु वाशब्दं समुच्चयार्थं वर्णयन्ति । तेनैषा व ऊर्गिति क्षीरमासिञ्चेदामासु पक्वमिति घृतं मन्त्रलिङ्गात् । वैकल्पिकस्तु पक्षो रूढतरः । पक्वशब्दो ऽपि क्षीरे ऽपि हि युज्यते । तेन मन्त्रलिङ्गस्य विशिष्टम् ॥

आ० । विकल्पः । न यथासंख्यं । न समुच्चयः । समुच्चये सत्यामासु पक्वमिति क्षीरप्रकाशिका घृतमस्यार्थम्[2] ॥

**अमुष्मै स्वधा नमो ऽमुष्मै स्वधा नम इति यथालिङ्गमनुमन्त्र्य भोजयेत् ॥ १२ ॥**

दे० । अमुष्मा इति सामाननिर्देशेन विशेषो लक्ष्यते । तेन पितृपितामहप्रपितामहनामानि चतुर्थ्यन्तानि प्रतीयन्ते सगोत्रसप्रवराणि । कठाय काश्यपगोत्राय पञ्चप्रवराय देवदत्ताय स्वधा नम इत्यादीनि भोजयेत् ॥

आ० । अमुष्मै स्वधा नम इति त्रिरुच्चारणादेकवचनाच्च पितृनाम्ना पितामहनाम्ना प्रपितामहनाम्ना चानुनिर्देशः कर्तव्यः । यथा । देवदत्ताय स्वधा नमः । यज्ञदत्ताय स्वधा नमः । विष्णुमित्राय स्वधा नम इति च । एवं यथालिङ्गमामन्त्र्य भोजयेत् ॥

---

1. The Mss. of Devapāla and the Lahore copy of Br. (not the Bombay copy) insert च. 2. Reading indistinct. R. perhaps. घृतस्यार्थम् ।

प्राश्नन्तु भवन्त इत्युक्त्वा[1] यन्मे प्रकामादिति भुञ्जानान्समीक्ष्या-होरात्रैर्यद्वः क्रव्यात्स्वधां वहध्वमिति चैताभिः ॥ १३ ॥

दे० । यन्मे प्रकामादित्यनेन यद्वः क्रव्यादित्यादिभिस्त्रिभिर्भुञ्जानान्समीक्षेत समंकृत्वा ऋगपेक्षया त्वेताभिरिति निर्देशः ॥

आ० । अनुजानीयात्प्राश्नन्तु भवन्त इत्यनेन । ततो यन्मे प्रकामाद्विति चतुर्भिर्मन्त्रैर्भुञ्जानानव्यवहरतः प्रेक्षते । अस्मिन्नवसरे स्वाध्यायं श्रावयेत्पित्र्ये ब्रह्मोद्याश्च कथाः कुर्यादिति ॥

पृथिवी दर्विरिति निपरणं[2] कुर्यात् ॥ १४ ॥

दे० । पृथिवी दर्विरित्यादिभिस्त्रिभिस्त्रीन्पिण्डान्पितृपितामहप्रपितामहानां दक्षिणाग्रदर्भेषु कल्पयेत् पूजयेच्च यथाचारम् ॥

आ० । ततः[3] पृथिवी दर्विरिति पिण्डनिर्वपणं कुर्यात् भुक्तशिष्टादन्नाद्रसव्यञ्जनात् यस्मादग्नौकरणं कृतं प्रधानभूतादोदनादेः सतिलात्तु । पृथिवी दर्विरिति त्रिभिः पित्रे पितामहाय प्रपितामहाय । असौशब्दस्थाने नामग्रहणं । गोत्रशङ्का न क्वचित्कार्यानभिधानात् ।

ये ऽत्र पितरः प्रेता इति वासांसि निदध्यात्[4] ॥ १५ ॥

दे० । ये ऽत्र पितर इत्यादिना पिण्डानामुपरि वासांस्याच्छादनानि दद्यात् । तानि तु कर्पासतन्तुरूपाणि रूढानि ॥

आ० । वासांसि निदध्याद्युगपत्त्रीणि[5] वीरान्नः पितरो धत्तेत्यन्तेन । वासांसि सूत्रतन्तवः ऊर्णास्तूका वा कार्पासा वा ॥

ऊर्जं वहन्तीरित्यपः परिषिच्य ॥ १६ ॥

दे० । पिण्डेषु परिषिञ्चेत् । ता अपि मन्त्रालिङ्गादन्नस्यन्दिनीः कुर्यात् ॥

मा मे क्षेष्ठेति[6] सतृणमन्नमभ्युक्ष्य ॥ १७ ॥

दे० । ततः सर्वाण्यन्नानि सदर्भेषु जलेनाभ्युक्ष्य मा मे नेष्ठेति सर्वा-

---

1. The words प्राश्नन्तु... उक्त्वा not in Br. (at least in the Bombay Ms.), but they seem to belong to the text, cp. the Mantra in Appendix VII. 2. Thus of the Mss. of Devapāla ACT and first hand of D, निर्वपणं D second hand: Br: पिण्ड-निपरणं: a Tuebingen Ms. gives also निपरणं । 3. तथा the Ms. 4. The Mss. of Devapāla: दद्यात् । 5. निदद्या० the Ms. 6. Thus or क्षेष्टेति, क्षिष्टेति the Mss.; read क्षेष्ठा इति ।

भ्युक्षणं त्वन्नमन्नमिति मन्त्रगताद्वीप्सनिर्देशाद्गम्यते ॥

आ० । अभ्युक्ष्य निरवशेषं मन्त्रलिङ्गात् । ब्रह्माणो मे जुषन्तामन्नमन्न-
मिति वीप्सासाकल्यलिङ्गम् ॥

विषदमन्नमानीय[1] कच्चित्संपन्नं भो इत्युक्त्वा तृप्यन्तु भवन्त इत्युक्त्वा ॥ १८ ॥

दे० । विषदं निर्मलं सोदकप्रभृतिसकलं लेशमुद्धृतं[2] पात्रे समाधाय कच्चित्संपन्नं भोरिति वदेत् । ततः संपन्नं ब्राह्मणैरुक्तं शेषमन्नं च प्रश्नस्योत्तरे इष्टेभ्यः इति च भणिते ये अग्निदग्धा ये जीवा इत्यनेन दक्षिणाग्रास्तीर्णदर्भोपरि सर्वसिद्धे जले ऽञ्जलिना दक्षिणामुखेन प्राचीनावीतिना[3] प्रक्षिप्ते सति अनन्तरं तृप्यन्तु भवन्तः पितर इत्यादि मन्त्रषट्कं पठेत् पितृपितामहप्रपितामहमातृपितामहीप्र-पितामहीतृप्तिलिङ्गं । अत एव मन्त्रलिङ्गान्निपरणास्वधानमस्कार-प्रभृतिषु[4] मात्रादीनां नामोच्चारणमूहितमन्त्रक्रियमाहुः[5] ॥

आ० । ततो विषदमन्नमानीय विषदं संश्लिष्टं विकिरेत् । उदकेनाप्लाव्य भूमौ दर्भेषुविकीर्य कच्चित्संपन्नं भो इत्युक्त्वा तृप्यन्तु भवन्त इत्यु-क्त्वा यथालिङ्गमामन्त्रणप्रतिवचनं श्रुत्वा ॥

तृप्तानाचामयित्वा यन्मे राम[6] इति प्रदाक्षिणं कृत्वा ॥ १९ ॥

दे० । आचमनमाचामः। तं कृत्वाचामयित्वा प्रीतान्यन्मे राम इत्यादिना प्रदक्षिणं यथा भवति ॥

आ०। तृप्तान्ज्ञात्वा तत आचम्य यन्मे रामः शकुनिरिति प्रदक्षिणं कृत्वा । आवृत्तिमात्रमन्यस्यानुपदेशात् ॥

प्रत्येत्याभिरमन्तु भवन्त इत्युक्त्वा देवाश्च पितरश्चेत्यनुवाकशेषे-णोपतिष्ठते । २० ॥ ६३ ॥ ( ५१९) ।

दे० । ब्राह्मणानामुपस्थानं कुर्याद्दक्षिणां दत्त्वा ॥

आ० । प्रत्येत्य[7] यथाशक्ति[7] दक्षिणां दत्त्वा । अभिरमन्तां भवन्त युष्ट-

---

1. विषद here is equal to विशद । 2. लेशम् om. D second hand. 3. ? प्राचीना ACT. प्राचीनावीते D. 4. Instead of निपरण० D निर्वपण० 5. Thus D ; ०क्रियामाहुः ACT and first hand of D. : instead of ०च्चारणमूहित० A : ०च्चारणसहित० । 6. रामः शकुनिरिति Devapāla. 7. प्रत्येत्यप्रातिग्यथाशक्ति the Ms.

क्त्वा। अभिरता स्म इति प्रत्युक्तः देवाश्च पितरश्चेत्यनुवाकशेषेणोपतिष्ठते ॥

---

द्वितीयस्य प्रथमोद्धृतं हविष्यैरुपसिच्य ॥ १ ॥

दे०। द्व्यामुष्यायणस्य द्विधा श्राद्धं स्मृतिषूक्तं। परिगृहीतृगोत्रेण जनयितृगोत्रेण च[1] कुर्यात् आवृत्त्या वा। तत्र यदा तन्त्रेण तदा प्रदाये निपरणे च मन्त्रोहः। अमुष्मै स्वधा नम इत्यत्र जनकप्रतिग्रहीत्रोर्नाम चतुर्थीद्विवचनान्तमुच्चारयितव्यं। देवदत्तयज्ञदत्ताभ्यां स्वधा नम इत्यादि। निपरणे ऽप्यग्निरिव पृथिवीमुपजीवतं देवदत्तयज्ञदत्तौ ये च वामन्वित्यादि[2]। आवृत्तिपक्षे परिग्रहीतुः पूर्वं कृत्वा पश्चाज्जनकस्य कुर्यात्। तत्र द्वितीयश्राद्धप्रकारोऽनेनोच्यते। द्वितीयस्येत्यत्र सूत्रे प्रकारं वक्ष्याम इत्यध्याहर्तव्यं। द्वितीयस्य जनकश्राद्धस्येतिकर्तव्यतां वक्ष्यामः। द्व्यामुष्यायणकर्तृकस्येत्यर्थः। अथ वा द्विपितुर्बीजिनः श्राद्धं पृथग्वक्ष्याम इति व्याख्येयं। यद्वा एकोऽपि कृत्रिमपुत्रादिर्भिद्यते कुलद्वयसंबन्धभेदात्तत्र प्रतिग्रहीतुः श्राद्धे कृते जनकस्य श्राद्धं कुर्वाणः स एव द्वितीय उच्यते। तस्य द्वितीयत्वमापन्नस्य द्वितीयश्राद्धं वक्ष्याम इत्यर्थः एकसंघातेनैव या रसवती कृता ततः प्रतिग्रहीतृश्राद्धकरणात्पूर्वमेवोद्धृत्य सर्वान्नं पृथक् स्थापयितव्यं सव्यञ्जनं। तच्चोपग्रहीतृश्राद्धानन्तरं हविष्यैः दधिक्षीरप्रभृतिभिरुपसिञ्चेत् ॥

आ०। द्वितीयस्योक्त[3] द्व्यामुष्यायणस्य द्वे श्राद्धे कुर्यादिति। तत्र द्वितीयस्य श्राद्धस्येतिकर्तव्यतोच्यते। अष्टकाहोमतन्त्रेण एकस्यां पङ्क्तौ[4] सत्यामिदमुच्यते। प्रथमोद्धृतं पूर्वमेवोद्धृत्य परिशिष्टादन्नादुद्धृत्य सव्यञ्जनं हविष्यैर्घृतादिभिरुपसिच्य अभिघृतं कृत्वा गुप्तं निधाय ॥

आवाहनादि सिद्धं संप्रदानम् ॥ २ ॥

---

1. Om. ACT. 2. Refers to the Śrāddha mantra पृथिवी दर्विः. In the above given passage I have emended the text, which runs; पृथिवीमुपजीतं युक्तं देवदत्त०। 3. ? Read ०कस्य ? 4. पक्तौ the Ms.

दे० । तत अवाहनादि संप्रदानमनुवाकशेषेणोपस्थानान्तमन्येषु ब्राह्मणेषु कुर्यात् । सिद्धमित्यनेन[1] पूर्वोक्तप्रकारं निर्दिशति । आवाहनाद्युपस्थानान्तं पूर्वोक्तमन्यूनातिरिक्तं पुनः कुर्यात् । स्थालीपाकादिकमेव तु तन्त्रेणोपकरोति । प्रथमोद्धृतहविष्यैः परिग्रहीतुः श्राद्धं कृत्वा ततः शेषाज्जनकस्यान्यैर्ब्राह्मणैः श्राद्धं क्रियते । तत्रायमर्थः । प्रथमं परिग्रहीतृश्राद्धार्थमुद्धृतं यस्मात्तत्प्रथमोद्धृतं । तद्यातयामत्वदोषापसारणाय हविष्यैः क्षीरादिभिरुपासिच्य तत एवावाहनाद्युपस्थानान्तं सकलं सिद्धं पूर्वज्ञातमेवावृत्त्या कुर्यादन्यत् स्थालीपाकादि सकृत्कृतं मन्त्रेणोपकरोति ॥

आ० । परिग्रहीतुः श्राद्धं कृत्वा ब्राह्मणान्विसृज्य ततोऽन्यानुपवेश्य जनयितुः प्रथमोद्धृतेनान्नेनावाहनादिसंप्रदानान्तं सिद्धं व्याख्यातं यत्तत्कुर्यात् ॥

## पूर्वेण निपरणं व्याख्यातम् । ३ ॥ ६४ ॥ (५।१०)

दे० । प्रवासदिवसकालभेदात्पूर्वेण निपरणं व्याख्यातमिति निपरणं यथादर्शितमेव कर्तव्यं । तत्र पूर्ववदूहः[2] कर्तव्य इत्यर्थः ॥

ब्र० । पूर्वोक्तसूत्रानुगते द्वे श्राद्धं कुर्यादिति च प्रवराध्याय उक्तं । तत्रैव चैकश्राद्धविधिरुक्तः । एकश्राद्धे वा पृथगनुदिश्यैकपिण्डे द्वौ द्वावनुकीर्तयेत्परिग्रहीतारं चोत्पादयितारं चातृतीयपुरुषादिति[3] । एकश्राद्धे पिण्डमात्र एव । द्वौ द्वावनुकीर्तनं ब्राह्मणेष्वर्घ्यपात्राणि च षडेव ।······यत्रैकपिण्डे द्वौ द्वावनुकीर्तयेत्तत्र पिण्डपितृयज्ञश्राद्धाष्टकावैश्वदेवपिण्डमन्त्राणामूहः । यथा । एतद्वां ततौ ये च वामनु । अग्निरिव पृथिवीमुपजीवतं । विष्णुमित्रसोमशर्माणौ गौतमवसिष्ठावेष वां पिण्डो ये चात्र वामनु । एषा वां स्वधा । एवमुत्तरयोरेवमेव पिण्डसपर्यादौ ॥

आ० । नान्तरेणान्वष्टक्येन एतदपि निपरणं । अथवा श्राद्धं पृथगनुदिश्य । कथं वैश्वदेविकं तावत्तन्त्रं । एकस्मिन्ब्राह्मणे द्वौ पितरौ

---

1. ACT add पूर्वं । 2. पक्षवदूहः ACT. 3. In the last chapter of the Pravarādhyāya (Bombay Ms.; the text of the Pravaramanjarī being incorrect) we read indeed as given above: द्वे श्राद्धे कुर्यादेकश्राद्धे वा etc.

द्वितीयस्मिन्द्वौ पितामहौ तृतीयस्मिन्द्वौ प्रपितामहौ च । यथा । अग्निरिव पृथिवीमुपजीवतं । देवदत्तयज्ञदत्तौ ये च वामन्वेषा वां स्वधेति प्रयोगः । पिण्डपितृयज्ञे च एतद्वां ततौ ये चात्र वामन्विति ॥

---

प्रातरन्वष्टक्यम् ॥ १ ॥

दे० । अष्टकाया अनु पश्चाद्भवमन्वष्टक्यमित्यान्वर्थिकेयं संज्ञान्वष्टक्य-मिति । एतच्च केचिदष्टकाया अङ्गं वदन्ति केचित्तत्सदृशं विकार-भूतं कर्मान्तरं । तत्रोभयथापि तत्कालत्वे प्राप्ते कालान्तरमाह । प्रातरिति । नवम्यां कर्तव्यमित्यर्थः ॥

आ० । नवम्यामन्वष्टक्यम् ॥

एतेनैव धर्मेण संप्रदाय निपरणं कुर्यात्[1] ॥ २ ॥

दे० । एतेनैव धर्मेण इति सर्वनाम्ना प्रकृतस्य द्वितीयस्य श्राद्धस्य परा-मर्शः । यथा द्वितीयश्राद्धे स्थालीपाकादिकं न क्रियते । संप्रदाना-द्यावाहनाद्युपस्थानान्तमन्यूनातिरिक्तमनुष्ठीयते[2] ॥

आ० । एतेनैव धर्मेण संप्रदाय संप्रदानमेवातिदिश्यते न होमः । के-चिद्योगविभागाद्धोममपीच्छन्ति । एतेनैव तदानीं धर्मेणं संप्रदाये-त्यतिरिच्यते । एतदन्तर्भावात् । तस्मात्संप्रदानमेवावाहनाद्यनुदे-शानान्तं । संप्रदाय निपरणं कुर्यात् । कथं । निपरणप्रकार उच्यते ॥

षट्कर्षूः कुर्याद्दक्षिणायताः पूर्वापराः प्रादेशमात्रीश्चतुरङ्गुलपृथ्वी-स्तावदन्तरास्तावदवखाताः ॥ ३ ॥

दे० । कर्षूः खनिरुच्यते । षड्गर्भाः[3] कुर्यात् । दक्षिणायतः दक्षिणोत्तर-रेखया[4] आयताः दीर्घाः । किंप्रमाणं दैर्घ्यमित्यपेक्षायामाह । प्रा-

---

1. The last three words not found in Devapāla's text, they are given by Br., who, however, reads पिण्डकुर्यात् ! and by Ād., as also by a Tuebingen and a Bombay ṛcaka. Moreover, Devapāla connects the three first words with the preceding sūtra (प्रातरन्वष्टक्यमेतेनैव धर्मेण). That the last three words belong to the text, appears from Ād. and Br., and a trace is found in Devapāla's expression: संप्रदानादि । 2. संप्रदानावाहना० D. 3. Thus the Mss. Read षड्गर्तान् ? 4. ०खाया ATC and first hand of D.

देशमात्रीः प्रादेशप्रमाणाः । पूर्वापराः । पूर्वपश्चिमभावेन पंक्त्या स्थिताः । चतुरङ्गुलपृथ्वीः । पार्श्वतश्चतुरङ्गुलपरिमाणाः पूर्वपश्चिमरेखायाः । तावदन्तराः । चतुरङ्गुलपरिमाणमेव समन्तरं व्यवधानं कर्तव्यं पंक्तिरूपेण निर्मितानां । तावदवखाताः । चतुरङ्गुलपरिमाणा एव तां[1] अधः खननीयाः ॥

ब्र० । दक्षिणतः कर्षूः प्रत्यगपवर्गाः खनेत्तिस्रः पितॄणां तिस्रो मातॄणाम् ॥

आ० । षट्कर्षूः कुर्यादित्यादि । केचित्प्रकृतं निपरणं कृत्वा षट्कर्षूः कुर्वन्ति । तदानीमेतेनैव धर्मेण निपरणान्तं कृत्वेत्यवक्ष्यत् । तस्मादित्थं निपरणं कुर्यात् । षट्कर्षूः कुर्यात् । किंभूताः । दक्षिणायताः । दक्षिणतो दीर्घाः । पूर्वापराः । पूर्वादारभ्यापरसंस्थानाः । प्रादेशमात्रीः । चतुरङ्गुलास्ताराः[2] । तावदन्तराः । चतुरङ्गुलव्यवहिताः । तावच्चाधस्तात्खाताः[3] ॥

तासां दक्षिणतः खराः ॥ ४ ॥

दे० । कर्तव्या इति शेषः । खराः वर्त्तिकास्थलानि । ते तासां कर्षूणां दक्षिणेषु भागेषु षट्कर्तव्याः ॥

ब्र० । तासां "दक्षिणतस्तयैव मृदा षट् खराः ॥

तेष्वग्नीन्विहृत्यावोक्ष्य कर्षूर्दक्षिणाग्रान्दर्भानास्तीर्य ॥ ५ ॥

दे० । तेषु खरेषु जानुदघ्नेष्वौपसदादुद्धृत्य विहृत्य परिस्तीर्य पर्युक्ष्य परिसमूह्य चाग्नीन् कर्षूश्चावोक्ष्यावसिच्य कर्षूषु दक्षिणाग्रान्दर्भानास्तीर्य ॥

ब्र० । तेषूद्धृतावोक्षितेषु यज्ञोपवीतयासादनाङ्गे परिसमूहनपर्युक्षणे कुर्यात् ।......षष्ठ आसादिते प्राचीनावीती कर्षूरवोक्ष्य[4] खराग्नीनां होमाङ्गे पुनश्च अप्रदक्षिणेन परिसमूहनपर्युक्षणे कुर्यात् । कर्षूषु दक्षिणाग्रान्दर्भान्समूलानास्तीर्य खरांश्च दक्षिणपश्चिमाग्रैः स्तृणाति॥

पिण्डपितृयज्ञावृता पूर्वासु तिसृषु निधाय[5] मज्जानमुपनिनीय दुग्धेनाभितः परिषिच्य ये चात्र रसाः स्युरेतद्भवद्भ्य इत्युक्त्वा

---

1. तासु C, तास्व° AT. 2. °लस्ताराः the Ms. 3. Here Ād. breaks off. 4. Emended; कर्षूस्वोक्ष्य the Bombay Ms. 5. विधाय the Mss. of Devapāla.

**तृप्यन्तु भवन्त इत्युक्त्वा ॥ ६ ॥**

दे० । उक्तस्य पिण्डपितृयज्ञस्यावृदितिकर्तव्यता । पृथिवी दर्विरित्यादिमन्त्रादिका पूर्वासु पूर्वदिग्वर्तिनीषु तिसृषु कर्षूषु त्रीन्पिण्डान् पितृपितामहप्रपितामहेभ्यो देवदत्तादिभ्यो मज्जानं च पिण्डसमीपे 'यूषलक्षणं'[1] स्थापयित्वा । सर्वतश्च सर्वपिण्डान्दुग्धेन परिषिच्य । अन्ये ऽपि ये रसवत्यां सिद्धा रसाः सन्ति तैरपि पिण्डान्सर्वतः परिषिच्य । एतदन्नं भवद्भ्यः पितृपितामहप्रपितामहेभ्यो देवदत्तादिभ्य इत्युक्त्वा तृप्यन्तु भवन्तः पितर इत्युक्त्वा ॥

ब्र० । ततः प्रणयनक्रमेणैव षट्सु अपि खराग्निषु पिण्डपितृयज्ञवत्प्रत्येकमाहुतिद्वयं हुत्वा।......ततस्तान्मज्जानमुपानिनीय दुग्धेनाभितः परिषिञ्चति ये चात्र दधिमधुघृतादयो रसाः संनिहिताः स्युः । ततः पितॄन्ध्यायन्नेतद्भवद्भ्यः तृप्यन्तु भवन्त इति कर्षूरीक्षमाणो वदेत् ॥

**एवमपरासु स्त्रीभ्यो दद्यान्मज्जवर्जं सुरां तूपनिनीय मन्थेनाभितः परिषिच्य ये चात्र रसाः स्युरेतद्भवतीभ्य इत्युक्त्वा तृप्यन्तु भवत्य इत्युक्त्वा ॥ ७ ॥**

दे० । एवमपरास्वपरदिग्भागवर्तिनीषु तिसृष्ववशिष्टासु कर्षूषु स्त्रीभ्यो मात्रादिभ्यस्त्रीन्पिण्डान्पृथिवी दर्विरित्यादिप्रकारेण दद्यात् । एतावांस्तु विशेषः । मज्जानं तत्र नोपनिनयेत् । मज्जास्थाने सुरां विकृतयवरसरूपामुपनिनयेत् । मन्थेन चोदकाविलीकृतसक्तुरूपेण सर्वतः परिषिञ्चेत् । अन्ये ऽपि ये रसास्तैरपि सिञ्चेत् । एतद्भवतीभ्यो मात्रादिभ्य इत्युक्त्वा तृप्यन्तु भवत्यो मातर इत्यादि चोक्त्वा ॥

ब्र० । ततः किंचिन्मात्रशेषं चरुशेषमुद्धृत्यैवमपरासु कर्षूषु मातृभ्यः पिण्डनिधानं । ....... ततस्तान्मज्जवर्जं सुरामुपनिनीय गोदुग्धे सक्तूनोप्येषीकया प्रसव्यमनारभ्योपमथ्य तेन परिषिञ्चति ये चात्र मधुघृतादयो रसास्तैश्च ॥

**प्रेष्याः पिण्डान्भक्षयेयुर्निषादा वाग्नौ वाप्सु वा ब्राह्मणान्वा भोजयेत् । ८ ॥ ६५ ॥ ( ५।११ )**

1. पेशीलक्षणं D.

दे० । पिण्डानां प्रतिपत्तिं कुर्यात्कथं । प्रेष्या भृत्या अनुज्ञाताः सन्तः पिण्डान्भक्षयेयुः । धीवरा वा सुराशब्दार्थदूषितत्वात् अप्स्वग्नौ वा क्षेप्तव्याः । ब्राह्मणं वा भोजयेत्पिण्डान् ये सुरार्थशब्दसंस्पर्शेन न दूषिताः प्रथमास्त्रयः ॥

ब्र० । सुरालिप्तान्पिण्डान्प्रेष्या निषादा वाश्नीरन् अप्सु वा क्षिपेत् । इतरानग्नौ वा प्रास्येद्ब्राह्मणं वा भोजयेत् ॥

---

अथ प्रथमश्राद्धस्याष्टकया धर्मो व्याख्यातः ॥ १ ॥

दे० । अथशब्द आनन्तर्यार्थः । यदुक्तं । शुचिर्भूत्वा पितृभ्यो दद्यादिति[1]। तत्राग्न्युत्पत्त्यनन्तरमेव प्रथमश्राद्धं क्रमप्राप्तमपि नोक्तं विकृतेः प्रकृतितन्त्रापेक्षितया प्रकृतितन्त्रपरिज्ञानं विना दुरधिगमत्वात् । अष्टकाविकाराणि हि सर्वश्राद्धानि । प्रकृतौ ज्ञातायां ज्ञायन्त इत्यष्टकानन्तरं शुचिभूतस्यैकादशे ऽहनि प्रथमश्राद्धमधुनारोप्यते । किं च प्रथमश्राद्धस्यामङ्गलप्रायत्वेन लोके प्रसिद्धत्वात्प्रचुरपुरुषार्थाभिहिताग्न्याधानान्तरमभिधानं[3] न कृतमित्यप्याहुः । अत एवाथशब्दो मङ्गलमपि तन्त्रेण द्योतयतीति वर्णयन्ति । अतश्चायमर्थः । अथ प्रकृत्यधिगत्यनन्तरं प्राप्तप्रस्तावस्य प्रथमश्राद्धाभिधानस्य सामान्येनाष्टकया धर्मो व्याख्यात इतिकर्तव्यता विध्यन्त इत्येवंभावः प्रकार इति पर्यायः ॥

ब्र० । प्रेतैकोद्दिष्टेष्वृतूनां पत्न्यृतस्य धाम देवा ग्रावाण इत्यष्टकास्थालीपाकहोमः[4] ॥

एकवन्मन्त्रानूहेत् ॥ २ ॥

दे० । एकोद्दिष्टत्वादतिदेशप्राप्तस्य मन्त्रगतस्य पितृनाम्नो बहुवचनान्तस्यैकवचनमूहेत् । एकेनार्थेन तुल्यमेकवत् ॥

पेश्यः प्रातरित्यानियमः ॥ ३ ॥

दे० । अष्टकायाः पशुपक्षे च पेश्यो ऽवदानस्थाने चोदिताः[5] ता अतिदेशेन प्रथमश्राद्धे विकल्प्यमानपश्वङ्गकल्पित्वेन प्राप्ताः सत्यो

---

1. Cp. XLVI. 1. 2. Thus D and C; °श्राद्धस्य मङ्गलप्रयत्न AT. 3. ? °पुरुषार्थाभि (हि) ता° ATC, °पुरुषार्थाभिधानग्न्या° D. 4. Cp. LXI. 1-5. 5. Cp. LXII. 3.

नियमभावविशिष्टभावी[1] उच्यन्ते पेशीषु स्वेच्छा कर्तव्या न वेति। पेशीद्वारेण च पशौ स्वेच्छोक्तिरियं विकल्पपक्षे हि पाक्षिको नियमः स्यात्। एवं प्रकृतावन्वष्टक्यं प्रातरुक्तं। तस्याप्यतिदेशेन नियमप्राप्तस्यानियम उच्यते॥

ब्र०। यद्यपि शुरुकस्तस्य[2] विधे नियमस्त्वङ्गारश्रृतानां पेशीनां स्थाल्यामेवावदानानि प्रकृतिवदाश्रपयेच्छ्रोऽन्वष्टक्यस्य चानियमः॥

तिस्रः कर्षूः कुर्यात्त्रिष्वग्निषु कृत्वैकैकं पिण्डमुत्सृज्य प्रथमामन्नस्य पूरयेद्दधिमध्विति द्वितीयां घृतमांसमिति तृतीयाम्॥ ४॥

दे०। त्रिष्वग्निषु यथाप्राप्तहोमान्कृत्वा पित्रुद्देशेनैकस्यां कर्ष्वामेकैकं पिण्डं क्षिपेत्पृथिवी दर्विरिति मन्त्रेणावृत्तिभाजा। तत्र प्रथमामन्नस्य नानाप्रकारस्य हविष्यस्य भागेन पूरयेत्। द्वितीयां तु दधिमध्विति पूरयेत्। निपातानामनेकार्थत्वात्। इतिशब्दः करणशक्तिप्रधानोऽधिकरणशक्तिप्रधानान्तः शब्दवत् दधिमधुभ्यां द्वितीयां पूरयेदित्यर्थः। घृतमांसमिति तृतीयां पूरयेदिति समानं पूर्वेण। वपाक्षीरादिपरिषेकोऽपि प्रकृतिवत्॥

एवं मासि मासि॥ ५॥

दे०। प्रतिमासमेषैव कर्तव्यता। नवश्राद्धानामित्यतिदेशार्थः॥

एवं सांवत्सरिकः॥ ६॥

दे०। संवत्सरे भवं सांवत्सरिकं। सपिण्डीकरणमप्येवमित्यतिदेशार्थः॥

चतुर्थं पिण्डमुत्सृज्य त्रैधं कृत्वा पिण्डेषु निदध्यात्संसृजतु त्वा पृथिवी वायुरग्निः प्रजापतिः संसृज्यध्वं पूर्वेभिः पितृभिः सह। समाना वः सं वो मनांसीति॥ ७॥

दे०। सपिण्डीकरणे विशेषमाह। चतुर्थं ...... निदध्यात्। अर्थात्पितृपितामहप्रपितामहानां दद्यात्। भागनिधाने मन्त्रानाह। संसृजत्वित्यनेन सहान्तेन समाना व इत्यादिना च त्रयेण प्रक्षिपेदेकैकत्रेत्यर्थः। तत्र शाखान्तरीया प्रथमा पठिता॥

---

1. नियमभावेन विशि० AT. 2. ? Could be read also शुदुकुस्तस्य.

एवमुदकानि ॥ ८ ॥ ६६ ॥ ( ५।१२. )

दे० । पाद्यान्यर्घ्याणि च चतुर्थे पात्रे पिण्डवत्पितृपात्रेषु अनेनैव मन्त्रत्रयेण निदध्यादित्यतिदेशार्थः । ······पश्चादावाहनाद्युपस्थानान्तं कृत्वान्वष्टक्यादिवत् ॥

दे० । उक्त सर्वश्राद्धानामष्टकाविकारत्वं[1] । तत्र यानि पञ्चम्यादौ पुत्रकामादिश्राद्धानि लोके प्रसिद्धानि यानि च नान्दीमुखप्रभृतीनि विवाहोपनयनतीर्थयात्राविशेषप्राप्तिविद्वद्द्विजोत्तमगृहगमनादिनिमित्तानि विश्वजिदधिकरणनयकल्पितस्वर्गफलानि तानि प्रथमाष्टकाप्रकाराणि । यानि तु भणितनिमित्तान्येवानन्तरकथितस्वरूपाणि मेदोघृतकुल्यादिपितृतर्पणाद्यर्थवादबलेन मांसविशेषसाध्यानि तानि द्वितीयमांसाष्टकाविकारित्वेन गम्यन्ते यानि तु पिण्डान्वाहार्यशब्दवाच्यान्यमावस्याद्वादशीसंक्रान्त्यादिनिमित्तकान्युक्तनयेन स्वर्गफलकानि नित्यानि च होमाग्निष्टोमनिदर्शनेन तानि च मांसाष्टकाविकारित्वेन[2] प्रतीयन्ते । तदेतद्भेदत्रयं क्रमेण भणति ॥

अथेतरस्य श्राद्धस्याष्टकया धर्मो व्याख्यातः ॥ १ ॥

दे० । अथेत्यानन्तर्यार्थः प्रकृतिज्ञानपूर्वकस्य[3] विकृतिज्ञाने निदर्शितत्वात् । इतरस्य नान्दीमुखादेरमांससाध्यत्वपक्षो धर्म इतिकर्तव्यतादिपर्यायोऽष्टकया प्रथमया व्याख्यातः । प्रथमाष्टकाप्रकारत्वमेव व्यङ्क्तुमाह।

ब्र० । अथेतरस्येति पशुश्राद्धामावस्याश्राद्ध वर्जयित्वा प्रेतश्राद्धसपिण्डीकरणनान्दीमुखाब्दिकस्य कर्तव्यस्य ॥ अथेतरस्य श्राद्धस्येत्युक्तव्यतिरिक्तसांवत्सरिकादभ्युदयिकादिश्राद्धादीनां प्रथमपञ्चकविधिः[4] ॥

---

1. ०ष्टकान्वितत्वं D. 2. We expect rather अपूपाष्टका० 3. प्रतिकृति० ACT. 4. In Br. (the Bombay Ms.; the Lahore Ms. is of no help) all is confused. Here comes first chapter LXVII without any commentary and numbered 16 (read 66). Then follows the text of chapter LXVIII, numbered 67. Then a part of the bhāṣya given by me under LXVII. 1 (first part). Then comes the text of chapter LXIX, without any number. Then immediately the bhāṣya given by me under LXVII. 2, then the one under LXIX. 1, then the one given under LXVIII. 1 and lastly the one given byme under LXVII. 1 (second half).

प्रथमेन पञ्चकेन[1] ॥ २ ॥

दे० । आज्यमिति स्थितमेव ॥

ब्र० । अत्राभिहोमविहितपञ्चकनिर्देशात्तत्संबन्धस्थालीपाकहोम उपलक्ष्यते ॥

आवाहनादि सिद्धं संप्रदानम् ॥ ३ ॥

दे० । संप्रदानमपि सिद्धमविचारितमेव । सर्वप्रकृतिविकृतिसाधारणत्वात् ॥

पूर्वेण निपरणं व्याख्यातम् ॥ ४ ॥ ६७ ॥ ( ५ । १३ )

दे० । पूर्वेणाष्टकाप्रकारेण कर्षूकरणादिनेति विशेषेण व्याख्यातं कथितं पूर्वैः ॥

---

अथेतरस्य पशुश्राद्धस्याष्टकया धर्मो व्याख्यातः ॥ १ ॥

ब्र० । श्रोत्रिये गृहमागते मधुपर्कवत्तूष्णीं पशुं संज्ञप्य यच्छ्राद्धं तत्पशुश्राद्धम् ॥

मध्यमेन पञ्चकेन ॥ २ ॥

दे० । प्रधानहोम इति शेषः ॥

आवाहनादि सिद्धं संप्रदानम् ॥ ३ ॥

दे० । गतार्थम् ॥

पूर्वेण निपरणं व्याख्यातम्[2] ॥ ४ ॥ ६८ ॥ ( ५।१४ )

---

अथेतरस्य मासिमासिश्राद्धस्याष्टकया धर्मो व्याख्यातः ॥ १ ॥

दे० । इतरस्य प्रथममासव्यतिरिक्तस्यामावस्यादेस्तृतीयाष्टकया धर्मो व्याख्यातः[3] । [4]अस्य पिण्डान्वाहार्यमिति संज्ञा सिद्धा[5] । पिण्डदानानन्तरं ब्राह्मणभोजनाहरणात्प्रधानादन्वार्थिकीयं[6] संज्ञा ॥

ब्र० । मासिमासिश्राद्धस्यामावस्यानुपलक्ष्यते ॥

उत्तमेन पञ्चकेन ॥ २ ॥

---

1. Cp. LXI. 6. 2. DC give now as bhāṣya the passage which TA subjoin on LXIX. 1. 3. This passage in TA only 4. Cp. note on LXVIII. 4. 5. ०प्रसिद्धा DC. 6. ०न्वर्थिकी DC.

दे० । तृतीयेन पञ्चकेनाज्यभागान्ते स्थालीपाकस्य होमः तृतीयाष्टकावत्।

आवाहनादि सिद्धं संप्रदानम्[1] ॥ ३ ॥

पूर्वेण निपरणं व्याख्यातम् ॥ ४ ॥ ६९ ॥ ( ५ । १५ )

दे० । गतार्थं ॥ अन्ये तु पूर्वेण निपरणमिति सर्वत्रेदमर्थं व्याचक्षते । पूर्वेण पृथिवी दर्विरिति न तूत्तराभ्यामिति नियमार्थमेतत् । इदं त्वखिलार्यजनानुष्ठानविपरीतं । किं चैकोद्दिष्टत्वं चापतेदेवं । उक्तं हि । वसवः पितरो भूम्यधिपतयो रुद्राः पितामहा अन्तरिक्षपतयः आदित्याः प्रपितामहास्तृतीयलोकाधिपतयः । तत्र पितृप्रकाशासमर्थत्वात्प्रथममन्त्रस्य मन्त्रलिङ्गबलेनैकोद्दिष्टत्वं प्राप्नोति । मुनिवचनबलेन त्वन्यत्र विनियोगो नास्ति क्षीणत्वादर्थापत्तेरन्यार्थत्वेन वचनस्योपपन्नत्वात् ॥

---

दे० । एवं शुचिर्भूतः पितृभ्यो दद्यादिति[2] प्रसक्तानुप्रसक्तं निर्वर्त्य फाल्गुनीपाकयज्ञमवशिष्टमाह ॥

अथ फाल्गुन्यां तैलापूपस्य जुहोति ॥ १ ॥

दे० । फाल्गुनीमासे पौर्णमासी । तस्यां तैलपक्वेन गोधूमादिमयेनापूपेन होमः कर्तव्यः । अथशब्दः श्राद्धानन्तरतां भणन् श्राद्धप्रकरणनिवृत्तिस्वस्त्ययनभविष्यत्त्वद्योतनद्वारेण मङ्गलमभिद्योतयति । अधुना जुहोतिशब्दश्रवणात्पाकयज्ञतन्त्राभावशङ्कानिवारणाय यज्ञप्रतीतये देवतामन्त्रं चापूपहोमं च दर्शयति यज्ञहोमान्तत्वोपदर्शनाय।

अर्यमा देवता ये ते अर्यमन्निति ॥ २ ॥

दे० । अपूपमन्त्रे अर्यमा देवतासंबन्धश्च यवस्य शरीरं । ये ते अर्यमन्निति मन्त्रः ॥

अथेन्द्राण्याः ॥ ३ ॥

दे० । जुहोतीत्यनुषज्यते । द्रव्यमन्त्रौ त्वत्र वक्ष्येते प्रकरणसमाप्तौ[3] ॥

प्रससाहिष इति तुण्डिलस्य जुहोति ॥ ४ ॥

दे० । तुण्डो[4] विद्यते यस्य स तुण्डिलो मध्योन्नतः पुरोडाशाकृतिस्त-

---

1. This sūtra has fallen out in the Mss. of Devapāla.
2 Cp. XLVI. 1. 3. Cp. sūtra 6. 4. Thus T; तुण्डा ACD.

ण्डुलपिष्टादिपक्वः किलाटलोपिकादिर्वा[1] तेन[1] प्रससाहिष इति मन्त्रेण जुहोति ॥

**गोलका रुद्रदेवत्याः[2] ॥ ५ ॥**

दे०। गोलका यवमयव्रीहिमय गोला इति प्राकृतभाषया प्रसिद्धाः। ते रुद्रदैवत्याः कर्तव्याः। मन्त्रो हि रुद्रलिङ्गको[3] ऽर्थात् ॥

**अदितिर्द्यौरदितिरिन्द्राणी[4] पत्येत्योदनयोः शाकपललाक्तयोः[5] ॥ ६ । ७० ॥ ( ५।१६ )**

दे०। पादद्वयोद्धृतावोदनौ। तयोरेकं शाकेनाभ्यज्य मिश्रीकृत्यादितिर्द्यौरदितिरन्तरिक्षमित्याहुतिं जुहुयात्। द्वितीयं तु पललेन[6] तिलतण्डुलचूर्णनिर्मितेनाभ्यज्येन्द्राण्याः पूर्वोक्ताया[7] इन्द्राणी पत्येत्यादिमन्त्रेण जुहुयात्। तदेवं पञ्च हवींषि ॥

ब्र०। अर्यमा इन्द्राणी इन्द्रः रुद्रः अदितिरिति पञ्च फाल्गुन्यदेवताः। पात्रप्रयोगकाले तैलशाकपललाक्तं तिलानुपसादयेत्। अर्यम्णे जुष्टं निर्वपामीति तैलापूपस्य व्रीहीणां निर्वपेत्। इन्द्राण्यै जुष्टमिति स्थालीपाकस्य। इन्द्राय जुष्टमिति तुण्डिलस्य। रुद्राय जुष्टमिति गोलकत्रयस्य। अदित्यै जुष्टमिति स्थालीपाकस्य। एवमेव प्रोक्षणं। तिलानां पिष्टानामग्नौ तप्तानां निष्पीडितानां पृथक् तैलं कृत्वा तैलेन हविरासादनकाले ऽपूपमक्त्वासादयेत्। पललेनेन्द्राण्याश्चरुं कल्केनादित्या[8] आज्यभागान्ते[8] हुते ये ते अर्यमन्निति तैलापूपस्यावदाय प्रधानाहुतिः। इन्द्राणी पत्येति पललाक्तस्य चरोः। प्रससाहिष इति तुण्डिलस्य। मृडा नो रुद्रेति समवदाय गोलकानां।

---

1. ०पिकादिना वा तेन AT. 2. ०दैवत्याः the Mss. of Devapāla, ०देवता Br. (continuous text) and a Bombay ʳcaka. 3. The Mantra for the oblation to Rudra is not mentioned ? according to Dev. and Br. it is Kāth. XL. 11 : 145. 15-16. 4. The first mantra, not in the printed text of the Kāthaka, belongs probably to the Katha-āranyaka ; it is identical with Taitt. ār. I. 13.2 (6). 5. ०पलाला० the Mss. of Devapāla. 6. पलालेन D only. 7. Cp. sūtra 2. 8. कल्पेनादित्याज्य० the Bombay Ms., कल्पेनादित्यः आज्य० the Lahore Ms.

अदितिर्द्यौरिति कल्काकस्य[1] चरोः । ततः तन्त्रसमाप्तिः ॥

गावो भग इति द्वाभ्यां गोयज्ञस्य ॥ १ ॥

दे० । गवां प्रसूतानां स्वास्थ्यं पुनः सगर्भग्रहणाद्यर्था[2] वसन्ते यज्ञो गोयज्ञः । अश्रुतद्रव्येषु चाज्यं हविः चतुर्गृहीतं यवव्रीहिनिर्मितं वा यवकादिदृष्टार्थेषु लोके स्वस्त्ययनेषु प्रवृत्त्यर्थत्वात्प्रायेण च स्रुवेण होम उपनयनादौ दृष्टार्थानि श्रावण्यष्टकादिप्रभृतीन्यदृष्टार्थान्यपि । अत्रैवावसरे प्रथमफलकर्मार्थं स्वस्त्ययनमाह ॥

ब्र० । गोयज्ञे गोमङ्गल्यमिति कश्मीरेषु प्रसिद्धः । गोयज्ञे च हलानि योजयन्ति प्रथमे वसन्ते हिमापगमे । यज्ञशब्दो ऽत्र तन्त्रं ॥ गोमङ्गलयज्ञादीनां रात्रियज्ञादीनां सर्वेषामाज्यधान्या[3] एवावद्दायाज्यप्रधानाहुतीर्यथोक्तं जुहुयात् । अत्र सर्वत्राज्यं हविः । आज्यभागान्ते चतुर्गृहीतेन प्रचारं । गावो भगो न ता अर्वेति गोमङ्गले प्रधानम् ॥

सीरा युञ्जन्तीति तिसृभिरायोजनीयस्य ॥ २ ॥

दे० । जुहुयात्सीरा युञ्जन्तीत्यादिभिस्तिसृभिर्ऋग्भिः ॥

प्रथमोत्तमाभ्यां युनक्ति ॥ ३ ॥

दे० । सीरा युञ्जन्तीति या प्रथमा गायत्री पूषा युनक्त्विति च योत्तमा द्विपदी त्रिष्टुप् ताभ्यां यागानन्तरं[4] बलीवर्दान्युनक्ति यूपैः संयोजयन्तीत्यर्थः । युनक्तियोक्त्रवर्तीतिशब्दौ बलीवर्दानां यूपसंयोजने रूढौ ॥

मध्यमया फालम्[5] ॥ ४ ॥

दे० । युनक्त सीरेति मध्यमया फालं[5] युनक्ति ॥

शुनं सुफाला इति प्रदक्षिणं द्वे कृषति[6] ॥ ५ ॥

दे० । शुनं सुफालेत्यादिकयर्चा प्रदक्षिणं कृत्वा द्वे सीते कृषन्ति ॥

1. Thus the Bombay Ms., कल्पाक्त० the Lahore Ms. 2. सद्गर्भ० ACT. 3. ०धान्यामेवा० the Ms. 4. यागान्तरं or युगान्तरं the Mss. 5. The Mss. of Dev. consequently फलम् । 6. The Mss. of Devapāla have the plural.

लाङ्गलं पवीरवमित्यपरे द्वे ॥ ६ ॥

दे० । लाङ्गलं पवीरवमित्यादिकयर्चान्ये द्वे सीते कृषन्ति ॥

ब्र० । सीरा युञ्जन्ति युनक्त सीरा पूषा युनक्त्विति तिसृभिः । तदेव द्विपदा[1] संतृतीया[1] । प्रधानाहुतिषु हुतासु सीरा युञ्जन्ति पूषा युनक्त्वित्यनड्वाहौ युनक्ति । युनक्त सीरेति फालं । कर्षणं यथोक्तवत् । कर्मणि समाप्ते घृतेन सीतेति[2] चतुर्गृहीतेनाज्यस्य प्रधानं । ततस्तन्त्रसमाप्तिः । एतद्धीमङ्गलम् ॥

घृतेन सीतेति सीतायज्ञस्य ॥ ७ ॥

दे० । घृतेन सीतेति मन्त्रेण सीतायज्ञस्य जुहुयात् । कार्त्तिकशुक्लद्वादश्यां यवबीजवपनोपक्रमाय[3] सीतायज्ञस्यार्येषु प्रसिद्धो[4] यत्र वीरणादिमयो सीता कुमारी देवता विरच्यते ॥

या ओषधय इति बीजवपनीयस्य[5] ॥ ८ ॥

दे० । बीजवपनं यस्य स बीजवपनीयो यज्ञः । तस्य या ओषधय इति जुहुयात् । सीतायज्ञानन्तरमेवैष यज्ञस्ततो यवबीजवपनम् ॥

ब्र० । या ओषधय इति यदा बीजानि उप्यन्ते ॥

विमुच्यध्वमिति विमोचनीयस्य ॥ ९ ॥

दे० । अत्रापि प्रयोजनार्थीयस्तद्धितः । विमुच्यध्वमित्यादिना विमोचनीययज्ञस्य जुहुयात् । सर्वबीजवपनसमाप्तावयं यज्ञः स्वस्तये ॥

ब्र० । विमुच्यध्वमिति यदा बलीवर्दा हले[6] समाप्ते विमुच्यन्ते ॥

त्रातारमिन्द्रमिति द्वे पर्ययणस्य ॥ १० ॥

दे० । पर्ययणं खलप्राप्तानां व्रीहीणां क्षोदनं बलीवर्दचरणैर्गाहनं[7] यत्र गाहिकेति प्रसिद्धिरार्याणां तत्प्रयोजनस्य यज्ञस्य त्रातारमिन्द्रमि-

---

1. Thus the Ms. 2. Br., then, combines the first words of sūtra 7 with the preceding. So is also his interpunction in the continuous text : अपरे द्वे । घृतेन सीतेति । सीरायज्ञस्य (sic !) या ओष० etc. 3. ०वपनक्रमाय D, ०वपनोक्रमाय AT, वपनोपनोक्रमाय C. 4. ०सिद्धेः D. 5. ०वापनी० Br. 6. Thus the Lahore Ms. and a Tuebingen Ms. ; फले the Bombay Ms. 7. ०गाहनं CD.

त्यादिना द्वयेन जुहुयात् । पर्याणे द्वे साधने इति तु सूत्रान्वयः ॥

ब्र० । त्रातारमिन्द्रमुग्रो जंज्ञ इति च धान्यादिक्षोदनारम्भे ॥

**एवं प्रथमोद्वपनस्य ॥ ११ ॥**

दे० । प्रथमोद्वपनं व्रीह्यादीनां नवनिष्पन्नमाद्यं वापं । तत्प्रयोजनस्य त्रातारमिति द्वे साधनभूते ऋचौ ॥

ब्र० । एताभ्यामेव प्रथमं खलादिधान्यं गृहं वा कोष्ठागारं नीयते । काष्ठागाराद्वा यदा वसन्त आनीयते ॥

**उदुत्तमं मुमुग्ध्युदुत्तमं[1] वरुणेति वरुणयज्ञस्य[2] ॥ १२ ॥**

दे० । तडाकप्रतिष्ठाकाले ऽयं वरुणयज्ञः ॥

ब्र० । उदुत्तममिति द्वाभ्यां[3] नवखाततडाकादौ ॥

**सं वरत्रान्हिरण्यकोशमवटमिति[4] कूपयज्ञस्य ॥ १३ ॥**

दे० । नवकूपप्रतिष्ठाकाले ऽयम् ॥

ब्र० । इति नवकूपप्रतिष्ठायाम् ॥

**प्र वां दंसांसीति मण्डपानाम् ॥ १४ ॥**

दे० । तमेव यज्ञं कृत्वा कूपसंस्कारार्थं[5] मण्डपानां । यवमयानां हुत्वा शेषं भक्षयेदिति शेष इति माथुरप्रभृतयः[6] । अन्ये मण्डपानामिति पाठं दृष्ट्वा व्याचक्षते किल मण्डमुदकमुच्यते । मण्डं पिबतीति मण्डपः सेतुर्नद्यादितरणोपायः । तस्य प्रतिष्ठार्थं यज्ञं कुर्यात् । प्र वां दंसांसीति मन्त्रेण होमान्तं । कश्मीरेषु च एतद्बाहुल्येन कर्म दृष्टमित्यादित्यदर्शनेन व्याख्यातम् ॥

ब्र० । मण्डपं सेतुप्रतिष्ठादिकं प्रासादिकं । प्र वां दंसांस्यतारिष्मेति[7] चित्रमण्डपादिषु प्रतिष्ठायां । सेतुप्रतिष्ठायामित्यादित्यदर्शनभाष्यम् ॥

---

1. The first three words not in Br. 2. वरुणयज्ञेष्टः the Mss. of Devapāla. 3. Possibly this was the reading of the sūtra text. 4. The second mantra, not in our Kāṭhaka texts, corresponds, exc. The first word, with RS. X. 101.6 and TS. IV. 2.5.0 5. ०र्थे CD. 6. माधुर० D.
7. Acc. to Br., then, not only Kāṭh. XVII. 18 : 262. 10-11 but also 262. 12-13 is to be used. The Mantrabhāṣya of Devapāla is incomplete here.

देवेभ्यो वनस्पत इति वनस्पतियज्ञस्य ॥ १५ ॥

दे० । फलिततरुरोपणकाले ऽयम् ॥

ब्र० । इति वृक्षरोपणे ॥

वनस्पते वीड्वङ्ग इति रथयज्ञस्य ॥ १६ ॥

दे० । नवनिर्मितरथारोहणार्थम् ॥

ब्र० । नवरथारोहणे ॥

धन्वना गा इति द्वाभ्यां धनुर्यज्ञस्य ॥ १७ ॥

दे० । धनुषो ग्रहणकाले मासवेधकाले[1] चायं क्षत्रियाणां प्रथमकल्पेन । एवं कृष्यकर्म[2] वैश्यानामुक्तमिति[2] ज्ञेयं । तेषामेव[3] कृषिवृत्तिस्मरणात् । अनुकल्पेन त्वन्यत्र यदुक्तम् ॥

ब्र० । इति नवधनुर्ग्रहणे ॥

रात्री व्यख्यदिति द्वाभ्यां रात्रियज्ञस्य[4] ॥१८॥७१॥ (५।१७)

दे० । जागरणसमये ऽयम् ॥

ब्र० । रात्री व्यख्यदुप ते गा इति रात्रिजागरणादौ ॥

---

समुपहते ऽद्भुते वा शान्त्यै शमीं शमुकं[5] शाम्यवाकमश्वत्थप्लक्षन्यग्रोधोदुम्बरं[6] दूर्वां च प्राचीनप्रसूतानि षड् दर्भपिञ्जूलानि सुमनसश्चापामार्गं सर्वबीजानि सीतालोष्टं गोमयं हिरण्यं वल्मीकवपां चाद्भिः संसृजति सं वः सृजामीति द्वाभ्याम् ॥ १ ॥

दे० । सम्यगुपघातः समुपहतं । व्याधिदुर्भिक्षशत्रूदयादिभिः[7] । तस्मिन्वेत्यद्भुते वा । अद्भुतमकालोत्थमुल्काधूमकेतुगगनाङ्गनपटहरणाकर्णदुःस्वप्नाद्यनिष्टसूचकं[8] तस्मिंश्च सति । शान्त्यै शान्त्यर्थं । शम्यादीनि षोडश द्रव्याणि मृत्पिण्डात्मके ऽद्भिः सह संसृजति[9] मिश्रयतीत्यर्थः । वानस्पत्यान्यन्तर्भावयतीत्यर्थः[10] । पूर्वमेवोद्धृत्य

---

1. ? Thus ACT; सामवेध० D. 2. कृषिकर्म AT; ०कर्माणि वैश्यानामुक्तानीति D. 3. ०वं D. 4. राम्री० Br. 5. Thus Br. (and cp. his bhāṣya), a Tuebingen and a Bombay ṛcaka, and of the Mss. of Devapāla D; शम्बुकं AT and perhaps C. 6. शम्य० D. 7. ०दयादिः CD. 8. ०निष्टके सूचके ATC. 9. सं om. AT. 10. Thus D; वानस्पत्यानि तु दर्भानीत्यर्थः ACT.

प्रोक्षणकूर्चं[1] कुर्यात्सदाचारात् । सीता हलविलेखिता भूमिः । तस्या लोष्टो मृत्पिण्डः । संमिश्रणं तु सं वः सृजामीति द्वाभ्यां मन्त्राभ्याम् ॥

ब्र० । अथ समुपहते देशविभ्रमादौ पुरुषकृते ऽद्भुते वा साक्षिस्पन्दनदुःस्वप्नदर्शनादौ दुष्टसूचक अध्यात्मिके दोष उपलक्षिते तन्निरासार्थं शमीशमुकादीन्षोडश सं वः सृजामि सं या व इत्यद्भिः संसृज्य ॥

या ओषधय इत्यनुवाकेन संयूयापास्मदेत्विति चतसृभिः संप्रोक्षणम्[2] ॥ २ ॥

दे० । संयौत्यालोडयतीत्यर्थः[3] । अपास्मदेत्वित्यादिभिश्चतसृभिर्ऋग्भिराज्यभागान्ते[4] संप्रोक्षणं तावदेकं कुर्यात् । अथ कस्येदं प्रोक्षणं । ऋषभाजपुरुषरथगृहक्षेत्रप्रभृतेः[5] तथा सदाचारात् । पारं पर्यवशायात आचारो वेदपूर्वकः प्रमाणं वेदसंयोगभाजामाचमनादिवत् ॥

ब्र० । या ओषधय इत्यनुवाकेन संयौति । ततः शम्यादिभिरपामार्गान्तैः कूर्चं कृत्वा[6] तेनापास्मदेत्विति चतसृभिर्गृहाणि बहिरन्तश्च संप्रोक्षति । बाहिस्तन्त्रिकमाज्यमुत्पाद्य होमस्यात्र नाम्नानात्त्रिकादिभिः स्रुवेणाहुतिचतुर्विंशतिः । दुरिष्टोपशान्त्यर्थं । यथाशक्ति ब्राह्मणभोजनम् ॥

देवाद्भुतेषु यन्नो भयमित्यष्टर्चेन[7] स्थालीपाकस्य जुहोति यद्देवा देवहेडनमिति तिसृभिर्भद्रं कर्णेभिरिति चतसृभिरैन्द्राग्नं वर्मेति च[8] ।३

दे० । देवाद्भुतेषु देवाश्रयेषु चन्द्रार्कादिदोषेषु भयनिमित्तेषु सत्सु

---

1. कूर्चे D. 2. The last half of the sutra proper is omitted by Devapāla. 3. संयोत्या० the Mss. 4. Emended; ०दिभिस्तिसृभि० the Mss., but in his Mantrabhāṣya Dev.: अपास्मदेत्विति प्रोक्षणे चतस्रः । 5. Emended; ऋष्वभाजन० C, ऋषिभाजन० AT; इष्टभाजन० D, but above the line: अश्वभाजन० । 6. Thus a Tuebingen Ms.; the Bombay copy runs: ततो दर्भपिञ्जूलैः शम्यादिभिश्च संप्रोक्षणे वा प्रयोगं प्रस्तरमिव कृत्वा । 7. See Appendix VIII. 8. The words ऐन्द्राग्नं वर्मेति च not given by Devapāla, but he explains this mantra in the bhāṣya following on this chapters.

यन्नो भयमित्यष्टाभिर्ऋग्भिः स्थालीपाकेनाष्टाहुतीर्जुहुयात्। तदनन्तरं यद्देवा इत्यादिभिस्तिसृभिस्तिस्र आहुतीः स्थालीपाकस्य जुहुयात्। तदनन्तरं भद्रं कर्णेभिरिति चतस्र अन्या आहुतीः स्थालीपाकस्य जुहुयात् ॥

ब्रा० । देवाद्भुतेषु यन्नो भयमित्यष्टर्चेनिर्दिष्टेषु दिव्यान्तरिक्षभौमेषु च लक्षितेषु भयेष्वलक्षितेष्वग्नये यविष्ठायाग्नये वायवे सूर्याय विश्वेभ्यो देवेभ्य इन्द्राग्निभ्यामिति चरुं निरुप्याज्यभागान्तं हुत्वा ॥

उक्तं संप्रोक्षणम् ॥ ४ ॥

दे० । अस्मिन्नेवावसरे पूर्वोक्तमेव अपास्मदेत्विति चतसृभिः संप्रोक्षणं द्वितीयं कुर्यात् ॥

ब्रा० । पूर्ववत्संभारमिश्रीकरणादिसंप्रोक्षणान्तं कृत्वा यन्नो भयमित्यादिभिर्यथोक्ताभिः षोडशभिर्ऋग्भिः षोडश प्रधानाहुतीर्जुहुयात् । ततो ऽपास्मदेत्विति चतसृभिर्द्वितीयं संप्रोक्षणम् ॥

धूर्भिरुपधूर्भिश्च हुत्वा पुनः संप्रोक्षणम् ॥ ५ ॥ ७२ ॥ (५।१८)

दे० । स्थालीपाकानन्तरमृतुतिथ्यादयः प्रागुक्तनयेन स्विष्टकृदङ्गभूताः कर्तव्याः । ततो धुर उपधुरश्चान्या आहुतयः कार्याः । ततः स्विष्टकृदादितन्त्रं[1] समापनीयं । ततस्तृतीयं प्रोक्षणं कर्तव्यमिति तात्पर्यतो ज्ञेयम ॥

ब्रा० । अग्निर्मूर्धेति चतसृभिरुप प्रयन्त्विति द्वाभ्यां कदा चन स्तरीरसीति च द्वाभ्यां[2] स्रुवेण हुत्वा तृतीयं पूर्ववत्संप्रोक्षणं । तत ऋतुतिथियागादितन्त्रसमाप्तिः ॥

---

राका होलाके[3] ॥ १ ॥

दे० । होला कर्मविशेषः सौभाग्याय स्त्रीणां प्रातरनुष्ठीयते । तत्र होलाके राका देवता । मन्त्रलिङ्गात् । यास्ते राके सुमतय इत्यादि[4] । अन्ये तु व्याचक्षते । एतत्सौभाग्यार्थं कर्म क्वचिद्देशे राकाशब्देन प्रसिद्धं

---

1. Thus D only; oमन्त्रं the other Mss.　2. Cp. note on XLVII. 13.　3. Or (Cp. Devapāla on this sūtra) राकाहोलाके as a Dvandva; but Br. in his continuous text has राका होलाके इन्द्राणीo ।　4. Kāṭh. XIII. 16: 199.19–20.

क्वचिद्धोलाकशब्देन तथा देशविशेषे क्वचित्सुखकुमारी होलेत्युच्यते। अतः शब्दभेदादौपाधिकं[1] भेदमाश्रित्य राका च होलाका चेति राकाहोलाके द्वन्द्वः । वक्ष्याम इत्यध्याहारः । राकाहोलाकापर्यायं[2] कुमारीसुखार्थं यज्ञं विवाहोपक्रमप्रसिद्धानुष्ठानं वक्ष्याम इत्यर्थः । तमेवाह ॥

ब्र० । होलाको मध्यदेशे प्रसिद्धो यथा काश्मीरेष्वाश्वयुज्यां[3] रात्रौ गृहद्वारोपान्तेष्वग्निप्रज्वालनं । तत्राज्यभागान्तं हुत्वा यास्ते राक इति चतुर्गृहीतेन प्रधानाहुतिः । ततस्तन्त्रसमाप्तिः ॥

इन्द्राणीमासु नारिष्विति कुमारीणां यज्ञं यजेत् ॥ २ ॥

दे० । कुमारीणां सुखार्थं प्रसाधनस्थाने आज्यभागान्ते यज्ञं यजेदृत्विक् चतुर्गृहीतेनाज्येनेन्द्राणीमित्यादिमन्त्रेण । अत ऊर्ध्वमृतुतिथ्यादि समानम् ॥

ब्र० । इन्द्राणीमासु नारिष्विति कन्यासंस्कारे पूर्तौ विधिः ॥

देवता[4] अप्रज्ञायमाना[4] आग्नेय्या[4] यजेद्वैश्वदेव्या वा ॥ ३ ॥

दे० । इदानीं शास्त्रान्ते प्रकीर्णं यदवशिष्टं तदाह । देवता....०देव्या वा । यत्र कर्मणि देवताविशेषो न प्रज्ञायते मन्त्रब्राह्मणवाक्यशेषेभ्यो बहुदेवतानाम श्रुतिसंमोहितत्वेन तत्राग्नेय्या अग्निदेवतकया क्वचिद्वैश्वदेव्या वा यजेत् । व्यवस्थितविकल्पेन । यथोपनयनचूडाकरणप्रभृतिषु । आज्यभागान्ते प्रधानस्थाने ऽयमुपदेशः ॥

ब्र० । तत्र भुवो यज्ञस्येत्याग्नेय्या[5] ये के च ज्मेति[6] वैश्वदेव्या वा प्रधानं यथा सीमन्तोन्नयनचूडाकर्मादिषु ॥

स्वस्तिपुण्येष्वनादेशे त्रिकाः ॥ ४ ॥

दे० । स्वस्त्यविनाशः । तदर्थानि स्वस्त्ययनानि स्वस्तिशब्देनोच्यन्ते । पुण्यानि पावनानि संस्कारकर्माणि गर्भाधानान्नप्राशनप्रभृतीनि । तेषु देवताविशेषस्य यत्रानादेशो ऽनुद्देशस्तत्र त्रिकाः प्रधानस्थाने

---

1. ०भेदौपाग्निकं C and first hand of D. 2. ०होलाकपर्यायं AT. 3. Thus the Lahore Ms.; कश्मी० the Bombay Ms. 4. देवताप्रज्ञायमानाग्नेय्या Br. and thus also Ād. on XXXI. 6, XL. 16, but a nom. sing. would he incomprehensible. 5. Kāth. XVI. 15: 239. 8-9. 6. Kāth. XIII. 15: 197. 15-16.

कर्तव्याः । तद्द्योताश्च प्रधानेव[1] ताः[1] त्रिकाः । पुनश्चत्वारोऽनुवाकस्था बार्हस्पत्ययाम्यरौद्रवारुणास्तत्र श्रिय इत्यनुवाके[2] पठिताः[3]॥

ब्र० । स्वस्तिपुण्यकर्मसु यत्र नाम्नातो होमस्तत्र बाहिस्तन्त्रकमाज्यमुत्पाद्य स्रुवेण त्रिकादिभिराहुतिचतुर्विंशतिर्यथा स्नातकव्रते ॥

महाव्याहृतयोऽष्टर्चं चात्र कल्पयति[4] । अग्निर्मूर्धेति चतस्र उपप्रयन्तो अध्वरमिति द्वे कदा चन स्तरीरसीति द्वे[5] धुरश्चोपधुरश्चोपधुरश्च ॥ ५ ॥ ७३ ॥ ( ५ । १९ )

दे० । स्पष्टोऽष्टानां विभागः । धुरश्चोपधुरश्च प्रधानस्थाने यष्टव्याः । शास्त्रान्ते मङ्गलार्थं धुरामुपधुरामभ्यासः । शास्त्रतदर्थप्रतिज्ञानार्थानुष्ठानावृत्तिर्हि परमं मङ्गलं तदन्त्या द्योत्यते । शास्त्रान्तेऽपि मङ्गलोपसंहार इष्यते ॥

ब्र० । ओं३ भूः स्वाहा । ओं३ भुवः स्वाहा । ओं३ स्वः स्वाहा । ओं३ भूर्भुवः स्वः स्वाहा ॥ अग्निर्मूर्धेत्याद्या धुरश्चोपधुरश्चाष्टावृचः पाकयज्ञमन्त्रेषु

---

1. Thus ATC (in D this passage is missing). Read perhaps: प्रधानदेवताः 2. Kāth. XL. 11; D reads: इत्यनुवाकद्वये. 3. Kāth. l.c. 145. 3-8 is the bārhaspatya trika, ib. 9-14 the yāmya, 145. 15-146.4 is the raudra, and 146. 5-12 (with the exception of 9-10, which does not belong to the text) is the vāruṇa trika. 4. This part of the sūtra proper is not found in the Mss. of Devapāla, but has been replaced by the bhāṣya 5. These eight verses (this aṣṭarca) comprise the dhūrs and upadhūrs, cp. rem. on XLVII. 13.

पठिताः । उपप्रयन्तो अध्वरमिति द्वे कदा चन स्तरीरसीति द्वे एताश्चतस्र उपघुरः ॥

इति लौगाक्षिसूत्रे गृह्यपञ्चिकायां पञ्चमोऽध्यायः[1] ॥

---

1. The colophon of Br. is, according to the Bombay Ms.: इति श्रीकाठके लौगाक्षिसूत्रे चरकशाखायं गृह्यपञ्चिकायां पञ्चमो ऽध्यायः समाप्तः (in the Lahore Ms. the words चरकशाखायां and समाप्तः are not found.) ॥ समाप्तेयं गृह्यपद्धतिर्मन्त्रसहिताकृतिर्माधवाध्वर्यतनय-ब्राह्मणबलस्य ॥ The syllable ध्व in the name माधवाध्वर्य is not certain, the Lahore Ms. seems to have श्व; for the rest, even the name of the author is not wholly certain, it could also be read ब्राह्मणाबलस्य The Ms. of Lahore is mutilated here.— The colophon of Devapāla is: इति चारायणीयमन्त्रभाष्यं भट्टहरि-पालपुत्रदेवपालकृतं संपूर्णं समाप्तम् ॥

There is a third Ms. of काठकगृह्यपाञ्जिका or काठकगृह्यपद्धतिः. It is numbered 618 in the " A Descriptive catalogue of Sanskrit Manuscripts in the Government collection under the care of the Asiatic Society of Bengal." Vol. II. Vedic Mss. 1923. The last colophon of this Ms. as reproduced in the catalogue runs thus:—इति श्रीकाठके लौगाक्षिसूत्रे चरकशाखायां गृह्यपाञ्जिकायां पञ्चमोध्यायः । समाप्तेयं गृह्यपद्धतिर्मन्त्रसहिता कृतिर्माधवा-ध्वर्य्युतनयब्र(ा)ह्मबलस्य ॥ Bhagavad Datta.

I. The mantras of II. 1.

इदमहमग्नौ समिधमभ्यादधाम्यग्ने सर्वव्रतो भवामि ॥
इदमहमग्नौ समिधमाहार्षं बृहते जातवेदसे ।
स मे श्रद्धां च मेधां च दीर्घं चायुर्जातवेदाः प्रयच्छतु ॥

II. The Jaya-formulae of XXV. 13[2].

आकूतं चाकूतिश्चाधीतं चाधीतिश्च विज्ञातं च विज्ञातिश्च चित्तं च चित्तिश्च नाम च क्रतुश्च दर्शश्च पौर्णमासश्च । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तेभिर्वाजं वाजयन्तो जयेम तेनेमा विश्वाः पृतना अभिष्याम स्वाहा ॥

III. The Ādhipatya-formulae of XXV. 15[3].

अग्निर्भूतानामधिपतिः स मावतु तस्मै स्वाहा । यमः पृथिव्या अधिपतिः स मावतु तस्मै स्वाहा । वायुरन्तरिक्षस्याधिपतिः स मा० । सूर्यो दिवोऽधिपतिः स मा० । चन्द्रमा नक्षत्राणामधिपतिः स मा० । विष्णुर्दिशामधिपतिः स मा० । पूषा पथीनामधिपतिः स मा० । त्वष्टा रूपाणामधिपतिः स मा० । सविता प्रसवानामधिपतिः स मा० । इन्द्रो ज्येष्ठानामधिपतिः स मा० । मित्रः सत्यानामधिपतिः स मा० । वरुणो धर्माणामधिपतिः स मा० । रुद्रः पशूनामधिपतिः स मा० । बृहस्पतिर्ब्रह्मणामधिपतिः स मा० ।

---

1. This Appendix gives the mantras, that must belong, on the one side, to the not-extant parts of the Kāthaka saṃhitā, brāhmana and āranyaka, and, on the other side, to the Mantrādhyāya, belonging to the Gṛhyasūtra, see Introduction page VI. 2. Cp. TS. III. 4.4.—The introductory words of Devapāla : येन कर्मणेर्त्सेत् ( कर्मणेच्छेत् the Mss., but cp. TS. III. 4. 6.1 ) तत्र जयाञ्जुहुयादितीहापि विनियोगः prove, that the Jaya-formulae have made part of the Kāṭhaka and that a brāhmana on them must have existed. 3. Cp. TS. III. 4.5, but here they are called abhyātāna ( also in the Kauśikasūtra 137.42). The abhyātāna formulae according to the Kaṭhas are contained in Kāṭh. XXXVIII. 12.

ब्राह्मणो वाचामधिपतिः स मा० । सोम ओषधीनामधिपतिः स मा० । समुद्रः स्रवत्यानामधिपतिः स मा० । अन्नं साम्राज्यानामधिपतिस्तन्मावतु[1] तस्मै स्वाहा । गायत्री छन्दसामधिपत्नी सा मावतु तस्यै स्वाहा । मरुतो गणानामधिपतयस्ते मावन्तु तेभ्यः स्वाहा । पितरः पितामहाः परेऽवरेभ्यस्ते नः पान्तु[2] ते नोऽवन्त्वस्मिन्ब्रह्मण्यस्मिन्कर्मण्यस्मिन्क्षेत्रेऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां स्वाहा ॥

IV. The Sarasvatyanuvāka of XXV. 23[3]

Introductory remarks of Devapāla:

अत्रानुवाके ब्राह्मण आर्षे । अनुष्टुप् छन्दः । गन्धर्वाप्सरोराजर्षिप्रभृतीनां चरितं ह्यन्तरेण स्वरेण[4] याभिर्गीयते ता गाथा इत्युक्तं । इह च सर्ववाग्रूपा सरस्वती तद्रूपेण च वधूरुपचर्यते ।

---

1. Thus the Mss. of Devapāla; Br. °ज्यानामधिपति तन्मावतु ।
2. Devapāla explains : अवरेभ्यो निकटेभ्यः पितृपितामहादिभ्यो ये परे सर्गसमुद्भवा हिरण्यगर्भमनुप्रभृतयः पितरस्ते नः पान्तु ॥ 3. The text of this anuvāka is based on the following Mss :
   1. ATCD : the four copies of Devapāla with the bhāṣya.
   2. Br. : the text of Br. according to the Lahore and Bombay Mss.
   3. T[1] : a Tuebingen Ms., see Schroeder, die Tuebingen Kaṭha Hss. page 7. ; in śāradā writing, *accented* in the way which is usual with the Kaṭhas.
   4. P[1] : a Parisian Ms. (a socalled ṛcaka), No. 786, equally *accented.*
   5. P[2] : another Parisian Ms., No. 230.
   6. Brl. : the Berlin ṛcaka.
   7. St. : the Stein ṛcaka (or rather Karmakāṇḍapaddhati) from Oxford.
   8. Bo[1] : a Bombay ṛcaka.
   9. Bo[2] : another Bombay ṛcaka.
4. Thus T; सवर्णेन ACD.

मनोमेघप्रभृतिश्च[1] गन्धर्वः । तद्रूपो वरः स्तुत्यर्थमुच्यते ॥

सरस्वति प्रेदमव सुभगे वाजिनीवति ।

यां त्वा विश्वस्य भूतस्य प्रगायाम्यस्याग्रतः[2] ॥ १ ॥

दे० । सरस्वति इति । प्रेत्युपसर्गः । अवेत्याख्यातेन संबध्यते । हे सरस्वति सा त्वमिदं कर्म प्राव गोपाय । सुभगे सर्वहितकारिणि । वाजिनीवति वाजिन्यः फलपाकान्ता[3] ओषधयः तद्वती । स्तनयित्नुरूपा[4] वाग्रूपा[4] सरस्वती वृष्ट्यादिद्वारेण सा का । यां त्वामहं प्रागायामि शब्दयामि स्तौमि । अग्रास्थितां[5] शब्दब्रह्मविवर्तत्वात्[6] सारस्य[7] सरस्वत्याश्च शब्दरूपत्वात्[8] ॥

याग्रे सर्वं समभवद्यस्यां[9] विश्वमिदं जगत् ।

तामद्य वाचं गास्यामि या स्त्रीणामुत्तमं मनः ॥ २ ॥

दे० । याग्रे सर्वं । तां चाद्यास्मिन्नहनि वाचं सरस्वतीं गास्यामि शब्दयिष्यामि । या स्त्रीणामुत्तमं मनः । मानसं प्रकाशनं । प्रकाशात्मिका हि वाक् प्रकाशरूपं च हृदयं चेतः । या चाग्रे प्रथमं सर्गादौ । सर्वं समभवत्[10] । सर्वं[11] विवर्तरूपा[11] बभूव । यस्यां चेदं वर्तमानं विश्वं सर्वं जगदधिश्रितम् ॥

ये इह पूर्वे जना[12] आसन्पूर्वे[12] पूर्वतरेभ्यः ।

मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा देवेभ्य आतपत् ॥ ३ ॥

दे० । य इह पूर्वे जनाः । ये इह जगति पूर्वे जना अभूवन् तत्पूर्वतरेभ्योऽपि च पूर्वे तेभ्योऽपि पुरा गन्धर्वो मूर्धन्वान्नाम्नासीत् । किं बहुना । देवेभ्योऽपि पुरा[13] य[13] आतपत् । प्रकाशितवान्ब्रह्म-

---

1. घनोमेघ० T. 2. The correct reading is प्रगायामस्याग्रतः see Pāraskara gṛhs. I. 6.2. 3. फलानांकान्ता CT. 4. ०यित्नु-वाग्रूपा TAC. 5. अग्रेस्थि० CT. 6. Thus CT; ०विवर्तत्वात् D, वि(वृ)त्तित्वात् A. 7. सरस TAC. 8. षट् च रूप० C, षट् चद्रूप० T. 9. ०भवद्य० D and P². 10. ०भवत् D. 11. सर्वोविवरू० D. 12. The correct reading is preserved in the Mantrapāṭha 1.3.4: जनासः ( instead of जना आसन् ). 13. यः पुरा ACT.

रूप इत्यर्थः । गां सरस्वतीं धारयति वृणोति वा गन्धर्वः । सरस्वती वागात्मिकेयमधिगीयमाना[1] कन्या प्रजापतिरूपो गन्धर्वो वर इति प्ररोचनार्थः ॥

य एति सर्वतः प्राग्भ्यो दिग्भ्योऽधि पवमानः ।
मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा देवेभ्य आतपत् ॥ ४ ॥

दे० । य एति । यो वायुरूपः सन्सर्वत एति आगच्छति । अधिपवमानः आधिक्येन पवित्रीकुर्वन् । अतश्च प्रागादिभ्यो दिग्भ्य आगच्छतः प्राच्यादिभेदेन[2] व्यपदेशभेदात्[3] भिन्ना वायवो भवन्ति । तेभ्योऽपि देवेभ्यो वायुभ्य[4] पुरा पूर्वं मूर्धन्वान्गन्धर्व आतपत् ॥

स भगवो न मरिष्यस्यहं चेदसि[6] भेषजम् ।
मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा देवेभ्य आतपत् ॥ ५ ॥

दे० । स भगवः । यः पूर्वोत्पन्नः सन् । जीवात्मानमाह । प्राणाख्यो वायुः । हे भगवः । भगवन् । जीव । स त्वं मरणधर्मापि न मरिष्यसि । यावदहमस्मि भेषजं तिष्ठामि । इन्द्रियैः सह । तेभ्योऽपि देवेभ्यो[7] द्योतनादिकर्मकेभ्यः प्राणेन्द्रियेभ्यः पुरा मूर्धन्वान्गन्धर्व आतपत् ॥

हिरण्यवर्णो वैरुम्पः[8] स त्वा मन्मनसं करोतु ।
यद्राजायाति समितिं समुद्रमिव सौभ्रवः ॥ ६ ॥

---

1. ०मध्यगीयमाना DCT. 2. प्राच्यादिदेशभे० TC. 3. ०भेदा A. 4. om. D ( reading देवेभ्यः ). 5. सु Br. (both copies) and St. 6. चिदसि T[1], with accent on चि०, only, and Bo[1]. 7. Only in A. 8. वैरम्पः D (and this is the reading, accepted by Devapāla in his bhāṣya). All the other Mss. read either वैरुम्पः or वैडम्पः; in śāradā writing the sign for रु and ड is nearly the same; the Lahore Ms., a Devanāgarī copy of a śāradā original, has वैरुम्पः ।

दे० । हिरण्यवर्णः । स प्रकृतो गन्धर्वः[1] प्रजापतिः[1] । हे वधु त्वां मन्मनसं करोत्विति वर आचष्ट । मदेकाचित्तां पतिव्रतां करोत्वित्यर्थः । कीदृशः सः । हिरण्यवर्णः । भासुरः[2] प्रकाशैकरूपः । वैरम्पः[3] । वीरस्य[4] योगिनो[5] मोहवैरिव्यपोहनसमर्थस्य[5] कर्म वैरं । तत्पाति रक्षतीति वैरम्पः[6] । सौभ्रवः । शोभनभ्रूमध्यसंयमात्प्रतीतो[7] योगिनां । राजा । राजमानः । समितिं । संग्राममिव । समुद्रमिमं संसारदुःखभारं तारयतीति शेषः[8] ॥

---

1. Thus also A originally, but changed into गन्धर्वपतिः 2. भास्वरः A. 3. Thus ACT, वैरम्पः D. 4. वीर्यस्य ACT. 5. ? D: योगिनः ( योगवैरिव्यपोहनेत्यन्यप्रश्ने ) मोहनसमर्थस्य; A: योगिनो मोहवैरिव्यमोहनसमर्थस्य; TC : योगिनोमोहवैचित्यमोहनसमर्थस्य. 6. AD वैरम्पः, TC वैरुम्पः —In the Mantrapāṭha (1. 3.6) the name is ऐरम्म, in the Pāraskara gṛhyasūtra (1. 4.15). वैकर्णः । 7. Instead of संयमात् C: सांयमात्, T: सायमात्, A has oसंयमातीतो । 8. Now follows in Devapāla's bhāṣya what seems to be either the commentary of a lost verse (and to this seemingly also D points, where the verse numbered by me 7, is reckoned as 8), or a second explanation of verse 4. To me it is probable, that Devapāla knew two recensions of this verse 4. In no other text there is the least trace of this (lost ?) verse. The bhāṣya then of Dev. runs: य एति । प्राग्भ्यो ( A: सर्वप्राग्भ्यो ) दिश इति । पञ्चम्याः स्थाने व्यत्ययेन प्रथमा । केचित्प्राग्भ्यो विशेष (प्राग्भ्यो दिश AD) इति पठन्ति । तत्र छान्दसो वर्णव्यत्ययः । पुराणतरच्छान्दसास्तु पठन्ति प्रागादिभ्यो ऽधि पवमान इति । अर्थं च व्याचक्षते । प्राक् प्रथमं वाभिधीयते ( वातिधी० D ) वा गच्छति । प्राग्वा ( A ins. सर्वाभ्यः, TC: सन्नान्यः ) सर्वतो दिग्भ्यः पवमान एतीति ( पवमानवतीति TC ) विच्छिन्नसंप्रदायेषु ( किञ्चनसंपातयेषु TC ) शताध्ययनवर्तिषु मन्त्रेषु अपौरुषेयेषु यथेच्छं परिकल्पनात् ( oनं A ) । पाठानां गत्यभावेन यथादृष्टि ( CT om. यथा ) प्रदर्शनं क्रियमाणं सतां मध्येनोपालभ्यं ( सतामन्यैनोपालभ्यं D ) कथंचन ॥

न वातस्याभिवायते[1] नोद्वातस्याभिधीयते[2] ।
न वातस्याधुरं[3] वहतो[4] नोद्वातस्यापमीयते[5] ॥ ७ ॥

दे०। न वातस्य। वातस्याभ्यग्रे[6] नान्येनापि देवेन वायते गम्यते। न वातस्याभिधीयते। न च वातस्याभिमुख्येन केनापि धीयते। आगन्तुं मान्यते। वातस्य धुरं वहतः[7]। पृथिव्यादिकं धारयतो विमानादिकं च प्रेरयतः। नान्येन केनाप्यपमीयते सह गम्यते। माहात्म्यमाचार्यते। इदिति निपातः सहार्थे। पुनः पुनर्वातशब्दोदीरणमतिशयार्थं[8]। अहो रमणीयाहो रमणीयेत्यादिवत्। केचित्तु पठन्ति। नोद्वातस्याद्ध[9] धीयते। न उत् वातस्य आत् ह धीयते। उकारो वर्णागमः[10]। हशब्द इतिहासे। न वातस्य[11] धुरं वहतो अन्येनाधीयते। सहायेनावगम्यते ॥

आसद्यो[11] हरितो[12] रथः सौश्रवः सुहिरण्ययः ।
तं वात इद्भ्रजीयत्युद्वातो दृढया धुरा ॥ ८ ॥

दे०। आ सत्यः। आ इत्युपसर्गः। भ्रजीयतीत्यनेनाख्यातेन संबध्यते। सत्यः सत्यप्रधानः। हरितो हरितवर्णः। आदित्यरथः। अथवा सत्यप्रधानश्च ते हरयोऽश्वाः ते विद्यन्ते यस्य स सत्यहरित

1. ०वायति Bo[2] only; T[1] accentuates वातस्याभि०, P[1] वातस्याभिवा० 2. Instead of नोद् (thus T[1], St. Bo[1], P[1], the Lahore copy of Br. and A) D has नेद्, CT न and the Bombay copy of Br. नो· 3. This is the reading of the plurality of the Mss.; वातस्य धुरं D. 4. वहतु A, Br., Bo[1]. 5. Instead of नोद् D नेद् only (and cp. Devapāla: इत्). 6. Thus D; वातस्यापि अग्रे CT, वातस्याप्यग्रे A. 7. वहतुः TC. 8. ०रणमितिसहार्थः TC. 9. ०स्याद्धि TC. 10. ०गमस्थः D. 11. This is the reading (not given, however, by Devapāla) of the plurality of the Mss.; the accentuation is wrong; आ सत्यो D only (आसत्य the Bombay copy of Br., with which cp. Devapāla also!). The meaning seems to be: "the car must be ascended." 12. Thus the accents according to T[1] and P[1].

इति[1] वत्वेर्थीयस्तकारः[1] । सौभ्रवः । भ्रूसंयमेन तीक्ष्णदृष्टि-
भिरपि द्रष्टुं शक्यः । हिरण्ययः हिरण्मयः तैजसः । तमुद्वातः
ऊर्ध्वगतिर्वातः । आध्रजीयति[2] गमयति । विवर्तस्य प्रजापति-
रूपस्य वायोर्माहात्म्यवर्णनं । कया ध्रजीयति[3] उद्वात्[4] दृढया
धुरा । ऊर्ध्वं उत्कृष्टो वात एव दृढा धूः तया ॥

तवैव राजन्दुन्दुभयस्तव दुन्दुभिरानकः ।
तव वातोद्वाता अश्वौ तव चैत्ररथं वनम् ॥ ९ ॥

दे० । तवैव राजन् । मूर्धन्वान्गन्धर्व उच्यते । हे मूर्धन्वन्राजन् ।
तवैव दुन्दुभयो जयोद्घोषणवाद्यविशेषाः उत्कृष्टवादाः शब्दादयः
प्रकाशनपराः । तथा आनकः । पटहाख्योऽपि दुन्दुभिविशेषः ।
तथैव वातस्तिर्यग्गतिः पवनः । उद्वातः ऊर्ध्वगतिर्वातोऽधः
पातित्वादुद्वातः[5] । तौ तथाश्वौ । अथवा देहगतः प्राणो वायु-
रुद्वातः । अपानो वातः । तौ वातोद्वातौ प्राणापानौ शरीरस्य
रथस्याश्वाविव सर्वप्राणिनां । चैत्ररथाख्यं वनं देवोद्यानं तवैव
सर्वविभवात्त्वत्स्वामिक[6] इत्यर्थः ॥

ते शुक्रं शक्रस्याविन्दन्पराञ्चं[7] निहितं गुहा ।
मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा जत्रुभ्य आतृदः[8] ॥ १० ॥

दे० । ते शुक्रं । ते देवाः वाय्वादयः शक्रस्य शक्रस्य सर्वकारणस्य
प्रजापतेः शुक्रं सारमविन्दन् ज्ञातवन्तः । पराञ्चं परोक्षं गुहायां
हृदये विदुषां निहितं । अविद्याभेदप्रपञ्चो वा गुहा । यद्वा ।
शक्रस्येन्द्रस्य शुक्रं प्रजननमुदकलक्षणं । गुहायां रश्मिसंघाते
निहितं परोक्षं ज्ञातवन्तः । ते देवास्तेभ्यो देवेभ्यः पुरा पूर्वं

---

1 Thus D, इति इत्यर्थीय० ACT  2 ०यते C ०याते A  3 ०यते D  4 Thus the four Mss  5 Thus D, ०पाति-ताद्वान्ता ACT  6 ०भवात्वत्स्वा० D ०भवास्त्वस्वा० CT, ०भवस्वत्का-मिक A.  7. शुक्रस्या० St, Bo[1] and the four Mss of Devapāla in the text part, P[1] has : ते शुक्रस्याशक्रस्या०.  8. Cp RS VIII. 1.12.

मूर्धन्वान्गन्धर्वः अविन्दत् । किमन्वधि ज्ञातवान् । जत्रुभ्य आतृदः । आ जर्त्रुभ्यः आतृदः[1] । जत्रूणि संश्लेषणानि[2] सर्वाविकारणानि[3] । सृपितृदोः कसुन्[4] । तृदः तर्दनं विनाशः । आ सृष्टेः आ[5] प्रलयात् । यदुत्पादनप्रलयसंपादनसामर्थ्यं । तन्मूर्धन्वानविन्दत्सकलमिच्छतः ॥

हिरण्यवर्णं सुवृतं[6] शोभमानं कन्याया[7] हस्तं परिगृह्य पुण्यम् ।
सा पुत्रकामा सुभगाय भर्त्रे भवेद्वशेयं[8] गिरिवत्स्थिराय ।११।

दे० । हिरण्यः । एष कश्मीरेष्वेव संप्रति पठ्यते । वर आचष्टे कन्याया हस्तं गृहीत्वा । अहं वशीयान्भव भूयासं । भवेति व्यत्ययेन मध्यमपुरुषः । अथवान्तरात्माभिधीयते । कन्याया हस्तं गृहीत्वा । हे अन्तरात्मन्वशीयान्भव । गिरिवत्स्थिराय । पर्वतवत्स्थैर्याय भूयासमहं । स्थिरायुरित्यन्ये पठन्ति । पर्वतवद्वशीयान्स्थिरायुरहं[9] भूयासमिति स्पष्टस्तत्रार्थः । वधूं प्रत्याह । हे वधु त्वमपि या मयोदुह्यसे[10] सा भर्त्रे भर्त्रर्थं पुत्रकामा भव । कामनं कामः । पुत्रार्थं एव कामो रतिर्यस्याः सा पुत्रकामा । किमर्थं । सुभगाय । सौभाग्याय । पुत्रवती हि सती लोके श्लाघ्या भवति न तु रत्येकफला । भर्तृविशेषणं वा सुभगायेति । हस्तं । विशिनष्टि । हिरण्यवर्णं सुवर्णकान्ति । सुवृतं[11] कङ्कणाद्याभरणैः सुपूर्णं[12] । अत एव शोभमानं । मन्त्रवत्परिग्रहात्पुण्यं पवित्रम् ॥

---

1. Read तद: ? 2. संश्लेषाणि D. 3. सर्वकार० CAT. 4. Pāṇini III. 4.17. 5. This word to be cancelled? 6. सुभृतं D and so in Brl. above the line. 7. Read perhaps two words कन्या या; but then भवेत् is to be taken as third p. optative. 8. This is the reading of A. T . P [1]. Bo[1]. Bo[2]; भवेद्वशीयं TC; and Br. भव वशीयान् D (this reading is presupposed by the bhāṣya). Probably the words are: भव इद् वशा इयम् । T[1] accents: भवेद्वशेयं, P[1]: भवेद्वशेयं । 9. ०स्थिरायाहं ACT. 10. मयोद्वह्यसे DA. 11. सुभृतं D again. 12. संपूर्णं D.

वैरूम्पे[1] मुनिपर्वते गिरौ हरितसंकाशे ।
संकल्परमणे ऽमरा उभौ समनसौ[2] चरावः ॥ १२ ॥

दे० । वैरम्पे[3] । सम्यकसंसारभाजनकृतपरिहितश्रौतस्मार्तविहितप्रतिषिद्धकर्मकलापदम्पतिपरलोकस्वर्गफलोपभोगवर्णनमेतत्[4] । वर आह । हे वधु वैरम्पाख्ये[5] मुनिजनसेविते पर्वते हरितसंकाशे सुवर्णमये मेराविति यावत् । संकल्पमात्रेण सर्वाभिलषितसत्फलप्राप्तिर्यत्र तत्र संकल्परमणे। अमरौ अमरणधर्मकौ। देवौ भूत्वोभावपि सुमनसौ[6] प्रसन्नचित्तौ चरावः । संचरिष्यावः । पुरुषायुषे पूर्णे ॥

आणीव रथवेष्टसि[7] वने वारिवर्षण्ये[8] ।
वसुका[9] सूर्यवर्चसिनी वशिनी मन्मना भूयाः ॥ १३ ॥

दे० । आणीव । आणी ईषा रथकाष्ठिका । हे वधु त्वमाणीव रथवेष्टसि रथव्यापिनी यथा रथव्यभिचारिणी तथा मयि भूयाः । पवित्राशब्द[10] उपमायां । तथा वने मेघे वारिवर्षण्या[11] विद्युल्लता यथा[12]

1. Thus, or वैडम्पे (cp. vs. 6) nearly all Mss.; वैरम्पे D and Br. 2. सुमनसौ of the Mss. of Devapāla D only, and the Lahore copy of Br. 3. Here C only वैरूम्पे or वैडम्पे 4. Thus D; instead of कलापदम्पति A: फलापति, TC: फलास्पदंपतिं. 5. Thus D, CT वैरूम्पा० or वैडम्पा०; A हे वरम्पाख्ये. 6. Thus (सु०) all four. 7. Thus most of the Mss.; रथेवेष्टसि DCT; रथेविष्टसि Bo[2]. 8. Thus T[1], St, P[1], Brl, Bo[1]. ०वर्षण्या and the Mss. of Devapāla; ०वर्पण्या the Bombay Ms., ०वार्षिण्या the Lahore Ms. of Br. 9. वसुगा D and Brl. (above the line), all the other Mss. वसुका; Devapāla presupposes वसुगा. Moreover, instead of this word all the Mss., exc. CTD, read here अप्सराः (see vs. 13). The two copies of Br. omit the last half of vs. 13. and the first of 14. 10. ? Thus D; पवित्रां च शब्द A; ०त्रंचशब्द TC; read: इवशब्द ? 11. ०वार्षिण्यो CT, ०वार्षिण्या A. 12. Not in TC.

अव्यभिचारिणी मेघं विना न[1] दृश्यते तथा त्वं मयि भूयाः । वारि वर्षत् पतत् नयत्यनुमापयतीति वारिवर्षण्या[2] तडित् । अप्सराश्च सेत्याहुः[3] । वसूनि धनानि गच्छतीति वसुगा[4] । धनवती भूया इत्यर्थः । तथा च सूर्यवर्चसिनी तेजस्विनी भूयाः । वशिनी च ईशाना । मन्मनाश्च मयि दत्तचित्ता । पतिव्रता भूया[5] इत्यर्थः[6] ॥

यासां उपरि तिष्ठति[7] वने वारिवर्षण्ये[8] ।
अप्सराः[9] सूर्यवर्चसिनी वशिनी मन्मना भूयाः ॥ १४ ॥

दे० । यासा । अथ यासौ तडिद्रूपधारिणी अप्सरा उपरि तिष्ठति सैवेह त्वं रूपान्तरेणावगतवती[10] । अहं च मेघो वारिवर्षण्याः[11] । अतश्च मयि त्वं दत्तचित्ता भूया इति समानं पूर्वेण ॥

अश्वत्थक उपरि श्येनो रमणीयतरो नाम ।
तस्मिन्ह रम्भा रमते शक्र इव परितर्क्म्यायाम्[12] ॥ १५ ॥

दे० । अश्वत्थकः । प्रशस्तो वटवृक्षोऽश्वत्थकः । तत्रोपरि श्येनः शंसनीयो रमणीयतरो नाम गन्धर्व आस्ते । तस्मिन्नप्सरा रम्भा नाम रमते क्रीडति । शक्र आदित्यः । यथा परितर्क्म्यायां[13] रात्रौ विश्राम्यति ॥

आस्यन्दमाना सुभगे निर्गिरिभ्यः सरस्वति ।

---

1. Not in A. 2. ०षिण्या ACT. 3. Thus D; अप्सरश्चेत्याहुः A; अप्सराश्च मह्याहु first hand of C corrected into ०मय्याहुः Has Devapāla here in view the following verse? 4. ०का A. 5. भूयाद् all. 6. Perhaps the original reading of the text was: वने वारि वर्षण्येव । सुगा सूर्य०. 7. तिष्ठासि A, T[1], P[1], Brl., Bo[1], Bo[2]; तिष्ठसे C.D. 8. Thus the accent here (cp. vs. 13). ०न्ये here all the Mss. 9. See note 9 on page 299. 10. अवतीर्णा instead of आगतवती CTA. 11. Thus D; ०षण्यः A, ०षिण्यः TC. 12. With the ृ Bo[1], St, T[1] P[1], and of the Mss. of Devapāla D. 13. With the ृ DAT.

मातेव दुहितृभ्यः कुल्याभ्यो विभजा वसु ॥ १६ ॥

दे० । आस्यन्दमाना । सरस्वतीं नदीं वाचं वा मध्यमामभ्यर्थयते । हे सरस्वति सुभगे । निर्गता । गिरिभ्यः स्यन्दमाना स्रवन्ती। कुल्याभ्योऽन्यनदीभ्यो[1] वसु जलमाभज विभजे मातेव दुहितृभ्यः यथा माता दुहितृभ्यो धनं पैतृकं विभजते तद्वत्। मध्यमवागपेक्षे गिरयो देहाः । कुल्या गलबिलानि ॥ इदानीं वाग्वा अनुष्टुप् वाक् सरस्वतीति श्रुत्या[2] अनुष्टुभः सरस्वतीरूपत्वप्रतिपादनं । अनुष्टुप्छन्दोरूपेण स्तोतुमाह ॥

मध्यं तच्छन्दसामाहुर्यत्रादधुर्नाम[3] परेतु[4] देवाः ।

अरुणपिशङ्गोऽश्वोऽस्य दक्षिणा यस्तद्वेद स इहागन्तुमर्हति[5] ॥१७॥

दे० । मध्यं तत् । छन्दस इति[6] व्यत्ययेनैकवचनं । छन्दसां देवानामसुराणां च[7] । तदनुष्टुपछन्दो मध्यं[8] मध्यवर्ति देवा ऋत्विज आहुः वदन्ति । यत्र छन्दसि परेति परागच्छति देवासुरच्छन्दसां मध्यमनुसरति । अनुष्टुबित्यन्वर्थकं नाम देवा अदधुः । विहितवन्तः । अत्रान्तरा मध्ये अनुष्टुब् व्यवस्थिता । तानि षोडशिनि ग्रहे विनियुक्तानि । तत्र च षोडशिनि ग्रहे अरुणपिशङ्गोऽश्वो[9] दक्षिणा मता[10] । सा[11] चेतरच्छन्दोमध्ये व्यवस्थितस्य राजमुख्यस्यास्यैव छन्दसोऽनुष्टुब्लक्षणस्य[12] भवतीति संभाव्यते । अत-

1. Thus D, न्यन्नदीभ्यो CA. 2. See Kāṭh. XII. 5: 167. 13 and X. 1: 124.14. 3. Thus Br. T¹ P¹, Bil. P², and of the Ms. of Devapāla A; ०छन्दसा T C and Bo¹, छन्दस D only. 4. Thus nearly all the Mss.; परेति the Bombay Ms. of Br. and D only. 5. The accents of यत्र and of इहागन्तु० are added by me. 6. छन्दसीति D. The text of Devapāla had, then, छन्दस instead of छन्दसाम् . 7. This seems to refer to brāhmaṇa passages of the kind of Panc. br. XII. 13.27. 8. ACT and first hand of D मध्ये. 9. DTC ins. स्य. 10. See e.g. TS. VI. 6.11.6, Jaim. br. I. 197. 11. स TCA. 12. ०ष्टुब्वक्ष्यमाणस्य TCA.

एव[1] भूतं तदनुष्टुपछन्दो यो वेद वेत्ति स इह पाणिग्रहणस्थाने आगन्तुमर्हति। ऋत्विग्जनप्रभृतिः। न तद्धि दैवासुरच्छन्दसां तु मध्यवर्तित्वमनुष्टुभ इत्थं॥

गायत्र्युष्णिगनुष्टुभो बृहतीपङ्क्तित्रिष्टुभः।
जगती चेति ज्ञेयाच्छन्दसां[2] सप्त जातयः॥

तत्रैकैकाक्षरवृद्ध्या दैव्यान्येकाक्षरादीनि सप्ताक्षरान्तानि भवन्ति। दैव्येकाक्षरा गायत्री द्व्यक्षरानुष्टुबित्यन्यादर्शने एवमादि क्रमेण। दैवी जगती। आसुरी च पञ्चदशाक्षरा जगती एकैकाक्षरहान्या च प्रातिलोम्येनान्यान्यासुराणि छन्दांसि भवन्ति। तत्र नवाक्षरा गायत्री भवति। एवं चैकाक्षरादारभ्य सप्तमाक्षरपर्यन्तान्यानुलोम्येन दैवानि छन्दांसि स्थितानि। पञ्चदशाक्षरादारभ्य प्रातिलोम्येन नवमाक्षरं यावदासुराणि। अष्टमं त्वक्षरं वर्गद्वयस्य मध्ये भवति। तेनेयमष्टाक्षरानुष्टुम्मध्ये भवतीति[3] अलमतिवैतत्येन॥

ईषीकवर्णे लेखभ्रु[4] सुभगे सुस्मिते।
मूर्धन्वांस्त्वा गन्धर्वो मामभिनियच्छतु[5] ॥१८॥

दे०। इषीकवर्णे। इषीकं शरकाण्डं। सुवर्णमित्येके। हे सुवर्णवर्णे काण्डगौरकारे वा। हे लेखभ्रु। अञ्जनलेखवद्भ्रुवौ यस्याः सा संबोध्यते। हे सुभगे प्रियदर्शने। सुस्मिते। चारुहासिनि। त्वां मूर्धन्वान्गन्धर्वो मामभि मां प्रति। नियच्छतु नियतां मदेकाधीनां करोतु। स हि कन्यास्वामीत्युक्तम्॥

उभये त्वा देवगन्धर्वाः सध्र्यञ्चो[6] विह्वयामहे।
तेषां यतरान्कामयसे[7] तानभ्येहि सरस्वति ॥१९॥

1. एवं DTC. 2. R. perhaps विज्ञेयाo. 3. Cp. the passage cited above from Panc. br. 4. oभ्रू the Lahore Ms. of Br. 5. The Ms. have no accent on the first word, nor on माम्. 6. The accent must be wrong, as the independent svarita is required. 7. oमसि the Lahore Ms. of Br., St. T[1], P[1], and of the Ms. of Devapāla A.

दे० । उभये । 'सोमक्रयणी वाक् सरस्वत्युच्यते[1] । हे सरस्वति देवा गन्धर्वाश्चोभये संभ्रयश्च । सह अश्नमाना: । सह भूत्वा । त्वां विह्वयामहे । तव विविधमाह्वानं कुर्मः । तेषामुभयेषां मध्ये यतरान्कामयसे । देवान्गन्धर्वान्वा । तानभ्येहि । आभिमुख्येन गच्छ ॥

अभ्यावर्तेऽहं देवान्गायतः कामयामहे ।

गायन्तं स्त्रियः कामयन्ते[2] न तथा[3] ब्रह्मवादिनम् ॥२०॥

दे० । अभ्यावर्ते । सरस्वत्याह । गायतो देवानहमभ्यावर्ते । आभिमुख्येन वर्ते । न तु वेदं पठतः सुरान्[4] । यतोऽहं गायत एव कामये इति वचनव्यत्ययः । तथा हि गायन्तमेव स्त्रियः कामयन्ते न तु ब्रह्मवादिनं वेदानां पाठकम् ॥

यासा उपरि पर्वत आत्मना रममाणेव ।

क्षौममृद्वी[5] ह वा असि त्वौज[6] ओजसि शृणातु[7] ॥२१॥

दे० । यासा । उपरि पर्वते गिरौ मेघे वा । विद्युद्रूपेण मध्यमवाग्रूपेण वा । आत्मना स्वेन रूपेण । रममाणेव क्रीडन्तीव तिष्ठति । सरस्वती । सा हे वधु असि भवसि त्वं । नास्ति नः संशयः । या कीदृशी । क्षौममृद्वी । दुलूगवत्कोमला । जलवृद्धिदानेन । अर्थाभिधानेन वा । ह वै इति निपातौ पादपूरणे । एवं च सति वधूं वदति वरः । यतस्त्वं सरस्वती तेन त्वया ऊतो रक्षितः सन् । अहमोजसि सति शृणोमि । आकर्णयामि । सकलं कर्तव्यं श्रुतिस्मृतिविहितं कर्तव्यतया व्यवस्यामि । सहधर्मचारिण्यास्तव लाभबल्ले-

---

1. See Kāṭh. XXIV. 1. 2. The metre could be restored by reading स्त्री कामयते; the verb is thus read by St. T[1], P[1]. 3. Accent added by me. 4. This must be a mistake for गन्धर्वान्! 5. T[1] is broken off and the accent is neither given by P[1]. 6. This is the reading of all the Mss. exc. D which has त्वोत in accordance with the Bhāṣya. 7. Thus all the Mss. (only Bo[1] शृणोतु), but the Bhāṣya presupposes a different reading.

नेत्यर्थः । केचित्तु शृणोत्विति पठन्ति । तत्राप्ययं सदात्मा शृणोत्वित्यर्थः ॥

सा सरस्वत्यनुवाकविवृतिः ॥

---

V. The five verses of XLVII. 6.

युक्तः पुरस्ताद्वह हव्यमग्नेऽग्ने विद्धि क्रियमाणं मयेदम् ।
त्वं भिषग्भेषजस्यासि गोप्ता त्वया प्रसूता गामश्वं पुरुषं सनेम[1] ॥१॥
हृदा पूतं मनसा जातवेदो विश्वान्यग्ने वयुनानि विद्वान् ।
सप्तास्यानि तव यान्यग्ने तेभ्यो जुहोमि स जुषस्व हव्यम्[2] ॥२॥
यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कर्म ।
तेभ्य एतद्भागधेयं जुहोमि ते मे तृप्ताः काममनुतर्पयन्तु[3] ॥ ३ ॥
अग्ना अग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः ।
स नः सूनुः सयुजायुजा च मा देवानां रीरिषद्भागधेयम्[4] ॥४॥
प्रजापते नहि त्वदन्य एता विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहोमस्तन्नो[5] अस्तु वयं स्याम पतयो रयीणाम्[6] ॥५॥

VI. The Kapotasūkta of LVI. 1.

देवाः कपोत.....( Rs. X. 165 1 )...चतुष्पदे[7] ॥ १ ॥
शिवः कपोत.. .( ib 2 )............... वृणक्तु ॥ २ ॥
हेतिः पक्षिणी . ( ib. 3 )...............कपोत[8] ॥३॥
यदुलूको........( ib. 4 )..... यस्य दूतः प्रहित एष एति तस्मै ...... ..मृत्यवे ॥ ४ ॥

---

1. Cp. Ath. S. V. 29.1. 2. Cp. Ath. S. IV. 39.10. 3. Cp. Sat. br. XIV. 9.3.2. 4. First half Kāth. III. 4: 25 5– Br. has at the end something more: मो अस्मभ्यं रीरिषद्भागधेयम् । 5. Thus all the copies of Devapāla and Br., the Stein and a Bombay ṛcaka जुहुमो. 6. First three quarters Kāth. XV. 8: 215. 20—21. 7. Devapāla has अर्चामकृणुवाम and explains अर्चां पूजा शान्तिमकृणुवाम कुर्मः. 8. Devapāla कृणुतां instead of कृणुते and पुरुषेभ्यो अस्तु instead of ओभ्यश्चास्तु

नुदे त्वा प्रणुदे त्वा कपोतोलूक रक्षसा सह ।
यतो न इहागहि[1] तत्र त्वा पुनर्गमयामसि ॥ ५ ॥
ऋचा कपोतं नुदत प्रणोदमिषं नयन्तः परि...(Rs. X. 165. 5)
...पतिष्ठः ॥ ६ ॥
पराङेव परावत[2] पराचीरनु संपतन् ।
अथ यमस्य त्वा गृहे आभूतं परिचाकशत्[3] ॥ ७ ॥
अग्निर्ऋषिः...(Rs. IX. 66. 20)...महागयम् ॥ ८ ॥

VII. The two Anuvākas containing the mantras for the Śrāddha ( LXIII )[4].

निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वे सुरदानवा मया ।
रक्षांसि यक्षाः सपिशाचगुह्यका हता मया यातुधानाश्च सर्वे ॥[5]
ओमासश्चर्षणीधृतो...(K. IV. 7: 33. 10-11)...सुतम् ॥[6]
विश्वे देवास आगत शृणुत म इमं हवमिदं[7] बर्हिर्निषीदत ॥
आगच्छन्तु महाभागा विश्वे देवा वरप्रदाः ।
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥[8]
शं नो देवी०...(K. XIII. 16: 198. 18-19)...स्रवन्तु नः ॥[9]
अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति ।
परापुरो निपुरो ये हरन्त्यग्निस्तांल्लोकात्प्रणुदत्वस्मात् ॥

---

1. इहागाहि Br. 2. Read probably परावत: Devapāla explains as imperative : गच्छ. 3. Cp. Atharvasaṃhitā VI. 29.3. 4. These two Chapters (their division is not apparent from the Mss.) probably belonged to the supposed Mantrādhyāya, which, as a whole, has been lost. They contain some verses and formulae, not mentioned in the chapter on Srāddhas. 5. This verse not given by Devapāla. Br. remarks : तत्र सिद्धार्थकान्भूमौ क्षिपेद्रक्षोऽपनुत्तये । 6. Br : इति विश्वान्देवानावाहयेत् । 7. As Devapāla explains : आनिषीदत, the original reading probably is : हवमेदं । 8. Only given by Br. with the remark: जपेत्तृतीयं मन्त्रं तु पौराणं पुण्यवर्धनम् । 9. Only given by Br.: शं नो देवीरिति मन्त्रेण पाद्यं चैव प्रदापयेत् ।

अपेतो यन्त्वसुरा ये पितृषदः ॥

उदीरतां .....( Rs. X. 15. 1. )......हवेषु ॥

एत पितरो मनोजवैरागच्छत पितरो मनोजवैः ।
ये निखाता ये परोप्ता गर्भाद्येऽवपेदिरे ।
सर्वांस्तानग्न आवह पितॄन्हविषे अत्तवे ॥

आगच्छत पितरो मनोजवसः पितरः पितरः शुन्धध्वम् ॥
आ मे यन्तु पितरो भागधेयं विराजाहूताः सलिलात्समुद्रात् ।
अस्मिन्यज्ञे सर्वकामांल्लभन्तामक्षीयमाणानुपजीवन्त्वेनान् ॥

अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या ।
दिवा दिग्भिरनन्ताभिरन्तरन्यान्पितॄन्दधे ॥

अन्तर्दधे ऋतुभिरहोरात्रैः ससन्धिकैः ।
अर्धमासैश्च मासैश्चान्तरन्यान्पितॄन्दधे ॥

यास्तिष्ठन्ति या धावन्ति या अद्रुग्धाः परिसस्रुषीः[1] ।
अद्भिर्विश्वस्य धर्त्रीभिरन्तरन्यान्पितॄन्दधे ॥

अमृता वागमृता आपोऽग्निर्वाचोऽमृतं तत्त्रिवृदेकधाम ताभि-
र्मत्प्रत्ताभिः स्वधया मदध्वमिहास्मभ्यं वसीयोऽस्तु देवाः ॥

यन्मे माता प्रलुलोभ यच्चचारानानुव्रतम् ।
तन्मे रेतः पिता वृङ्क्तामाभुरन्यो[2]ऽवपद्यताम् ॥

यन्मे पितामही प्रलुलोभ यच्चचारानानुव्रतम् ।
तन्मे रेतः पितामहो वृङ्क्तामाभुरन्योऽवपद्यताम् ॥

यन्मे प्रपितामही प्रलुलोभ यच्चचारानानुव्रतम् ।

---

1. ॰सुस्रुषी D only. 2. Thus here and in the following mantras the Lahore Ms. of Br. (in accordance with the Mantrapātha), the Bombay Ms. of Br. वृङ्क्तामाभूर॰. Devapāla, who reads throughout वृङ्क्तामाभिरन्यो, knows the other reading माभुरन्योऽवपद्यतामिति केचित्पठन्ति । तत्र माभुशब्द स्वधा-निष्फलादिपर्याय । मा निष्फलमागादन्यः ।

तन्मे रेतः प्रपितामहो बृहत्कामाभुरन्थोऽवपद्यताम् ॥
आदित्या रुद्रा वसवो मे सदस्यास्तेषां सख्ये स्वधया मदध्वम् ।
स्वधां वहध्वममृतस्य योनिं यात्र स्वधा पितरस्तां भजध्वम् ॥
सोमाय पितृमते स्वधा नमः । अग्नये कव्यवाहनाय स्वधा नमः ॥
ये मामकाः पितरः पार्थिवासो ये अन्तरिक्षे ये दिवि समुद्रे[1] ।
ये वाचमाप्त्वा अमृता बभूवुस्तेऽस्मिन्यज्ञे सर्वकामांल्लभन्ताम् ॥
एतद्वः पितरो भागधेयं पात्रेषु दत्तममृतं स्वधावत् ।
अक्षीयमाणमुपजीवतैनं मया प्रत्तं स्वधया मदध्वम् ॥
अयं यज्ञः परमो यः पितृणां पात्रे देयं हविरद्यमग्नेः ।
मनश्च वाक्च पितरो वः प्रदानैरश्विभ्यां प्रत्तं स्वधया मदध्वम् ॥
एषा व ऊर्गेषा वः स्वधा तामत्त च पिबत च मा च वः क्षेष्ट[2] ।
येह पितर ऊर्ग्देवता[3] तस्यै वयं ज्योग्जीवन्तो भूयास्म ॥
आमासु पक्वममृतं निविष्टं मया प्रत्तं स्वधया मदध्वम् ।
वैश्वदेवे हविषि पिन्वमानं विश्वेषु भूतेषु पृथङ्‌ निविष्टम् ॥
पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृतं जुहोम्यूर्गस्यूर्जोदा
ऊर्जं मे देह्यूर्जं मे धेह्यन्नं मे देह्यन्नं मयि धेह्यक्षितिरसि मा मे क्षेष्ठा
अमुत्रामुष्मिंल्लोक इह च ॥
इदं विष्णु०...... ( K. II. 10: 15. 9–10 ) ...पांसुरे ॥
विष्णो हव्यं[4] रक्षस्व ॥
प्राश्नन्तु भवन्तः । अमृतं जुषध्वम् । अमृतं भुञ्जीत ॥
यन्मे प्रकामादुत वाप्यकामादसंसिद्धे ब्राह्मणेऽब्राह्मणे वा ।
यत्स्कन्दति निर्ऋतिं पाथ[5] उग्रामग्निष्टत्सर्वं शुन्धतु ।
उशन्तस्तेन पितरो मदन्तां तेन पूतेन देवता मादयन्ताम् ॥
अहोरात्रैः ससन्धिकैरर्धमासैर्मासैर्ऋतुभिः[6] ।
परिवत्सरैः संवत्सरस्य कृतिभिरन्तरन्यान्पितॄन्दधे ॥

---

1. ये दिवि ये समुद्रे or दिवि ये समुद्र Br. 2. क्षेष्टाः Devapāla. 3. ०देवतासु Br.; देवता च DCT. 4. कव्यं elsewhere Br. 5. पाथम् Br. 6. ०र्धमासैश्च मासै० Devapāla.

यद्वः क्रव्यादजहादेकमङ्गं पितृलोकं जनयञ्जातवेदाः ।
तद्व एतेन पुनराप्यायतामरिष्टासः पितरो मादयध्वम् ॥
स्वधां वहध्वममृतस्य योनिं यात्र स्वधा पितरस्तां भजध्वम् ॥
पृथिवी दर्विरक्षिता तृप्तिः स्वधानुपदस्ता तां पृथिवीं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तामग्निरिव पृथिवीमुपजीवासौ ये चात्र त्वान्वेषा ते स्वधा ॥ अन्तरिक्षं दर्विरक्षिता तृप्तिः स्वधानुपदस्ता तामन्तरिक्षं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तां वायुरिवान्तरिक्षमुपजीवासौ ये चात्र त्वान्वेषा ते स्वधा ॥
द्यौर्दर्विरक्षिता तृप्तिः स्वधानुपदस्ता तां दिवं दर्विमक्षितां तप्तिं स्वधामनुपदस्तां सूर्य इव दिवमुपजीवासौ ये चात्र त्वान्वेषा ते स्वधा ॥ येऽत्र पितरः प्रेता युष्मांस्तेऽनु य इह पितरो जीवा अस्मांस्तेऽनु । येऽत्र पितरः प्रेता यूयं तेषां वसिष्ठा भूयास्थ य इह पितरो जीवा वयं तेषां वसिष्ठा[1] भूयास्म ॥
एतानि वः पितरो वासांसि । अतो नोऽन्यत्पितरो मा यूढ्वं । वीरान्नः पितरो धत्त[2] ॥
ऊर्जं वहन्तीरमृतं घृतं मधु पयः कीलालं परिस्रुतं स्वधा स्थ पितॄन्मे तर्पयत ॥
मा मे क्षेष्टा बहु मे पूर्तमस्तु ब्रह्माणो मे जुषन्तामन्नमन्नम् । सहस्रधारममृतोदकं मे पूर्तमस्त्वेतत्परमे व्योमन् ॥
येऽग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तस्ता यान्तु परां गतिम् ॥
यन्मे रामः शकुनिः श्वापदश्च यन्मेऽशुचिर्मन्त्रकृतस्य प्राशात् । वैश्वानरः सविता तत्पुनातु तस्मिन्पूते देवता मादयन्तां तेन पूतेन पितरो मदन्ताम् ॥
देवाश्च पितरश्चैतत्पूतमत्रोपजीवन्तामास्मिंल्लोके मां धत्त ॥ जीवेम शरदः शतं पश्येम शरदः शतम् । अथास्मभ्यमूर्जं धत्त ज्योतिर्धत्ताजरं न आयुः ॥

1. वर्षिष्ठा Devapāla. 2. दत्त the Lahore ms. of Br; cp. Ād on LXIII. 15.

यदन्तरिक्षं...( K. IX. 6: 109. 19–20 )...दुष्कृता ॥
तृप्यन्तु भवन्तः पितरो ये च भवतोऽनु ये चास्मास्वाशंसन्ते तृप्यत। तृप्यन्तु भवन्तः पितामहा ये च भवतोऽनु ये चास्मास्वाशंसन्ते तृप्यत। तृप्यन्तु भवन्तः प्रपितामहा ये च भवतोऽनु ये चास्मास्वाशंसन्ते तृप्यत। तृप्यन्तु भवत्यो मातरो याश्च भवतीरनु याश्चास्मास्वाशंसन्ते तृप्यत। तृप्यन्तु भवत्यः पितामह्यो याश्च भवतीरनु याश्चास्मास्वाशंसन्ते तृप्यत। तृप्यन्तु भवत्यः प्रपितामह्यो याश्च भवतीरनु याश्चास्मास्वाशंसन्ते तृप्यत ॥
दातारो नो[1] ऽभिवर्धन्तां[1] वेदाः सन्ततिरेव च। श्रद्धा च नो मा विगमद्बहुदेयं च नो अस्तु ॥
अन्नं च नो बहु भवेदतिथींश्च लभेमहि। याचितारश्च नः सन्तु मा च याचिष्म कं चन ॥
शं नो भवन्तु....( K. XIII. 14: 196. 9–10 )...अमीवाः ॥[2]
वाजे वाजे..... ( K. XIII. 14: 196. 11–12 )...देवयानैः ॥
आ मा वाजस्य...( K. XIV. 1: 200. 15–16 )...गम्यात् ॥

VIII. The Sūkta of the adbhutaśānti ( LXXII. 3 )[3].

यन्नो भयं गृहमागादबुद्धं यद्देवतः पितृतो यन्मनुष्यतः।
अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः ॥१॥
यदद्भुतं प्रहितं नो अमित्रैर्गृहे निखातं यदि वापि क्षेत्रे।
अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः ॥२॥
यदद्भुतं प्रहितं नो अमित्रैर्गवां गोष्ठे यदि वा पशूनाम्।
अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः ॥३॥
यदारोहच्छकटं यद्रथं गौरात्मवधे ज्ञातिवधाय सृष्टः।
अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः ॥४॥
यां गोमायुर्वदति यामुलूको याश्च वाचो अशिवा[4] वदन्ति।

1. नः प्रवर्धन्तां Devapāla. 2. Only given by Br. 3. The text of this sūkta is found in Devapāla, Br., T[1], T[2] and Bo[1]. 4. Devapāla : अशिवाः सृगाल्यः।

अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः ॥५॥
यद्धेनुर्धेनुं धयति श्वा वा श्वानं खादति रासभे युगे ।
अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः ॥६॥
चन्द्रग्रहे सूर्यग्रहे यद्भयमुल्कापाते भूमिचलेऽवस्फूर्जे[1] ।
अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः ॥७॥
यदद्भुतं यदिह किंचिद्भूतं[2] भविष्यदभवद्यदिह[3] कर्हिचित् ।
अग्निर्यविष्ठः प्रणुदातु तद्भयं शं नः प्रजाभ्यः शमु नः पशुभ्यः ॥८॥



1. Devapāla : अवस्फूर्जः विद्युत्पातः । 2. Mss. exc. Devapāla insert भव्यं । 3. ०ष्यदभवत्यादिह D, ०ष्यदभवादिह A. ०ष्यदभवद्य Br., ०ष्यदभवद्यदि T[a].

# INDEXES.

## I. List of the Mantras quoted.

### A. From the printed Kāṭhaka.

B. Mantras outside the printed Katha texts.

---

## II. List of remarkable words.

---

# CORRIGENDA.

| Page | Line | |
|---|---|---|
| iii | 12 from below— | "and' must be cancelled ("writing, though"). |
| v | 15 | read: ०यणीयायामुक्ताः |
| vi | 5 from bottom | read texts, |
| vii | 9 | read for convenience's sake, |
| vii | 16 | ,, critical |
| viii | 11 | ,, Kāthakagrhya- |
| 1 | ,, | ,, Ādityadarśana' |
| 4 | 15 | ,, पर्पटः |
| 4 | 18 | , ०विशेषः |
| 7 | 2 from bottom | ,, Thus T, A: |
| 8 | 1 | ,, धारयेत |
| 8 | 13 | ,, स्नान |
| 8 | 6 from bottom | ,, वास्तंगतेन |
| 16 | 7 | ,, स्नानम् |
| 45 | 13 | ,, उदीच्यो |
| 86 | 1 from bottom(text) | ,, द्वे तृण० |

| Page | Line | |
|---|---|---|
| 89 | 2 from bottom | read दुर्भेण instead of दुभेण |
| 91 | 1 | ,, पूषा त्वेतो |
| 108 | 5 from bottom | ,, ०मार्नीये० instead of ०मानाये० |
| 122 | 14 | ,, एवंविध० |
| 139 | 10 | ,, मधु instead of मुधु |
| 148 | 6 | ,, ०कर्मविधिना वाज्य० ( separated ) |
| 149 | 8 | ,, दर्शनमा० |
| 150 | 3 | ,, ज्योतिःशास्त्र० (united) |
| 156 | 2 | , प्रदक्षिणं instead of ०णां |
| 157 | 13 | ,, तानुप्यमानान् instead of तानुत्य० |
| 159 | 5 | cancel the figure 2 and insert the following line आ०। सर्पिष्मदिति व्याख्यातम्[2]॥ |
| 160 | 4 | read ब्राह्मणस्येति |
| 227 | 5 from bottom | ,, "were" instead of "more" |
| 236 | 8 ,, ,, | ,, lost ,, ,, last |
| 245 | 1 ,, ,, | ,, Ahnencult |
| 257 | 3 ,, ,, | ,, Visnusmrti |
| 265 | 1 ,, ,, | ,, lost instead of last |
| 266 | 2 ,, ,, | ,, वाक् ,, ,, वाक |
| 267 | 1&2 ,, ,, | ,, Amsterdam and deel |
| 272 | 16 | ,, श्राद्धे instead of श्राद्धं |

## दयानन्द महाविद्यालय संस्कृत-ग्रन्थमाला ।

### * प्रकाशित ग्रन्थ *

| | |
|---|---|
| १—अथर्ववेदीया पञ्चपटलिका | १॥) |
| २—ऋग्वेद पर व्याख्यान | १।) |
| ३—जैमिनीय उपनिषद् ब्राह्मणम् | २॥) |
| ४—दन्त्योष्ठविधिः | ॥) |
| ५—अथर्ववेदीया माण्डूकी शिक्षा | १) |
| ६—अथर्ववेदीया बृहत्सर्वानुक्रमणिका | ४) |
| ७—रामायणम्, अयोध्या काण्डम्, ४ अंक ( North-Western recension. ) | ६) |
| ८—वैदिक कोष ( प्रथम भाग ) | १२) |
| ९—काठकगृह्यसूत्र | ७) |

### यन्त्रस्थ ग्रन्थ

१—रामायणम् अयोध्याकाण्डम्, Fasc. V. सं० पं० रामलभाया

२—चारायणीय शाखा मन्त्रार्षाध्यायः । सम्पादक भगवद्दत्त

३—ऋग्वेद भाष्यम् उद्गीथाचार्य प्रणीतम् ऋ० १०।५—१०।८३॥
सम्पादक-भगवद्दत्त ।

SUPDT. RESEARCH DEPARTMENT,

*D. A. V. College, Lahore.*

